(पुणे) महाराष्ट्रराज्यशासन-भारतकेन्द्रशासन-पुरस्कृता विश्वप्रिया (मुम्बई)
शृङ्गेरी शारदापीठ-श्रीशंकराचार्य संस्कृत-'शंकरकृपा'-त्वेन स्वीकृता

कार्तिक मार्गशीर्ष १८९२ नोव्हेंबर डिसेंबर १९७०




वर्षम् १२ अङ्काः १-२-३

वार्षिकमूल्यम् रू. १० ॥ अस्य अङ्कस्य रू. १०

## मङ्गलम्

यः स्फाटिकाक्षगुण-पुस्तक-कुण्डिकाढ्यैः
व्याख्या-समुद्यतकरां शरदिन्दु-शुभ्राम्।
पद्मासनां भगवतीं भवतीम् उपास्ते
गेयः स विश्वकवि-तार्किक-चक्रवर्ती ॥

अम्बास्तवे पञ्चस्तवी

दीपावली-नूतन-वर्षोत्सवे शुभचिन्तनम्

संपादकीयम् —

## द्वादशं वर्षं पत्र-प्रकाशन-साहसस्य

शारदा । संस्कृत-विश्व-भूषणम् । स्वायुष द्वादश-वर्षं प्रविशति । अस्मिन् दीपावली महोत्सवे । महता प्रमोदेन । वर्धिष्णु वैभवेन । विशेषाङ्क-प्रकाशनेन । युगपुरुष-विवेकानन्द-पुण्यस्मरणेन । महती तत्र तप साधना । बौद्धिकी । आर्थिकी । शारीरिकी च ।

विशेषाङ्कसाधने प्रधान चरितम् । मित्रवरै डॉ पळसुले (ग वा) अण्णाराये सत्यह्म् अक्षरीकृतम् । प्रकृतिस्वास्थ्यम् अविगणय्य । मासषट्क व्ययीकृत्य । विविधभाषाग्रन्थरत्नाना पृष्ठसाहस्री समालोच्य सिद्धान्तता नीतम् । अयम् अभिमानविषय 'शारदा'काराणाम् । इदम् आस्माकीन भाग्य मन्यामहे । अग्रत सरन्तु शारदोपासका नवनवीनेषु विषयेषु समर्थतया स्वीया लेखनी धन्यता नेतुम् । सिद्धा सन्ति 'शारदा'-कारा तत् तत् सर्वं मुरस-ललित चेत् प्रकाश प्रापयितुम् ।

श्रृङ्गेरी द्वारका श्री चरणैस्तु समय समय प्रसादवितरणेन सनाथी-कृता पत्रिकेयम् । इत्थमेव तेषा अखण्डकृपा प्रार्थ्यते साञ्जलिबन्धम् ।

पत्रसचालन यथा बौद्धिक बलम् अत्यावश्यक तथा शारीरिकम् अपि । अहर्निश सस्कृत-प्रसारार्थं राज्ये स्वीये राज्यान्तरेषु च सचारपरा 'शारदा'कारा प्रार्थयन्ते भगवन्त धन्वन्तरिम् अनामय-स्वास्थ्यार्थम ।

पत्रसचालन कठिनम् । तत्रापि विशेषाङ्कसाधन कठिनतरम् । बहु-व्ययमात्रसाध्यम् । देहीति प्रार्थना, दीयताम् इति याचना वा तत्क्षणाद् एव नाशयति देहस्य देवतापञ्चकम् । धी ह्री-श्री-कान्ति-कीर्ति सज्ञकम् । 'शारदा'कारै सर्वत्र सचारे कृते विविधनगरेषु शारदोपासकै यत् विज्ञा-पनादि वितरणेन प्रचुर साहाय्य कृत तत्र उपरिनिर्दिष्ट शारीर दैवत-पञ्चक सुरक्षितम इति कै शब्दै कृतज्ञता प्रकटनीया ? श्रीमान् काका-साहब मरा० (मिरज), श्रीमान् करमसिश्रेष्ठी सोमैया, (मुम्बई), श्रीमान् बाबूराव पारखे, श्रीमान् वसन्तराव वैद्य, महाराष्ट्रमन्त्री श्री आबासाहब पारवेकर, करवीर नगराध्यक्ष प्रभृतीना विषये कृतज्ञा वयम् इत्येव श्रूम । इत्थम् एव इतरे धनिन लक्ष्मी सरस्वती-साहचर्यम् अनुभूय स्वात्मान कृतार्थयन्तु इत्येव प्रार्थयामहे ।

धर्ममान्या, राजमान्या, लोकमान्या च इमा पत्रिका विश्वप्रिया विश्वमनोनुकूला सपादयितु सर्वेषा सर्वात्मना सहकार्यं प्रार्थ्य शुभचिन्तनेन सावत्सरिकेण प्रविशाम द्वादश वर्षम् अस्मत्-पत्रप्रकाशनसाहसस्य ।

* * * * * * * * * * * * * * * * * * * * * * * * * * * *

# द्वारका-शृङ्गेरी-पीठ-शुभाशीर्वाद-प्रसादः





द्वारका

दि २५ १० ७०

शारदा पत्रिका स्वामि विवेकानन्दविशिष्टाङ्क प्रकाशमति भारतस्य उपराष्ट्रपति-श्रीगोपाल स्वरूप पाठक महोदयाना हस्तेन इति विज्ञाय जगद्गुरु श्री चरणा प्रसन्नमानसा शुभाशीराशिपर पराम् आकलयन्ति चिरायुर् वर्धता शारदा एतादृश विशिष्टा नि र्माणि कुर्वाणा इति।

निवेदक

महाबलभट्ट

(मन्त्री)

श्रीशृङ्गेरी

दि २० १० १९७०

दीपावलीमहोत्सव न सर्वथा प्रीतिकर उत्सव। तदा श्रीशारदाया विशिष्ट अङ्क प्रकाशम् एष्यति। श्री विवेकानन्दस्वामिन भारतादन्यत्रापि भारतीयाध्यात्म-शास्त्रस्य विशिष्ट महिमान बाढ प्राकाशयन। भारतस्य यश सर्वत्रापि प्रासारयन। विशिष्टपुरुषाणा तेषा सारस्वत जीवित प्रकाश्य कृतज्ञता प्रकटयितु अभीप्सता भवता उद्देश सफलो भूयादिति।

वे पद्मनाभोपाध्याय (सचिव)

* * * * * * * * * * * * * * * * * * * * * * * * * * *

# अनुक्रमणिका

वेदोऽखिलोधर्ममूलम्

फोन :३५४५ तार : देवहाटकेश

# श्रीवल्लभराम-शालिग्राम-साङ्गवेद विद्यालयः

रामघाट, वाराणसी

दिनाङ्क : २४–१०–७०

श्रीमत्सु वसन्त गाडगीळ महोदयेषु साशीर्वाद निवेदयति। अधिगत भवदीय पत्रम्।

आगामि-दीपावल्यवसरे "शारदा" पत्रिकया विवेकानन्द-विशेषाङ्क प्रकाशयिष्यते इत्यवगत्य महान् सन्तोष समजनि। पत्रिकेयमुत्तरोत्तरमभिवर्धतामिति भगवन्त विश्वेश्वर प्रार्थये। इति– पू. गुरुचरणानाम् (पण्डितराज राजेश्वरशास्त्रिद्राविडानाम्) आज्ञया,

रा. शा. होसमने

---

Dr C D DESHMUHH

Tel 71323
"RACHANA"
BAGH AMBERPET
VIDYANAGAR
HYDERABAD-'A P

सशारदविशारदान् श्री वसन्त अ गाडगीळ महोदयान् प्रति

सादरप्रणामपूर्वं आवेदनं –

भवद्भिर्हितेन दीपावली-नूतनवर्ष-शुभाशासनेन साकमर्पितेन शारदा-नियतकालिकस्य एकादशवर्ष-प्रारम्भाङ्कद्वयेन च भृशमनुगृहीतोऽस्मि।

गैर्वाण्या अनुरक्तनमेष्वेव इति कतिपयहायनेभ्यो भवन्तमभिजानामि। तेनानुरागेण प्रचोदिता च भवन्तोऽहर्निशं संस्कृतवाग्विलासार्थं प्रयतन्त इति स्वानुभवात्सम्यगवैमि। वर्षदशकावधौ भवता शारदा-सम्पादनेनातिनिपुणेन प्रादायि संस्कृतोपासिभ्य उपबृंहमाणाऽवसर स्वान्त प्रसादस्य यस्य कृतेऽभिनन्दनार्हा भवन्त । स एष भवतामभिनिवेशो वर्षानुवर्षं वर्धिष्णु कल्याणानुबन्धी भवतादिति मे हार्दिकी शुभ-कामना।

३-११-७०

भवता स्नेहाङ्कित
चि द्वा देशमुख


भिडे ऑण्ड सन्स
प्रा.लि.

## शारदा–द्वादशवर्षारम्भे शुभाशिषः ॥

समग्रं भारतं दृष्टं जिह्वाग्रे शारदा स्थिता।
आचार्यौ वरदातारौ किमन्यद् भवदीप्सितम् ॥
ऋषिवद् वदनच्छायो ऋषि-कार्य-परंपराम्।
भवान् विस्तारयत्वग्रे दृढकायः शतं समा ॥

टिळकवाडी, बेळगाव — श्यामसुन्दर न पुणेकर

---

## वेदान्तो मूर्तिमान् स्वामी विवेकानन्द उच्यते

रामकृष्ण-महाशिष्यं तत्त्वज्ञान-प्रचारकम् ॥
विवेकानन्द-नामानं योगिवर्यं नमाम्यहम् ॥ १
न केवलं भाषणेन वेदान्तो विशदीकृतः ॥
परं स्वाचरणात्तेन साकार इव दर्शितः ॥ २
सभायां सर्वधर्माणां भारतस्योऽज्ज्वलं यशः ॥
त्रिखण्ड-विदितं येन कृतं, तस्मै नमो नमः ॥ ३
दर्शने प्रतिमायास्ते सर्वेषां स्फूर्तिदं परम् ॥
अन्वर्थं च तथा नाम ध्रुवं बोधप्रदं नृणाम् ॥ ४

योगायोग सदाशिव पेठ, पुण्यपत्तनम् ३० — प्रा. नी. शं. नवरे

## “ एतैः सुरक्षितं प्रधानं वेदाङ्गं व्याकरणशास्त्रम्। ”
## —शृङ्गेरी-वाक्यार्थ-सभायां पं. आठलेकर-प्रशंसा

श्रीशृङ्गेरी-जगद्गुरु महासंस्थाने सुचिरात् प्रतिसंवत्सरं प्रवर्तमाना श्रीमहागणपति - वाक्यार्थ - महासभा अस्मिन् साधारण-संवत्सरे शृङ्गगिरौ नृसिंहवने श्रीमहागणपति - सन्निधौ आविनायकचतुर्थीत आ च पूर्णिमायाः श्रीजगद्गुरु श्रीमदभिनवविद्यातीर्थमहा-स्वामिनामाध्यक्ष्ये प्रावर्तत। नैकैः विद्वत्पण्डितैर्मण्डिता आसीदियं गोष्ठी। सदस्यास्तु खलु नानाशास्त्रदर्शननदीष्णा वादनिष्णात-मतयः स्वान् स्वान् प्रस्तावान् प्रस्थापयामासुः प्रतिदिनम्। प्रावर्धन्त पुनरुत्तरोत्तरं पूर्वोत्तरपक्षाः।



प. पू. शृङ्गेरी ' श्री 'चरणाः

प्रतिदिनं नवनवाः समुपागमन् समिमन्त्रिता ज्ञानवृद्धास्तपोवृद्धा वयोवृद्धाश्च विद्वद्वराः। प्रायेण दक्षिणभारतवर्तिनां विपश्चितां सम्मेलनमिवासीदियं वाक्यार्थमहासभा नाम। निमन्त्रितानामपि केषाञ्चिद् विदुषाम् अनुपस्थितिरासीत्कार्यकलापबाहुल्येन। सत्यपीत्थं नासीत्तु जनसंख्याता न्यूना महत्या संख्यावताम् अस्यां वाक्यार्थसंसदि वयमपि।

अस्यां च विद्वज्जनपरिषदि समुपस्थिताः किल पुण्यपत्तनस्थ पुणे-विद्यापीठ प्रगत-संस्कृताभ्यास केन्द्रात् पं. आठलेकर श्रीपादशास्त्रिणः भाद्रपदशुद्ध १३ रविवासरे सायम्। दर्शनेन अनुगृहीतास्ते श्रीचरणैः। सुनिश्चितश्च तेषां कृते समयः अथ चतुरनन्तचतुर्दशीदिने प्रथममेव सर्वेषाम्। अथापरेद्युः नित्यक्रमम् अनुसृत्य समारब्धः सन् सभाकार्यम् अपराह्णे पञ्च वादनसमये। तत्र स्वयमेव श्रीचरणैः पं. आठलेकरशास्त्रिणां तथा तेषां विषयस्य च परिचयः प्रदत्तः। आठल्येशास्त्रिणः सोदाहरण

सविस्तर च स्वाभिप्राय प्रकाशयितुम्। प्रदत्तश्च समय एवहोरामात्र तेषा वृत्ते।

तत सद्य समासाद्य व्याख्यानस्थान प आठल्येकर श्रीपादशास्त्रिण व्यगदन्–"अस्या पदवाक्यप्रमाणज्ञाना महासदसि पाणिनीय-व्याकरणार्णव-तीरवर्ती जनोऽयं विलावकाशदानेनानुगृहीत तदर्थं सर्वथा कृतज्ञोऽस्मि श्रीचरणानाम्। पाणिनीयव्याकरणाध्ययन-विषय मम तावन्मतमिद यद् सिद्धान्त कौमुदीमार्गेण पाणिनीयव्याकरणाभ्यास सक्षपेण शब्दसिद्धि-कामयमानाना प्रकाम हितकर एव। पर सूत्रकारस्य अनन्यतुल्य रचनाकौशल्य विचारसौन्दर्यं च जिज्ञासमानेन प्रतिपदमवश्य पुरत स्थापनीया काशिकाख्या व्याख्या। अस्या च किल व्याख्याया विद्यन्ते आमत-नक्षत्रमहत्र-



प श्रीपादशास्त्री आठलेकर

(२७,०००) समितानि उद्धरणानि। तत्र तावद् यथा वेदब्राह्मणारण्यक-सूत्रगतानि सन्त्युद्धरणानि तथा रामायणमहाभारतकाव्यनाटकाख्यायिका-भाणगतान्यपि सन्ति। नैतेषा सर्वेषा सख्या २००० त समधिका। तेन एव शब्दरूपाणामुदाहरणाना सख्या २५००० इत्यपि सुस्पष्टम। एतावता काशिकाया पर्याप्तोदाहरणवितरण कोऽपि वदान्यता स्फुटीभवति' इति।

अत्र विषये शास्त्रिवर्यैं सपादितस्य अतिमहत कार्यस्य कोऽप्येकदेश श्रीचरणै स्वय प्रत्यक्षीकृत। तत्र तावत् एकस्या पत्रिकायाम् एकम् उद्धरणमिति २७००० प्रमिता पत्रिका किल विलिखिता सन्ति शास्त्रिवर्यै। प्रतिपत्र च पुन रूपनिष्पादनार्थं यावन्ति सूत्राणि भवन्त्यावश्यकानि तेषा केवल क्रमाङ्का एव निर्दिष्टा विद्यन्ते। इय सख्या केषुचित् पत्रेषु ३० पर्यन्त गता विद्यते। कस्मिन्नपि पत्रे नेय सख्या १० त न्यूना भवति। एतादृशानि पत्राणि साक्षात्कृत्य सा पण्डितमण्डली सचित्रेव समभवदित्यत्र नास्तिमात्र चित्रम्।

एव विद्वन्मनीषानिकषायमाणायामस्या परिषदि प आठलेकरशास्त्रिभिराविष्कृत खलु स्वाभिप्राय । अथ ते प्रावोचन्– " यथा प्रयोगप्रधान नाटचशास्त्र तथा प्रक्रियाप्रधान किल व्याकरणशास्त्र भवति। काशिकान्त - पातिन यस्य कस्यापि रूपस्य विषये प्रष्टव्योऽहमिति सम्प्रार्थिता सा वाक्यार्थमहासभा प आठलेकरशास्त्रिभि ।

अनन्तर केरलीयै पण्डितै ' रामाणाम् ' इति रूप पृष्टम् । आवश्यकानि पञ्चदशाधिकानि सूत्राणि अङ्करूपेण विलिख्य साधित पुनस्तदतत् साधद्वयमिनिमिषात्मकेन कालेन। ततो ' भवति ' इति रूप पृष्ट विद्यानिधिभि प रामचन्द्रशास्त्रिभि । तस्य सिद्धि उपपञ्चविंशतिप्रमितै सूत्रै सम्पादिता निमिषत्रयणैव तावत् । अनन्तर द्विरुक्ताना त्रिरुक्ताना च सूत्राणा क्रमाङ्का कार्याणि च पृष्टानि कुतूहलिभि कैरपि च्छात्रै । तेषाम् उत्तराणि यथा कैनचिद्वर्तमानदिनाङ्क कथ्यते तया रीत्या कथितानि शास्त्रिभिरेभि ।

## व्याहृत सानन्दम् अभिनन्दनं विदुषां परिषदा

अथ केरलीयै के एन एम दिवाकरन् नम्पुद्रीपादमहोदयै व्याकरणाचार्य ' बहुल छन्दसि ' इति सूत्रस्य क्रमाङ्का कार्याणि च देयानि इति सदिष्टा प श्रीपादशास्त्रिण । अष्टाध्याय्यामेकादशवार स्मृत स्याम्य सूत्रस्य अङ्कलेखन कायलेखन च केवल सार्धनिमिषात्मकेन कालेन सपादित शास्त्रिभि । पर तत्सर्वं काशिकाकौमुदीग्रन्थालोडनन सूचीसहायेन च अवलोकयता परीक्षकाणा व्यतीयाय पञ्चनिमिषाधिक काल । अयमत्र विशेष यत केषुचित्स्थलेषु पूर्ववर्तिना त्रिचतुराणा, पञ्चषाणा सूत्राणा सम्यक् स्मरण विना नैव निर्णेतु शक्य ' बहुल छन्दसी 'त्यस्य प्रयोगस्य कार्यम । पर विनैव त्रुटि झटिति तडिद्वेगन सर्वं यथास्व लिखितवता प श्रीपादशास्त्रिणा स्वय श्रीचरणैरस्मयया च विदुषा परिषदा सानन्दमभिनन्दन व्याहृतन् ।

अस्यां सदसि शास्त्रिवरैरेतैरुदीरितानां लिखितानां च सूत्राङ्कानां संख्या आसन्न १३० प्रमितमावर्तत। नैकापि त्रुटिं पदमकरोत् क्वापि नाम। प्रत्युत काशिका-सूत्र-सूची गताः काश्चन त्रुटय एव अनेन प्रसङ्गेन दृष्टिपथमवतीर्णाः पुनरस्या विद्वद्गोष्ठ्याः ।

अन्ततश्च नानाशास्त्रकृतभूरिश्रमाः मध्यस्थ-पदम् अलङ्कुर्वाणाः पण्डितोत्तमाः विद्यानिधयः रामचन्द्रशास्त्रिणः (बेङ्गलोर) सानन्दम् अवदन् "यत्र तावत् पञ्चप्राणभूत (५५५) प्रमितानां बादरायणसूत्राणां क्रमाङ्कस्मरणमप्यस्माकमशक्यप्रायं भवति तत्र पूर्वापरनित्यान्तरङ्गापवादलक्षणं किमपि विलक्षणं तत्त्वं हृदिकृत्य प्रणीतानां सूत्राणां क्रमाङ्कान् अनुज्झितक्रमम् अकृतकालक्षेपं तत्तत्कार्यनिर्देशपुरस्सरं लीलया कथयतां च श्रीपादशास्त्रिणां किमन्यदभिनन्दनात्करणीयं सभयानया पुनः? सर्वथा सुरक्षितं भगवत आम्नायस्यैकम् अङ्गमेभिः। यदाह महाभाष्यकारः 'प्रधानं च षट्स्वङ्गेषु व्याकरणम्। प्रधाने च कृतो यत्नः फलवान् भवति'। एतेषामपि प्रयत्नः सफल इत्येव ब्रूमः" इति।

समनन्तरं कथमयं साधितो योग इति तया परिषदा पृष्टे सति सर्वोऽप्ययं पुणे-विद्यापीठ प्रगत संस्कृताभ्यासकेन्द्रवर्तिना डॉ. रा. ना. दाण्डेकर - प्रमुख - सर्वतोमुखविद्वत्त्वशालिना सान्निध्यस्य महिमेति कृतज्ञतापूर्वकं निवेद्य उपसंहृतः स्वकीयो विषयः शास्त्रिवर्यैः ।

शारदा-कार्यालय
पुण्यपत्तनम् ३०

'शारदा'-प्रतिनिधि

## ॥ महालक्ष्मीपुरस्थोऽयं ज्ञानदीपः प्रकाशते ॥

महाराष्ट्रदेशे प्राचीनसरण्या संस्कृतस्य अध्ययनम् अध्यापनं च कुर्वत्सु अङ्गुलिमात्रगण्येषु विख्यातेषु प्रकाण्ड पण्डितेषु अन्यतमा एव विद्यन्ते प. बाळाचार्याः खुपेरकराः कोल्हापुरनगर निवासिन । वर्षे-स्यास्य स्वातन्त्र्यदिने 'राष्ट्रिय-पण्डितत्वेन भारतशासनेन संस्कृ-तोऽयं महापुरुष न केवल संस्कृत-मराठी–भाषा–द्वयस्यैव गौरवं वर्धितवान् अपि तु 'तीर्थीकुर्वन्ति तीर्थानि' इति न्यायेन कोल्हापुर-नगरीम् अपि सुष्ठु अलङ्कृतवान् । यशसि स्पृहा वा निरभिलाष जीवनगतान् नैकान् दु.खाघातान्



प. खुपेरकर बाळाचार्य

धैर्येण सत्त्वेन च प्रसह्य 'विपदि धैर्यम् अथाभ्युदये क्षमा' इत्यनु-सारम् आचार धारयित्वा अथ विवेकधन अद्यापि युवानमपि लज्जाय-मानेन उत्साहेन संस्कृत मराठी-भाषयो अध्ययनाध्यापन–ग्रन्थ-सम्पा-दनादीना कार्ये निरत एव दृश्यते । 'ब्राह्मणेन निष्कारण षडङ्गो वेदोऽ-ध्येयो ज्ञेयश्च' इति श्रुत्यादेशानुसार निरपेक्षा तेषा ज्ञान-तपस्या । 'व्यसन श्रुतौ' इति तेषा लक्ष्यम् ।

प आत्मारामशास्त्री पित्रे तथा म म वासुदेवशास्त्री अभ्यङ्कर इत्यादिभ्य गुरुभ्य विद्या प्राप्य बडोदरशासनस्य 'काव्यभूषण'-अलङ्कार-भूषण'-इत्यादिपरीक्षा उत्तीर्णास्ते । नैकवर्षाणि वेदशास्त्रोत्तेजकसभादीना परीक्षासु परीक्षक-त्वेन कार्यं सपादित तै । पूर्वम्मुम्बईप्रान्ते शासकीय-माध्य-मिकशालासु तदनन्तर च 'डेक्कन कॉलेज पुणे' इत्यत्र संस्कृतस्याध्यापन कुर्वताऽनेन छात्रेषु संस्कृतस्य गभीराध्ययने विशेषाभिरुचि समुत्पादिता । द्वैताद्वैतादि भारतीय-दर्शनेषु तेषाम् असाधारणोऽधिकार । ज्ञानेश्वरी-

ग्रन्थस्य अध्ययनार्थं काश्मीर-शैवमतस्य विशेषम् अध्ययनं संविहितम्। भासकवे अविमारक-नाटकस्य विस्तृते उपोद्घाते एतै डॉ म म पा वा काणे महोदयानां प रुद्दीदास्ति-महोदयानां च भास-सम्बन्धिनां मतानां विहित निरास एतेषां विचार-सूक्ष्मतां प्रकटयति । 'जयमङ्गला' टीकासहितस्य वात्स्यायन-कामसूत्रस्य मराठी-अनुवाद महता प्रयत्नेन अश्लीलत्व-हीनं साधितं शास्त्रिभिः । कोषेऽपि अनुपलब्धानां वैषयिक शब्दानाम् अर्थाः तैरत्र सुयुक्ततया प्रदत्ताः । मराठी-साहित्य-संमेलनायथ्ये श्री ना गो चापेकर महाशयै मुक्तकण्ठं अनुवादस्यास्य भूरि प्रशंसा कृता। अस्यैव ग्रन्थस्य नवीनावृत्त्यर्थं विवेचनपूर्णा प्रस्तावना लिख्यते अधुना शास्त्रिभिः । आनन्दाश्रम-संस्कृत-ग्रन्थावल्यां प्रसिद्धस्य 'ब्रह्मसूत्र-सिद्धान्त-मुक्तावली' इति ग्रन्थस्य, मुम्बई-विश्व-विद्यालयेन च प्रकाशितानां 'समग्र मोरोपन्त मालाया' (१) मयूरत विकृत-संस्कृत काव्यानि, (२) मयूर भारत(सटीप सविवरणम्),(३) मोरोपन्त स्फुट-काव्य खण्ड १, २, ३ (सविवरणम टिप्पण्य) प्रस्तावना(४) कृष्णविजय (टिप्पण्य विवरण प्रदीर्घा च प्रस्तावना) इत्यादीनां ग्रन्थानां सम्पादनं कृतम् । महाभारतान्तर्गतस्य सनत्सुजातीयस्य मराठी-अनुवाद एतेषां रसिकत्वं, पाण्डित्यं च दर्शयति। 'वेदशास्त्रदीपिकाया' प्रसिद्ध 'साहित्य-शास्त्र' इति निबन्ध गोरक्षनाथकृत 'महार्थमञ्जरी' ग्रन्थस्य परिचायक लेख च रसिकै विद्वद्भि च समानितोऽभूत् । 'शिवराजभूषण' इति हिन्दीकाव्ये विद्यमानानाम् अलङ्काराणां योजना संस्कृत-काव्य-शास्त्रानुसार कथं विरचिता इति सविस्तरं दर्शितं तै स्वनिबन्धे। कै प्रा शि म परांजपे महोदयै लिखितस्य कालिदासस्य दोषदर्शकस्य लेखस्य उत्तररूपेण प्रसिद्धिं नीतेन 'स्वराज्यतत्त्वांचा जावई शोध' इति शीर्षकं दधानेन एतेषां लेखेन रसिकेभ्य प्रशंसा प्राप्ता। पाण्डुरङ्ग शर्मकृतस्य 'स्वानन्द जीवन' इति ग्रन्थस्य प्रस्तावना, हरिहरेन्द्रकृत राष्ट्रभाष्य नाम 'अमृतानुभवटीका' इत्यस्य प्रस्तावनाविवरणे, श्री गो स सरदेसाईकृताया राम गीतायाः सम्पादनम्, इत्येते लेखा तेषां व्युत्पन्नतां प्रदर्शयन्ति । 'कौटिलीय-अर्थशास्त्र (श्री ज स करंदीकर-हिवरगावकर), अभिनव-काव्य-प्रकाश (प्रा रा श्री जोग), छन्दोरचना (डॉ मा त्र्य पटवर्धन), उपनिषद्रहस्य (के ल दप्तरी) इत्यादिग्रन्थानां परीक्षणेषु सुपेरकराणां

* * * * * * * * * * * * * * * * * * * * * * * * * * * *

## पंडितखुपेरकरमहोदयानां प्रशस्तिः ।

माधवाचार्यतनयो बाळाचार्य उदारधीः ।
खुपेरकरवंशे च जातो विद्वत्प्रतिष्ठिते ॥ १
अष्टाशीतितमे वर्षे गौरवं प्रापितोऽधुना ।
'राष्ट्रपण्डित' इत्येवं शासनेन पुरस्कृतः ॥ २
आत्मानमेव विहितं नितरां गौरवान्वितम् ।
कृत्वास्य गौरवं नूनं शासनेन विजानता ॥ ३
आचारं ग्राहयत्येषः स्वयमप्याचरत्युत ।
शास्त्राध्ययनशीलत्वाद् आचार्याणां धुरि स्थितः ॥ ४
विप्रेण साङ्गवेदानां ज्ञानमध्ययनं तथा ।
निष्कारणं विधातव्यमिति ख्यातं श्रुतेर्वचः ॥ ५
व्रतमेतदनुसृत्य बाळाचार्यः प्रवर्तते ।
संस्कृतस्य मराठ्याश्च गम्भीराध्ययने रत. ॥ ६
व्यतरद् विविधा विद्या श्रद्धावान् अनसूयकः ।
छात्रवृन्दाय नियतं तपस्वी चाप्यवर्धयत ॥ ७
सफलं जीवनं यस्य श्रीकृष्णस्य प्रसादतः ।
नीरोगं लभताम् आयुस्स्वास्थ्यं दीर्घतरं च सः ॥ ८
एवं शुभेच्छां कुरुते श्रद्धां तच्चरणे दधन् ।
संस्कृते च तथा विप्रः महालक्ष्मीपुर-स्थित. ॥ ९

* * * * * * * * * * * * * * * * * * * * * * * * * * * *

तेजस्विनी प्रतिभा, निःस्पृहा वृत्तिः सर्वंकषं चापि रसिका दृष्टिः प्रतीता भवति ।

पुण्यनगरे 'श्रीशिवव्याख्यानमालायां' 'ज्ञानेश्वर व शैवागम' इति विषयमधिकृत्य पञ्च, 'न. चिं. केळकर व्याख्यानमालायां' च 'ज्ञानेश्वराच्या वाङ्मयाचा सांगोपांग अभ्यास' इति विषये षट् व्याख्यानानि तैः प्रदत्तानि यानि अधुना ग्रन्थरूपेण प्रसिद्धान्येव । गम्भीराध्ययनकारणात् स्वाध्यायितायाः एते महाभागाः महाराष्ट्र-शासनेन आहूताः ज्ञानेश्वरीसमीक्षितसंपादनार्थं (वैकुण्ठवासिभिः) प्रा. सोनोपंत दांडेकर-

महोदयैः सह । वर्षद्वयात् प्राक् कोल्हापुरनगरे गोखले-महाविद्यालये 'भारतीयदर्शनाना विकासम्' अधिकृत्य दत्तानि तेषा व्याख्यानानि अतीव उद्बोधकानि अधुना च शब्दबद्धानि ( Tape-Recorded ) सन्ति ।

गतवर्षे एते सपादित 'वनमालिमिश्रकृत श्रुतिसिद्धान्तप्रकाश श्रुतिसिद्धान्तदीपिका' इति ग्रन्थद्वयम् एतेषामेव छात्रेण डॉ प्र वा गजेन्द्रगडकरमहोदयेन शिवाजी-विश्वविद्यालयस्य सस्कृत-प्राकृत-ग्रन्थ-मालाया प्रकाशितम् । नैकानि वर्षाणि च खुपेरकरा शिवाजीविद्यालयस्य समान्यप्राध्यापकरूपेण स्नातकोत्तरछात्राणाम् अध्यापन कुर्वन्नासते । ज्ञानार्थिना प्राध्यापकाना तेषा गृह मुक्तद्वारमेव । शिवाजीविश्वविद्यालयस्य ग्रन्थालये स्थितराना हस्तलिखित-ग्रन्थाना सूचीकरणार्थं प्रार्थितास्ते कुलगुरुभि । अहो गुणग्राहिता कुलगुरुमहोदयानाम् । प्रतिदिन ग्रन्थालये होराद्वय यावद् एतत् कार्यं सम्पादयन्ति खुपेरकरा अधुनापि तत्र ।

बहव कोल्हापुरवासिन अपि जना न जानन्ति यत् खुपेरकरा स्थानीय-क्रान्तिकारकेषु अग्रगण्य इति । कोल्हापुरस्थक्रान्तिकार-काणाम् इतिहासलेखन प्रत्यक्ष प्रमाण नाम खुपेरकरमहाशया यैः 'इद ब्राह्ममिद क्षात्रम्' इति जीवनस्य महद्रूपम् अङ्गीकृत बुद्ध्यैव । निष्ठावन्त माध्वमतानुयायिन एते, किन्तु अन्येषु दर्शनेषु, दर्शने वा, अनुदार शब्दोऽपि न कदापि एतेषा भाषणे लभ्यते । अहो खलु औदार्यम् वेदाध्ययनात् समुत्पन्नम् । कोऽपि जिज्ञासु प्राध्यापक छात्रो वा, सामान्यो जन कृषको वा शास्त्रिणा गृह समागच्छतु आत्मीयत्वेन आगतस्य यथाशक्ति साहाय्य समाधान च करणीयम् इत्येव शास्त्रिणा लक्ष्यम् ।

'सत्पुरुष खलु हिताचरणैरमन्दम्
आनन्दयत्यखिललोकमनुक्त एव ।'

इत्येतस्या उक्त्या निदर्शनमेव शास्त्रिण ।

अधुना एकनेत्रज्योतिरपि ग्रन्थावलोकन कुर्वाणोऽय विप्र निरन्तर स्वाध्यायाभ्यसनरूपे वाङ्मये तपसि निमग्न भगवत्कृपया दृढस्मृतिरेव विद्यते । 'धीरोद्धता नमयतीव धरित्रीम्' इतीव तेषा शरीराकृति दर्शकस्य मनसि एतेषु आदर समुत्पादयति, तं सह सलापेन स वर्धते एव । पाण्डित्येन सह रसिकता आर्जव च, व्युत्पन्नत्वेन सह निरहकारिता, भूतकालानुभवस्य वर्तमानेन सह सयोजनम्, अध्ययनशीलाना जिज्ञासूना

छात्राणां साहाय्यदानम् इत्यादि मनुष्यत्व-श्रेष्ठ-कारणैः स्वभावविशेषैः क्षुपेरकराः वन्दनीयाः ' मनुष्य ' इत्यपि सर्वेषाम् ।

अष्टाशीतिवर्षं प्रविष्टाः शास्त्रिणः मानापमानयोस्तुल्यता गता एव । शासनेन तेषां गौरवं कुर्वता आत्मैव गौरवं नीत. । संमानोऽयं निरपेक्षाध्ययनस्य, निःस्पृहतपसः, विद्यैकधनस्य, निष्कलङ्कचारित्र्यस्य । अयं भवतु अस्माकम् आदर्शः । सर्वेषु क्षेत्रेषु ज्ञानदीप. निरन्तर प्रज्वलित. छात्राणां मार्गदर्शनं करोति । पं. क्षुपेरकरमहाशयाः आधुनिकाः महर्षय एव । ' गुणानां कर्तार. सुलभा लोके विज्ञातारस्तु दुर्लभाः ' इति महाकविभासेन उक्तम् । अधुना शासनेन गुणग्राहकता दर्शिता । शास्त्रिणः शासनं च कालिदासोक्त्या अभिनन्द्यते ' उभौ अपि अभिनन्द्यसत्त्वौ ' इति ।

कोल्हापुरम्

डॉ. त्र्यं. वि. द्रविड
एम्. ए. पीएच् डी.

# पुणे-विद्यापीठे नूतनः संस्कृत-विभागाध्यक्षः

## ‘पण्डितजी’—डॉ. शिवरामशास्त्री द. जोशी



डॉ दाण्डेकर

पुणे विद्यापीठे किल सुप्रतिष्ठिते दिङ्नागश्रुतिरत्नभूमिते (१९४८) ख्रिस्ताब्दे। तत प्रभृति दिङ्नागायमान-प्रज्ञा-वैभवैः डॉ रा ना दाण्डेकर-महोदयै संस्कृत-प्राकृत-भाषा-विभागाध्यक्षपदं विभूषितमासीत्। गुरुवर्यान् दाण्डेकरान् अधिकृत्य अस्मिन् स्वल्पकाल-मर्यादिते निबन्धे नैव सुशकं लेखनम्। भविष्यति काले स्वातन्त्र्येणैव तत्करणीयं स्यात्। यतिष्येऽहं तदर्थम्।

अतीते वर्ष-चतुष्टयात्मके समये मया साक्षात्कृता दाण्डेकरा। श्रुता तेषां वेदवाणी। अधिगता मन्त्रार्थकरणनिपुणता। ज्ञात मन्त्रार्थसम्पादनतन्त्रम्। सम्प्राप्ता नवीना दृष्टि। हृदि कृता व्यासङ्गसङ्गता अर्थभारवती भारती। सपादिता सारवन्तो विचारा। गृहीत कोऽपि सन्देश। अवतारितश्च यथाशक्ति कृतिमार्गे। अस्ति मे प्रयत्न तेभ्य कमपि विशेषमधिगन्तुम्। महाभारतोद्योगेन परिवर्धितविचारवैभवाना तेषामेवस्यापि विचाराङ्कुरस्य अनुशीलनार्थं कृत्स्नमप्यायु उपयोक्तव्य स्यात्।

डॉ दाण्डेकरा नित्यमेव सन्दिशन्ति ‘तरणिरिज्जयति क्षेति पुष्यति’ (ऋ ■ ३२ ९) इति। तदिद तेषां प्रियतम वाक्यम्। मन्ये एतदेव वेदवाक्य प्रमाणीकृत्य कृतकृत्यता नीता जीवनयात्रा गुरुवर्यै। तेषामेव वाक्य तु मम हृदये उत्कीर्णलेखायमान विद्यते। तदित्थम्— ‘येषामपेक्षा नास्ति तेषामुपेक्षाद्दु ख न भवति’ ‘इति। संस्कृतपाठशालाध्यापकसत्कृतिप्रसङ्गे तैरिदमुदीरितमासीद् भारत-इतिहास-संशोधन-मण्डले।

इदानी सेवावृत्तिनिवृत्तेषु तेषु त्रयीमयो यज्ञमयस्तपोमय भगवान् भास्कर वितरत्वविरतमनामयमयमायु इति सम्प्रार्थ्यते सभक्त्युन्मेषम् ‘शत जीव शरदो वर्धमान.’ इति तेषां प्रियतममकृत्रिमवचनमुदीर्य।

पुण्यपत्तन-विश्वविद्यालयस्य संस्कृत-विभाग प्रमुखत्वेन डॉ रा ना दाण्डकर निवृत्युत्तर तत्स्थाने नियुक्ता नचिरमेव डॉ शिवरामशास्त्री जोशीमहोदया सर्वेषा विदुषा तथा सुपरिचिता यथा भूयस्तेषा परिचयो नाम पुनरुक्ति-लक्षणस्य दोषस्य स्फुटमुदाहृण स्यात्। सत्यप्येव सच्चरितकथनलोभात् जनोऽय तेषा परिचयप्रदानार्थं सुसज्ज ।

मया खलु सवत्सरद्वय यावत्तया सकाशे व्याकरणमधीतम् । अनन्तर च वत्सरद्वय तेषा सनिधौ वर्तमानेन 'गुणवत्सन्निधिरेव सन्निधि' इति सुभाषितस्य अनुभूता सत्यता । वैयाकरण नामावलि-लेखन किल येषा नामधय पूर्णी सख्या नापेक्षते ते तावत डॉ शि द जोशी पण्डितजी-महोदया इति नि सशय प्रतिपादनीयम् । सर्वकालम् अनवरत मुनित्रय-व्याहारानुसन्धानपर एतादृश मनन-तरि-तीर्ण-व्याकरण-विद्यार्णव सर्वथा दुर्लभ सस्कृतपण्डित प्रवर्तमानऽस्मिन् परीक्षा-यक्षिणी-युग । मुनित्रय-वचन-सम्बन्ध-नियमिनी या



डॉ शि द जोशी (पण्डितजी)

काचन शङ्का भवतु तस्या सपदव समूल मुन्मूलने समर्था एते शास्त्रिवर्या न केवल छात्रवर्गस्य किन्तु शास्त्रनदीष्णानामपि पुरत सन्दर्भ-ग्रन्थायमाणा सवृत्ता इति तु सर्वेषा कुतूहलस्य विषय । अस्ति खलु भगवता पाणिनिना सम किमपि सादृश्य श्रीमता डॉ जोशीमहोदयानाम । तथाहि-महर्षिणा पाणिनिनेव एभिरपि सप्राप्त व्याकरण महेश्वरस्य सकाशादेव। (एतेषा पितृव्य चरणा स्वर्गीया प महेश्वर जोशी शास्त्रिण किल एतेषा व्याकरण विद्या गुरव ।)

**श्रेयासि बहुविघ्नानि**

सस्कृतप्राकृतविभागप्रमुखत्वेन डॉ जोशीमहोदया प्रथम नियोज्या इति सञ्जातेऽपि परिपत्रिर्णय सेय नियुक्ति प्रत्यूहव्यूहेन अनवरतमन्तरितेति सर्वप्रकाशोऽय विषय । परमन्तत्तश्च अन्तरायपरम्परा निरस्य

चिरस्य विद्वज्जनप्रार्थिता सेयं डॉ जोशीमहोदयाना नियुक्ति युक्ति-युक्तेन यया सत्यसृष्टिमापन्ना इति केषां वा गुणपक्षपातिना न प्रमोदातिरेकाय कल्पेत ? सम्प्राप्ता पण्डितवरा इमे भाद्रपद शुद्ध-प्रतिपदि भद्रपदमिदं सोमदिने मङ्गलं विधातुं विबुधभारत्या.। तेन सोमवासरोऽप्ययं मङ्गलवासर संवृत्त । भाद्रपदमासोऽपि भद्रप्रद समभवत्। अनया घटनया- श्रेयांसि बहुविघ्नानीति यदुच्यते तदविनयमिति सिद्धप्रायम्।

देवभाषा-विचक्षण-वर्गे डॉ जोशीमहोदया सव्यसाचिन सन्ति। यथा किल एते मनीषिण मन्त्रकृतामृषीणां प्राचीना परम्परा समीचीनया सरण्या जानन्ति तथैव 'पुराणमित्येव न साधु सर्वम्' इति कविकुलगुरुसन्देश हृदि कुर्वाणा सन्त अस्मिन्विंशतितमे शतके ये नवनवा प्रश्ना व्याकरणे भाषाशास्त्रे च विपश्चिदपश्चिमै सन्मुपस्थापिता तेषामपि यथापि सूक्ष्मेक्षिकया पर्याप्त पर्यालोचनं विधातुं हेयोपादेयता च निर्णेतु सन्त्येव साधुकृतशरसन्धाना । सति प्रसङ्गे परमतनिरसनपुरस्सरं स्वमतप्रतिपादने महती सूक्ष्मेक्षिका आविर्भवति डॉ जोशीमहोदयानाम्। एतादृशं पण्डितोत्तमं संस्कृत-प्राकृत भाषा विभागे नियुज्य स्वस्यैव गुणगण-पक्षपातिता आविष्कृता पुणेविद्यापीठेन।

### सर्वकालव्यापिनी मुनित्रय-मैत्री

डॉ शि द जोशीमहोदयाना मुनित्रयेण सम मैत्री सर्वकालव्यापिनी। एकत छात्रै सम मित्रै साकं वा संवाद वितन्वन्तोऽपि शास्त्रिवर्या सुखेन ध्यायन्ति खलु दुरधिगमान् दुष्परिच्छेद्यान् मुनित्रय-प्रणीतान् तांस्तान् शासनसिद्धान्तान्। एकत परिहासविजल्प अपरतश्च पुन शास्त्रसिद्धान्तसङ्कुरप इत्यवविधम् अनल्पविस्मयावहं चरितमाविष्कर्तुं कोऽन्य शास्त्रिमहोदयस्य कुशल स्यात् ? मया तावल्केवल शास्त्रिवर्या प्रत्यक्षीकृता येषां मुखत शास्त्रसिद्धान्तश्रवण मनागिव श्रोतृवृन्दस्य क्लेशाय कल्पते। पण्डितजी-डॉ जोशीमहोदयाना विषये पुनरेव वक्तव्यं स्यात् भारवि भारतीम् आश्रित्य--

> भवन्ति ते सभ्यतमा विपश्चिता
> मनोगतं वाचि निवेशयन्ति ये।

नयन्ति तेष्वप्युपपन्ननैपुणा
गभीरमर्थं कतिचित्प्रकाशताम् ॥ " इति ।

व्यवहारकाले सूत्ररूपैर्वाक्यं स्वाभिप्रायमाविष्कुर्वाणा एते शब्द-विद्याकोविदा सूत्रार्थ-विवरण-कर्मणि पर्याप्ता पुनरुक्ति वहु मन्यते। तेन नैव वञ्चिता भवन्ति पश्चात्प्राप्ता अपि छात्रा ।

अथ चापरो विशेष शास्त्रिवर्याणा विचारधारायाः । कदाचिद् व्याहरन्त्येते अध्यापनप्रसङ्गे– " दृश्यतामिद विचारसौन्दर्यमत्र सूत्रे " इति। पाणिनीय-सूत्रसार्थे सौन्दर्यमिति प्रथमत विप्रतिपिद्धमिव प्रतिभाति। पर शास्त्रिवर्याणा सौन्दर्यदृष्टि आपाततो रूक्षषु सूत्रष्वपि मूर्च्छति नितामम्। युक्तमाह कोऽपि नवकवि –

जिज्ञासते लौकिकरीतितत्त्व
सृष्टिं च य सूक्ष्मतया दिदृक्षुः।
कवि प्रसन्न प्रतिभाविहारी
प्रावापि तस्मै कथयेत् स्ववृत्तम् "

इत्यङ्गते पाणिनि-सूत्राणि डॉ जोशीमहोदयेभ्य स्वसौन्दर्य प्रदर्शयन्तीत्यत्र किं नाम चित्रम्?

अध्यापन पुनरेतेषा स्थायीभाव । न खलु एतेषाम् अध्यापनरीतिर् अग्निवद् भवति। अग्निर्यद् अदग्ध तद् दहति। एतेषामध्यापनरीति किल पर्जन्यवद् भवति। यदाह महाभाष्यकार –कृतकारि खल्वपि शास्त्र पर्जन्यवत्। पर्जन्यो यावदून पूर्ण सर्वमभिवर्षति। तेन चैतेषामध्यापनरीति. सर्वमनोरमा भवति। अन्ततश्च छिन्नसशया छात्रा आदर्शगत स्वप्रतिबिम्बमिव सूत्रार्थ परिपश्यन्ति सुस्फुटम्।

अपि च– " नहि भुक्तवान् पुनर्भुङ्क्ते कृतश्मश्रुश्च श्मश्रूणि कारयति " इत्युपक्रम्य अग्रे महाभाष्यकार. प्रतिपादयति " सामर्थ्याद्धि पुन प्रवृत्तिर्भवति । भोजनविशेषाच्छिल्पिविशेषाद्वा " इति।

अत्रेदमवधेयम्। विधानमिद डॉ जोशीमहोदयानामध्यापनरीतिम् अपि स्पृशति। अध्यापनकौशलवशेन सकृद् अधीतवन्तोऽप्यन्तेवासिन भूयोऽपि पाठान् श्रोतुमभिलषन्ति प्रकामम्। तेन च परिभाषेन्दुशेखरे

ज्ञातसारा पाणिनीय-नये विहितपरिश्रमा अपि प्रा० रा० भ ऋषि-महोदया नैव विराममभिलषन्ति व्याकरणाध्ययनस्य । शृण्वन्ति च परिभाषेन्दुशेखरं डॉ जोशीमहोदयैरध्याप्यमानम् । पर्याप्तमेतन्निदर्शनम् एतेषाम् अध्यापनकौशलविषये ।

अस्मिन् अतिलघीयसि लेखे पण्डितवर्याणां सर्वेऽपि विशेषा नैव निर्देष्टुं शक्या विशेषेण । अतस्तेषां चरितस्य कोऽपि प्रादेशमात्र भागोऽत्र प्रकाशितो विद्यते ।

सन्ति पुनरेतेषां चरितस्य केऽपि विशेषाः ।

समासशास्त्रे निष्णातानामप्येतेषां विग्रहानभिज्ञता विस्मयं जनयति । भगवान् पाणिनिः विविधैः अनुबन्धैः विविधानि कार्याणि सम्पादयति । शास्त्रिवर्याः पुनरेकेनैव स्नेहानुबन्धेन सर्वाण्यपि कार्याणि निरपवादं साधयन्ति । अपि च पाणिनेरनुबन्धाः लोपमनुभवन्ति परं नैतेषां स्नेहानुबन्धः लोपं प्राप्नोति जातुचिदपि ।

अपि च शास्त्रिवर्याणामेतेषामधिकारचिन्ता पाणिनीयसूत्रपाठे, अनुवृत्तिविचारधारा स्वरचर्चाप्रसङ्गे, अव्ययीभावादरः समासाऽध्यापनसमये, कृत्रिमे पक्षपातः परिभाषानुशासने, वक्रोक्तिः साहित्यचर्चायाम्, अभ्यासलोपाग्रहः आख्यातसन्दर्भे, अपवाद-संकीर्तनं च नियमस्वरूपानुसन्धाने नान्यत्र ।

सर्वमिदं सुसम्पन्नम् । डॉ जोशीमहोदयैः सम्पादिता अल्पेनैव कालेन गुणगणशालितया विशाला कीर्तिः । परमेतावदेव विस्मरणीयं केनापि यत्सर्वमिदं सद्गृहदारसंग्रहस्य फलमनुभवन्ति तत्र भवन्तः पण्डितवर्याः । अत्रवस्तुनि वस्तुतः महान्तं मानमर्हति किल सैषा धर्मपत्नी सम्मृत पण्डिता सौ (माई) सुलोचनादेवी । इदं तु नित्यमेव दृष्टिपथमायाति यत् यदा तावत् डॉ जोशीमहोदया अन्तरङ्गपरिभाषा नित्या वा अनित्या वेति विषयमधिकृत्य पूर्वोत्तरपक्षदक्षा भवन्ति बहिर्वर्तिन्यां कक्षायां, तदा सर्वाण्यपि नित्यान्यन्तरङ्गकार्याणि सम्पादयति महानसविभागे सौ माई मौनलक्षणं महाव्रतं समाश्रित्य । 'गृहिणी गृहमुच्यते' इति सुभाषितस्य परमनिदर्शनभूता सौ माईडॉ जोशीमहोदयेभ्योऽपि

पूर्वमभिनन्दमर्हतीति मे निश्चिता मतिः। मन्ये नात्र कस्यापि विमतिः स्यात्।

साम्प्रतं धनार्जनमेव साम्प्रतं मन्यमानं सीमन्तिनीवर्गं यया कयापि विधया सेवावृत्तिमाश्रित्य यापयति महान्तं समयं सदनाद् बहिरेव। सौ माई तावत् लीलयाऽधिगन्तुं शक्नुयात् स्वाभीप्टक्षेत्रे सेवावृत्तिम्। परं तत्र विषये मूलत एव निःस्पृहा सौ माई। जानात्येव सेयं सती डॉ जोशी-महोदयानां ज्ञानयज्ञस्य माहात्म्यम्। अथवा 'यद् भर्तुरेव हितमिच्छति तत् कलत्रम्' इत्येव पर्याप्तं तस्या विषये।

संशोधनकार्यादपि एकमेव कार्यमभ्यर्हितं मन्यन्ते डॉ जोशी-महोदयाः। तत्तु अभ्यागतसेवालक्षणम्। यतः क्षणमिव सर्वं ग्रन्थप्रपञ्चं दूरीकृत्य व्याहरन्ति किल ते स्वागतं गृहागतस्यातिथिजनस्य। अनन्तरं क्षिप्रमेव धर्मपत्नीमाहूय समादिशन्ति– 'आनीयतां किञ्चिदन्नजातम्' इति। वस्तुतस्तु अकथितमपि तया इदं ज्ञायते। प्राप्तमपि भवति। यदि अभ्यागतस्य प्रतदिनं स्यात् तर्हि तादृशी स्वतन्त्राऽभ्यवहारव्यवस्था विधीयते। परमभ्यवहार-व्यवहारं विना नास्ति कस्यापि मोक्षः शारिग्र-वर्याणां सदनात्। अन्यस्मिन् कस्मिन् अपि विषये स्यात्तयोर्दम्पत्योर्वैमत्यं परमातिथ्यविषये नियमैकमत्यमेव।

एकदा किल डॉ जोशीसत्कारसमारोहे तेषां स्वभावमधिकृत्य डॉ ग वा पळसुलेमहोदया अवोचन् यत्–एते खलु अनिलेऽपि पण्डित-मण्डले अजातशत्रव इति। स्थान एवेदं विधानं तेषाम्। न केषामपि मनीषिणां विमतिः स्यादत्र विषये। यतः ते न कञ्चन द्विषन्ति।

**सव्यसाची मौनी विनायक डॉ पळसुले**

सम्प्रति डॉ पळसुले-महोदयानां मार्गदर्शनेन प्रवर्तते मदीया प्रबन्ध-रचना काशिकाख्याम् अष्टाध्यायीव्याख्यामाश्रित्य। साम्प्रतं तेषां विषये किमपि वक्तुं साम्प्रतम्। वस्तुतस्तु तेषां चरितमेव बृहदाकारं लेखमर्हति। परमत्र तस्य प्रदीयते एकदेशमात्रं देवमाऽसौ स्मृत्वा।

ते तावत् प्रकृत्या मितभाषिणः विनायकनाम्ना 'मौनं मौनी गुणिनि गुणवान्' इतीमां सरणिमनुसृत्य न स्थापयन्त्यात्मनः सव्यसाचित्वं

क्वापि नाम। त किल तरसकल केवल सदस्येवाविष्कुवन्ति लेखने था प्रकाशयन्ति।

तेषा सुभाषितभूषितानि भाषणानि सर्वेषा विदुषा परिचितानि। त एते भर्तृहरेर्वाक्यपदीये कृतभूरिपरिश्रमा, सुरस-सुरसरस्वत्यनुवाद-विचक्षणा, नाटकलेखने कृतहस्ता, नवनवशब्दरचनाया मुक्तहस्ता, प्रतिभया च दत्तहस्ता प्रीणयन्ति विद्वद्गण गुणगणसम्पन्नया शैल्या। दीर्घदर्शिनामपि तेषा सूक्ष्मा दृष्टि सौन्दर्याभिमुखी सती शास्त्रे काव्ये सञ्चरत्यनवरतम्। यद्यप्येतेषा साहित्ये समपक्षपातिनी विद्यते प्रवृत्ति तथापि स्वातन्त्र्यमन्त्राभिमन्त्रितेषु स्वातन्त्र्यवीर-सावरकर-व्याहारेषु बद्धादरेयमाविष्करोति किल तास्तान् सावरकर-साहित्यस्य अनन्यसामान्यान् देशभक्ति-भास्वरान् विशेषान्। कस्या अपि भाषाया अन्यस्या भाषायाम् अनुवादो नामातिकठिन प्रज्ञायासकर कर्म। परमेते ह्यप्रतिभाबलेन लीलया सम्पादयन्ति पुन। अनवद्या हृद्यास्च विद्यन्ते एतै प्रणीता गद्यपद्यानुवादा।

सप्रश्रयेकैव अभ्यर्थना विद्यते डॉ जोशीमहोदयाना पुरत। तै शरीरस्वास्थ्ये दत्तावधानैर्भवितव्यम्। स्वय शास्त्रिदर्शा नैव जागरूका भवन्ति शरीरस्वास्थ्यविषये इति प्रायेण सर्वेषामेवानुभव। भेषजसेवनेऽपि ते उदासीना इव दृश्यन्ते। नैतद्युक्तरूपम्। 'अङ्गकार्ये कृते पुनर्नाङ्गकार्यम्'— इति व्याकरण। व्यवहारे पुन भूयोभूय सहस्रकृत्वोऽङ्गकार्य सपादनीय भवत्यालस्य दूरीकृत्य। पर विदितवेदितव्येषु डॉ जोशी महाभागेषु केन वा इद निवेदनीयम्?—

तस्मादन्तत विद्वदेकान्तवशवदानाम् शब्दविद्याविदामेतेषाम् अनामयसम्पन्नेन पुरुषायुषेण सम सर्वाभ्युदय-सम्पत्त्यर्थम् अशेषवस्तुस्थितोऽपि शेषे वर्तमान चन्द्रमूर्तिधर नारायण प्रार्थ्यते।

संस्कृत-प्रगताभ्यास-केन्द्रम्
पुणे विद्यापीठम्, पुणे ७

श्री. ल. आठलेकर
एम्. ए.

# ॥ विडालः यः अनन्यः चरति ॥*

विद्युल्लेखा

शृणुत, चित्त दत्त, कर्णं कुरुत, मम प्रेष्ठा, यत सर्वमिद तदानी सजात, सवृत, सपन्न यदा इमे गृहपशव वन्या आसन्। श्वा च वन्य, अश्वश्च वन्य, धेनुर्वन्या, अविर्वन्य, सूकरश्चपि वन्य एव। तावत तेषा वन्यत्व, यावत् वन्यस्य वन्यत्व सभवति। ते च आर्द्रे वन्यारण्ये स्वे स्वे वन्ये विविक्ते चरन्ति स्म। पर वन्याना वन्यतमस्तु आसीत बिडाल। स तु अनन्यश्चरति। सर्वेषु च स्थानेषु समदर्शी।



सौ विद्युल्लेखा अकलूजकर

नरोऽपि तदानी वन्य एव आसीत। विभीषयन् वन्य। तेन आत्मानम अनन्ययितु यावत प्रारम्भोऽपि न कृत यावत तेन नारी न दृष्टा, यावच्च तया नोक्त — "न मे रोचते त्वदीय वन्यमार्गि जीवनम्' इति। तया एव गतु आर्द्रपर्णाना राशौ स्थान शयनार्थं शुष्का अनार्द्रा गुहा नियुक्ता। भूमि स्वच्छाभि सिकताभि आच्छादिता। तथैव च गुहाया पश्चिमभागे काष्ठै प्रज्वालित सुमहद अग्नि। गुहामुखे च तया अश्वलितं वन्याश्व-चर्म लम्बित च उक्त —

"दासी से प्रभूत, प्रिय, यदा अन्त आगच्छसि। इत पर गृहस्थो भवार।' इति।

तस्यो मध्ये, प्रष्ठ, सौ अनन्यतायाम् तत्प्रभृत्यस्तु ध्यान यत्नेन

---

* रुड्यार्ड किप्लिङ्गमहोदयस्य कथाया अनुवाद।
* "The Cat That Walked By Himself" इत्यस्या

लशुनेन, वन्येन मरीचेन च संस्कृतं वन्यम् अविम्, वन्यैः तण्डुलैः, वन्येन मेथिकेन, वन्येन धानेयेन च सपूरितं वन्यं कादम्बम्, वन्यानां वृषभाणां मेदोस्थीनि, वन्यानि बेरीफलानि, वन्यानि दाडिमानि च।

तदनन्तरं नरः अपूर्वनिर्वृतः सन् अग्नेः पुरस्तात् निद्राधीनः अभवत्। नारी तु उपविष्टा एव, कचान् विजटीकुर्वती। सा अविमांसात् स्कन्धास्थि अगृह्णात् – तत् महत्तसपाटम् असिपत्रसदृशम् अस्थि – चित्रचिह्नानि च तद्गतानि आलोकयत्। ततः सा नूतनम् इन्धनम् अग्नौ प्राक्षिपत्, माया च असाधयत्। जगतः प्रथमा गायन्ती यातुं सा अकरोत्।

बहिस्तु तस्मिन् आर्द्रे वन्यारण्ये वन्याः पशवः तत्र सम्मिलिताः यत्र स्थिताः ते अतिदूरे ज्वलतः अग्नेः प्रकाशं द्रष्टुं प्राभवन्, व्यचिन्तयन् च, किमिदं स्यादिति। ततः वन्यः अश्वः तस्य वन्यं पदं भूमौ आहनत्, अवदत् च,– "भो मम सुहृद्, मम शत्रव च, किमर्थं नरेण नार्या च कृतः सः महान् प्रकाशः तस्यां महत्यां गुहायाम्? का च हानिः संभवति तस्मात् अस्माकम्?" वन्यः श्वा स्वीयां वन्यां नासिकाम् उन्नीय श्राणस्य अविमांसस्य गन्धम् आजिघ्रत् अवदत् च,–

"मन्ये, भद्रं सः प्रकाशः। अतः अहं गमिष्यामि, प्रेक्ष्यामि, आलोचयिष्यामि, कथयिष्यामि च। बिडाल, एहि मया सह।" "नेति" बिडालः अवदत् – "सोऽहं बिडालः यः अनन्यश्चरति। सर्वेषु च स्थानेषु समदर्शी। नाहमागच्छामि।"

"यदि एवं तर्हि न आवयोः पुनः मैत्रं संभवति।" – वन्यः श्वा अवदत्, धोरितेन गतश्च सः गुहाम्। नातिदूरे गते शुनि बिडालः स्वगतम् अवदत् – "सर्वेषु स्थानेषु अहं समदर्शी। कुतस्तर्हि अहमपि न गच्छेयम्, पश्येयम्, आलोचयेयम्, ययेच्छं च प्रत्यागच्छेयम्?" इति। ततः सः अन्यैरदृष्टः मृदुमृदुतरैः पदैः वन्यं श्वानम् अनुगतः, तत्र च निगूढं स्थितः यत्र सः निखिलं श्रोतुं समर्थः।

यदा वन्यः श्वा गुहामुखं प्राप्तः तदा तेन स्वदाम् अश्वचर्मं स्वनासिकया उत्थापितम्, आह्लादकः श्राणमांसगन्धः च आघ्रातः। नारी च अपि अवलोकयन्ती श्वानम् आगतं श्रुत्वा अहसत् अवदत् च "अयमागतः प्रथमः। वन्यारण्यस्य वन्यपशो, किमिच्छसि?" वन्यः श्वा अवदत्,–

"हे मद्रिपो, मद्रिपुपत्नि च, किमिदं यत् आर्द्रे वन्यारण्ये एवं रुचिरम् आघ्रायते ?" ततः नारी एकं श्राणम् अस्थि अगृह्णात्, वन्याय शुने च तत् प्राक्षिपत्, अवदत् च,–"वन्यारण्यस्थ वन्यपशो, 'आस्वादय, अनुभव।" वन्यः श्वा अल्पशः अस्थि अभक्षयत्। तेन आस्वादितपूर्वात् यस्मात् कस्मादपि वस्तुनः तत् स्वादुतरम् आसीत्। स अवदत् च– "मद्रिपो, मद्रिपुपत्नि च, एकमधिकं मे दीयताम्"। नारी अवदत्– "वन्यारण्यस्थ वन्यपशो, दिवा मे नरस्य मृगयासहायो भव, नक्तं च गुहामिमां परिपालय, अहं च ते दास्यामि यथेच्छम् श्राणानि अस्थीनि।" "अहो!" शृण्वन् विडालः अवदत्,– "अतिचतुरा खलु इयं नारी। तथापि न सा तथा चतुरा यथा अहम्।" वन्यः श्वा गुहायाम् उपसृप्य नार्या अङ्के स्वशिरो न्यदधात्, अवदत् च,– "हे मित्र, मित्रपत्नि च, दिवा ते नरस्य मृगयासहायो भविष्यामि, नक्तं च गुहामिमां परिपालयिष्यामि।"

"अहो!" शृण्वन् विडालः अवदत्,–, "अतिमूर्खोऽयं श्वा।" प्रत्यगच्छत् च स आर्द्रे वन्यारण्ये स्वीयं वन्यं पुच्छं धुन्वन्, स्वीये च वन्ये विविक्ते विचरन्। परं स न कदापि कस्मै अपि किञ्चिदपि अकथयत्।

यदा नरः स्वापाद् उत्थितः, तदा सः अपृच्छत्, "किंहेतुकः अत्रागतोऽयं वन्यः श्वा ?"

नारी अवदत्,–"न इतः परम् अस्य अभिधानं 'वन्यः श्वा' इति, किं तु 'प्रथमं मित्रम्' इति, यतः मित्रमय नौ भविष्यति शश्वद् शश्वच्च शश्वदेव। नय एनम् आत्मना सार्धं, यदा मृगया गच्छसि।" अन्येद्युः रात्रौ नारी महद् हरितं प्रग्रथं तृणं जलाशयसमीपात् शाद्वलात् बाहुपूरम् अच्छिदत्, तत् च अग्नेः पुरस्तात् अशोषयत्, यथा च तस्य गन्धः अचिरच्छिन्नस्य घासस्य इवाभवत्। तदनु नारी गुहामुखे उपाविशत्, अश्वचर्मणः च पाशमेकं निरमात्। तन्महन्निम्तुलम् अमिवत् अविम्न्यास्थि अवालोकयत्। सा च यातुम् अकरोत्। जगतः द्वितीयां गायन्ती यातुं सा अकरोत्।

वस्मिन्तु आर्द्रे वन्यारण्ये सर्वे वन्याः पशवः समील्य वन्यस्य शुनः किं वृत्तम् इति व्यचिन्तयन्। अन्ते वन्यः अश्वः पदेन भूमिम् आहत्

अवदत् च,– "अहं गमिष्यामि, द्रक्ष्यामि, मर्ययिष्यामि च कुत खलु हेतो वन्य श्वा न पुनरागतोऽस्ति इति। बिडाल, एहि मया सह।"

"नेति'" बिडाल अवदत्, "सोऽहं बिडाल अनन्यश्चरति। सर्वेषु च स्थानेषु समदर्शी। नाहमागमिष्यामि।"

तथापि स मृदुमृदुतरम् अश्वम् अन्वगच्छन्, आत्मान च तत्र न्यगूहयत् यत्र स्थित स निखिल श्रोतुम् अशक्नोत्।

यदा नारी स्वीयाया प्रलम्बाया सटाया पदानि न्यस्यन्त स्खलन्त च वन्यम् अश्वम् आगच्छन्तम् अशृणोत् तदा अहसत् अवदत् च,– "अयमागतो द्वितीय। वन्यारण्यस्य वन्यपशो, किमिच्छसि भो?" वन्य अश्व अवदत्,–"हे मद्रिपो, मद्रिपुपत्नि च, कुत्र खलु वन्य श्वा?" नारी व्यहसत्, स्कन्धास्थि अगृह्णात्, तद् न्यध्यायत् अवदत् च,– "वन्यारण्यस्य वन्यपशो, न त्वम् अत्रागत वन्यस्य शुनोऽर्थे, अपि तु अस्य वरस्य तृणस्यार्थे।" वन्य अश्वश्च स्वीयाया लम्बसटाया पदानि न्यस्यन् स्खलन् च अवदत्,–" तथ्यमेतत्। देहि तन्मे भक्षणाय।"

नारी अवदत्, "वन्यारण्यस्य वन्यपशो, नामय स्वशिर परिधस्व च यत्ते ददामि, ततश्च इद सुखदसुखद तृण प्रतिदिन त्रिवार भक्षिष्यसि।"

"अहो!" बिडाल अवदत्, "चतुरा स्वत्विय नारी। तथापि न सा तथा चतुरा यथा अहम्।"

वन्य अश्व स्वीय वन्य शिरो अनमयत्, नारी च वेणीकृतचर्मपाश तस्य कण्ठे अवातारयत्। वन्यश्च अश्व आर्या पादयो श्वासम् उदसृजत्। अवदत् च,–"हे मत्स्वामिनि, मत्स्वामिपत्नि च, भृत्यस्ते भविष्यामि सुखदसुखदस्य तृणस्य अर्थे।" "अहो!" अवदत् शृण्वन् बिडाल, "महामूर्खोऽयमश्व।" प्रत्यगच्छत् च स आर्द्र वन्यारण्य, स्वीय वन्य पुच्छ धुन्वन्, वन्ये विविक्ते विचरन्। न तु स कदापि कस्मै अपि किञ्चिदपि अकथयत्।

यदा नर श्वा च मृगयाया प्रत्यागच्छताम् तदा नर अपृच्छत्,– "किंहेतुक अत्रागतोऽयम् वन्य अश्व?"

नारी अवदत्,–"न तस्य अभिधान 'वन्य अश्व' इति। अत: परं किं तु 'प्रथम भृत्य' इति। यत स स्वरात् स्थल नौ वक्ष्यति

शश्वद् शश्वच्च शश्वदेव। मृगयां यदा गेच्छसि तदा तस्य पृष्ठम् आरुह्य गच्छ।"

अन्येद्युः स्वं वन्यं शिरः उन्नमय्य वन्य-तरु-शाखाः वर्जयन्ती वन्या धेनुः गुहा प्राप्ता, बिडालश्च ताम् अनुप्राप्तः। स च यथापूर्वम् आत्मानं न्यगूहयत्। सर्वं च यथापूर्वमेव संपन्नम्। बिडालश्च यथापूर्वमेव सर्वम् अवदत्। यदा च वन्या धेनुः प्रत्यग्रतृणप्राप्त्यै प्रतिदिनं नार्यै स्वदुग्धदानं प्रतिश्रुतवती, तदा बिडालः यथापूर्वम् आर्द्रं वन्यारण्यं प्रत्यागच्छत्, स्वं वन्यं पुच्छं धुन्वन्, वन्ये विविक्ते विचरन्। परं न सः कदापि कस्मै अपि अकथयत्।

यदा च नरः, अश्वश्च, श्वा च मृगयायाः प्रत्यागताः, नरश्च यथापूर्वम् अपृच्छत्, तदा नारी अवदत्,–"न अतः परं तस्याः 'वन्या धेनुः' इति अभिधानं, किं तु 'सुभोज्यदा' इति। सा अस्मभ्यं शुभ्रोष्णं दुग्धं दास्यति शश्वत् शश्वच्च शश्वदेव। अहं च तां परिपालयिष्यामि यदा त्वं प्रथमेन मित्रेण, प्रथमेन सेवकेन च सह मृगयां गच्छसि"।

अन्येद्युः अन्यः कोऽपि वन्यः पशुः गुहां गच्छति न वेति द्रष्टुं बिडालः प्रत्येक्षत। परम् आर्द्रात् वन्यारण्यात् न कोऽपि तत्र चलितः। अतः बिडालः स्वयं तत्र अनन्यः अगच्छत्। स च धेनुं दुहती नारीम् अपश्यत्, अजिघ्रच्च शुभ्रोष्णस्य दुग्धस्य गन्धम्। स. अवदत्, "हे मद्रिपो, मद्रिपुपत्नि च, क्व गता वन्या धेनुः?"

"नारी अहसत् अवदत् च,–"वन्यारण्यस्य वन्यपशो, प्रत्येहि वन्यारण्यं," यतः केशा मया सवाहिताः दूरे च स्थापितं मया यातुकरं स्कन्धास्थि, न च नः प्रयोजनम् अस्ति गुहायाम् एतदधिकैः मित्रैः सेवकैः वा।"

बिडाल. अवदत्–"नाहं मित्रः नापि सेवकः। सोऽहं बिडालः यः अनन्यश्चरति। इच्छामि चाहं ते गुहां प्रवेष्टुम्"।

नारी अपृच्छत्, "किमर्थं तर्हि नागनः त्वं प्रथमेन मित्रेण सह प्रथमाया रात्रौ"? बिडालः भृशम् अक्रुध्यत् अवदत् च,– "अपि वन्यशुना पिशुनयितं किञ्चिद् मद्विषये?" ततो नारी व्यहसत् अवदत् च,– "सः त्वं बिडालः यः अनन्यश्चरति, सर्वेषु च स्थानेषु समदर्शी। न त्वं

मित्र, नापि सेवक । त्वयैवैतद् उक्तम् । अपेहि, चर च अनन्य निर्विशेष सर्वेषु स्थानेषु "।

ततो विडाल पश्चात्तप्तम् इव आत्मानम् अदर्शयत् अवदत् च,– "भो , किं न कदापि प्रवेष्टव्य मया गुहायाम् ? न कदापि उपवेष्टव्य उष्णाग्निसमीपे ? न कदापि पेय शुभ्रोष्ण दुग्धम् ? प्राज्ञा त्व सुरूपा च । न त्वया विडाले अपि अकरुणया भाव्यम् "।

नारी अवदत्,– "ज्ञातपूर्व मया प्राज्ञाऽहम् इति, न तु ज्ञात सुरूपा इति । अत त्वया समयमेक करोमि । यदि त्वत्प्रशसापरम् एकमपि वाक्यमहम् उच्चरेय, तर्हि गुहा त्व प्रविशे "।

"यदि च त्व मत्प्रशसापरे द्व वाक्ये उच्चरे "?– अपृच्छत विडाल ।

"न कदापि उच्चरिष्याम्यहम् । पर यदि त्वत्प्रशसापरे द्व वाक्ये अहम् उच्चरेय तर्हि त्व गुहायाम् अग्निसमीपे उपविशे ।"

'यदि त्रीणि वाक्यानि त्वम् उच्चरे ?" विडाल अपृच्छत् ।

"नाह कदापि उच्चरिष्यामि, पर यदि त्वत्प्रशसापराणि त्रीणि वाक्यानि अहम् उच्चरेयम्, तर्हि त्व प्रतिदिन त्रिवार शुभ्रोष्ण दुग्ध पिबे शश्वत् शश्वच्च शश्वदेव ।" तदा विडाल पुच्छ धनुराकारम् अकरोत् अवदत् च,। "स्मरन्तु गुहामुखगता जवनिका, गुहान्तर्गत अग्नि, अग्निसमीपस्था दुग्धकुम्भाश्च मदुक्त मद्रिपुणा, मां-पुपत्न्या च "। इत्युक्त्वा स आर्द्र वन्यारण्य प्रत्यगच्छत्, स्व वन्य पुच्छ धुन्वन्, वन्ये विविक्ते विचरन् ।

तस्या रात्रौ यदा नर. श्वा च अश्वश्च मृगयाया प्रत्यागता तदा नारी विडालेन सह कृत समय तेभ्यो न अकथयत्, यत स तेभ्यो न रोचेत इति तस्या आशङ्का आसीत् ।

विडाल दूरे अतीव दूरे अगच्छत्, आर्द्रे वन्यारण्ये च स्वीये विविक्ते भूयास काल निगूढ. स्थित यावत् नार्या सर्व तद्विषयक विस्मृतम् । केवल गुहायाम् अध शिरस्का लम्बमाना अतुका जानाति स्म विडालस्य निगूहनस्थानम् । प्रतिसाय च सा गुहाया सवृत्त निवेदयितु विडाल प्रति डयते स्म ।

कस्मिश्चित् संध्यासमये जतुका अवदत्,—" शिशुरेकोऽस्ति गुहायाम्। नवीनः सः, पाटलः पीवरश्च। नारी च तस्मै अतीव स्पृहयति।"

" अहो ! " शृण्वन् विडाल. अवदत्, " परं कस्मैचन नाम शिशुः स्पृहयति ? "

" स तु स्पृहयति तानि वस्तूनि यानि मृदूनि, यानि च कुनकूयन्ति "। जतुका अवदत्,—" कवोष्णाना वस्तूना बाहुभ्या धारणाय च दा निद्रामुपैति। य. आत्मानं क्रिडयते तस्मै अपि स्पृहयति। सः पृहयति। सर्वेभ्यः खलु एभ्यः स स्पृहयति।"

" अहो " ! अवदत् शृण्वन् विडालः " प्राप्तस्तर्हि ममानुकूलः ालः।"

अपरस्यां रात्रौ आर्द्रस्य वन्यारण्यस्य पारं चलितः विडाल. गुहाया रतिनिकटे च प्रात कालं यावत् निगूढः स्थितः। नरः. अश्व, श्वा च [गयार्थे प्रस्थिताः। तस्मिन् प्रभातकाले नारी पाककर्मणि निरता आसीत्, शिशुश्च अरोदीत्, तां च अन्तरा प्रत्यवर्धर्तात्। अत. सा त गुहायाः ाहिरानयत्, तस्मै च उपला. मुष्टिमेयाः क्रीडनाय अयच्छत्। तथापि शिशुः आक्रोशत् एव। ततः विडाल. स्वीयं सोपबर्हं पदतलं पुरो धृतवान्, तेन र शिशु कपोले परामृष्टवान्, शिशुश्च कूजयितुम् आरभत। विडालः ास्य पीवरौ जानू स्वशरीरेण घृष्टवान्, स्वपुच्छेन च तं हनोरधस्तात् मकुतकूतयत्, शिशुश्च अहसत्। नारी तं हसन्तम् अशृणोत्, स्मित च मकरोत्। तदा जतुका—सा गुहामुखे लम्बमाना अध शिरस्का जतुका— प्रवदत्, " हे मद्गृहिणि मद्गृहस्थपत्नि, मद्गृहस्यगुतभात. च, वन्यारण्यस्य: कोऽपि वन्यः ते शिशुना सह मनोरमतमं क्रीडति।"

" शुभेच्छास्तस्मै वन्याय यस्मै कस्मै अपि, " अवदत् स्वपृष्ठदेशं ामरेगं कुर्वती नारी, " यतो व्यग्राहमासम् अस्मिन् प्रभाते, तेन चाहम् उपकृता।"

तस्मिन्नेव क्षणे तस्मिन्नेव निमेषे, प्रेष्ठा. सा शुष्का अस्थचर्मजर्जरिता या गुहामुखे अध.पुच्छं प्रतता आसीत्, भूमौ पतिता—धुम्म् ! —यतः स्मृतस्तदा, नार्या विडालेन कृतः समयः। यदा च नारी तामुन्नेतुम् आगता, तदा तया दृष्टं, विडालः गुहान्तः सुखोपविष्ट इति।

'हे मद्रिपो, मद्रिपुपत्नि, मद्रिपुजननि च, सोऽस्म्यहं विडाल। यत उच्चरित त्वया मत्प्रशसापर वाक्यमेकम्, अधुना अहं गुहायाम् उप वेष्टु प्रभवामि शश्वत्, शश्वच्च, शश्वदेव। परम् अद्यापि सोऽहं विडाल य अनन्यदचरति, सर्वेषु च स्थानेषु समदर्शी।"

नारी भृशम् अकुप्यत्। ओष्ठौ दृढं पिधाय स्वकीयं तन्तुकरण चक्रम् अगृह्णात्, तन्तूश्च व्यतनोत्। किं तु विडाल अपसृत इति शिशु पुन अरोदीत्, नारी च न स शान्तिम् आनेतु प्राभवत्, यत शिशु आत्मानम् आयासयत्, पादौ प्राक्षिपत्, वदने च कृष्णताम् आपादयत्। विडाल अवदत्- "हे मद्रिपो, मद्रिपुपत्नि, मद्रिपुजननि च, य तन्तु तनोषि, तस्य सरम् एकं गृहाण ■ तर्कुटी-चक्रारपङ्क्त्या बधान, भूमौ च प्रसारय। ततो अहं ते तादृशी यातु दर्शयिष्यामि, यया शिशुस्ते तथा उच्चै हसिष्यति यथा उच्चैरधुना रोदिति"। "तथा करोमि" इत्यवदत् नारी, "यत कुण्ठितमतिरस्मि। पर नाहं तदर्थं धन्यवादास्ते दास्यामि।"

सा तन्तु मृत्तर्कुटया अबध्नात्, भूमौ च प्रासारयत्। विडालश्च तावत् तम् अनुधावितवान्, स्वपदतलैस्त परामृष्टवान्, सर्वात्मना लुठितवान्, स्वस्कन्धात् त पृष्ठत क्षिप्तवान्, पश्चिमपादयोर्मध्ये अनुधावितवान्, कुत्रापि लुप्त चेति अलीकमेव दर्शितवान्, जवेन च पुनस्तस्मिन् उत्पतितवान्, यावत् शिशु हसितुमारभत। तथा उच्चै अहसत् यथा उच्चै अरोदीत्। स विडालम् अनु यत्र क्वमपि रहितवान् सवत्र च तावत् आनन्दक्रीडा कृतवान्, यावत् परिश्रान्तोऽभवत्, विडाल च बाह्वो धृत्वा निद्रालुरभवत्।

"अधुना" विडाल अवदत्, "गानमेक शिशवे गास्यामि यत् त होरा यावत् स्वापयेत्।"

स च घर्घरायितु प्रारभत-उच्चै, नीचै, नीचै, उच्चै। यावत शिशु गाढम् अस्वपत्। नारी च तौ अवलोकयन्ती स्मितमकरोत अवदत् च-"निःसंशयं चतुरोऽसि त्वं, विडाल। आश्चर्यवदेतत्त्वया कृतम्।"

तत्क्षण प्रेष्ठा, गुहान्त स्थितस्य अग्ने धूम मेघमाला इव गुहावितानात् अध आगत-पट्ट-यत स्मृतस्तेन नारीविडालयो समय।

यदा च सः विरतः तदा अहो आश्चर्यम्—विडालः अग्निसमीपे निकामं सुखासीनः आसीत्।

“हे मद्रिपो, मद्रिपु-पत्नि, मद्रिपु-जननि च,” विडालः अवदत् “अयमहमस्मि। द्वितीयं खलु मत्प्रशंसापरं वाक्यं त्वम् अवदः, अतः गुहान्तर्वर्तिनः उष्णाग्नेः समीपम् उपवेष्टुं प्रभवामि इतः परम्, शश्वत्, शश्वच्च, शश्वदेव। परम् अद्यापि सोऽहं विडालः योऽनन्यश्चरति, सर्वेषु च स्थानेषु समदर्शी।”

तत् श्रुत्वा अतीव क्रुद्धा नारी केशान् अवामुञ्चत्। अग्नौ समधिकम् इन्धनं न्यदधात्। विशालम् अविस्कन्धास्थि च गृहीत्वा तां यातुम् अतनोत् या तां विडालप्रशंसापरात् तृतीयात् वाक्यात् निवारयेत्। प्रेष्ठाः, न सा गायन्ती यातुः, सा किल स्तम्भिका यातु। गच्छता कालेन च तथा स्तब्धा अभूत् सा गुहा यथा कोणात् एकस्मात् कश्चित् क्षुद्राकारो मूषकः बहिः निरगात्, भूमौ च धावितुम् आरभत।

“हे मद्रिपो, मद्रिपु-पत्नि, मद्रिपु-जननि च, अप्ययं मूषकः तव यातोः अंशः?”—विडालः अपृच्छत्। “उफ्! ची! नतराम्! नैव नैव!”—अवदत् नारी। अत्यजत् हस्तात् स्कन्धास्थि, झम्पया आरोहत् च अग्नेः पुरोवर्तिनि पादपीठे, त्वरया च केशान् उपरि वेणीचकार, तान् आधारीकृत्य मूषकः उपरि उद्धावेत् इति शङ्कया।

“अहो!” निध्यायन् विडालः अवदत्, “तर्हि न माम् अयं मूषकः बाधेत यदि अहं तं भक्षयामि।” “न खलु” केशान् वेणीकुर्वती नारी अवदत्,—“भक्षय तं सत्वरम्, अहं च ते शश्वद् ऋणी स्याम्।” विडालः सम्भामिराम् अकरोत् मूषकम् अवागृह्णात्। नारी च अवदत्, “धन्यवादाः। प्रथमं मित्रमपि न एतावत् चपलं मूषकग्रहणे धावन् त्वम् आसीः। निरन्तरम् अतिचतुरेण त्वया भाव्यम्।”

तस्मिन्नेव क्षणे, तस्मिन्नेव निमिषे, प्रेष्ठाः, अग्निनिकटवर्ती दुग्धकुम्भि घटः द्विखण्डभग्नः सञ्जातः—फ्—फ्—फट्—एवं स्फुटनेन विडालेन पुनः समय। यदा च नारी पादपीठात् नीचैः अवप्लुता, तदा तया दृष्टं किञ्चिद् आश्चर्यम्। एकमप्यन्तरं बुभुक्षोऽपि दुग्धं विडालः स्वच्छायते स्म। “हे मद्रिपो, मद्रिपु-पत्नि, मद्रिपु-जननि च,” अवदत् विडालः, “अयमहमस्मि।

त्वया त्रीणि मत्प्रशंसापराणि नामानि उच्चरितानि, आ प्रतिदिन त्रिवारम् अहं शुम्रोष्णं दुग्धं पातुं प्रभवामि, शश्वत् शश्वच्च, शश्वदेव। परम् अधुनाऽपि स एवाहं विडालः योऽनन्यश्चरति। सर्वेषु च स्थानेषु समदर्शी।"

तदा नारी अहसत, विडालस्य कृते च शुम्रोष्णेन दुग्धेन पूरितं पात्रमेकं पुरतो न्यस्यत्, अवदत् च, "हे विडाल, नरो यावान् चतुरः तावान् त्वम्। तथापि स्मर यत् ते समयः न नरेण, न वा शुना कृतः आसीत्। न च जाने यदा ते गृहमागमिष्यन्ति तदा किं करिष्यन्तीति।" "क सम्बन्धस्तस्य मया?" विडाल अवदत्, "यदि गुहायाम् अग्निनिकटे स्थानं मम, यदि च प्रतिदिनं त्रिवारं शुम्रोष्णदुग्धपानमपि मम, तर्हि नास्ति मे चिन्ता किं नरो वा श्वा कर्तुं प्रभवेदिति"

सायंसमये यदा नरश्च श्वा च गुहां प्राप्तौ, तदा नारी ताभ्याम् अखिलां समयकथां न्यवेदयत्, यावत् विडाल अग्निसमीपे उपाविशत् अस्मयत् च। ततो नरः अवदत्, "आम्। परं न स विडालः मया मत्पश्चिमेभ्यो वा यथार्थनामभिः नरैः समयम् अकरोत्।" तदनु स अपाकुर्वत स्वीयौ चर्ममयौ उपानहौ, हस्ते धृतं स्वीयं लघ्वाकारं शैल-परशुं च, (मिलित्वा त्रीणि वस्तूनि एतानि) दारुखण्डमेकम् अगृह्णात्, कुद्दालकं चैकम्, (मिलित्वा पञ्च एतानि,) अस्थापयत् एकस्यां पङ्क्तौ सर्वाणि तानि वस्तूनि, अवदत् च, "अधुना आवां समयं करिष्याव। यदि गुहायां त्वं मूषकान् न अवगृह्णासि शश्वत्, शश्वच्च, शश्वदेव, तर्हि यदा यदा त्वां पश्यामि तदा तदा एतानि पञ्च वस्तूनि त्वयि क्षिपामि। तथैव करिष्यन्ति सर्वे मत्पश्चिमा यथार्थनामानः नराः।"

"अम्भो!" शृण्वती नारी अवदत्, "अतिचतुरोऽयं विडालः। तथापि नायं तावान् चतुरः यावान् मे नरः।" विडालः तानि पञ्च वस्तूनि अगणयत्, (सर्वाणि च तानि नितान्तं ग्रन्थिमन्ति अदृश्यत,) अवदत् च, "यदा गुहायां वर्ते तदा शश्वत् शश्वच्च शश्वदेव मूषकान् अवग्रहिष्यामि। परम् अधुनाऽपि सोऽहं विडालः योऽनन्यश्चरति। सर्वेषु च स्थानेषु समदर्शी।" "न नाम मयि अत्र वर्तमाने।" नरः अवदत्, "यदि तद् अन्त्यं त्वं नावदिष्यः तर्हि अहम् एतानि सर्वाणि वस्तूनि

## विवेकानन्द–प्रशस्तिः ।

विश्वनाथ पिता यस्य माता च भुवनेश्वरी ।
दत्तवंशाधतंस त नरेन्द्र प्रणमाम्यहम् ॥
सुशिष्यो रामकृष्णस्य सुपुत्रो भारतस्य च ।
तेन विस्तीर्णतां नीत भारतस्य यशो महत् ॥
बृहस्पतिसमा बुद्धिस्तेजो भास्करसन्निभम् ।
धर्मे ह्यविचला श्रद्धा नयमेतत् त्वयि स्थितम् ॥
वेदान्ता पुनरुद्धरणाता व्यासस्त्वमसि निश्चितम् ।
त्वयैव पुनरुत्थान भारतस्याभवद् भुवि ॥
हिन्दुधर्माद् ऋते कोऽपि विश्वधर्मो न दृश्यते ।
इति प्रतीत सर्वेश्च विश्वधर्मसभासदै ॥
श्रद्धा हिमवदुत्तुङ्गा वाणी गङ्गेव शीतला ।
त्वदीयाऽऽसीन्नरश्रेष्ठ असीमा बुद्धिरब्धिवत् ॥
संस्कृतिर्भारतीयाना प्राचीना नित्यनूतना ।
त्वया उद्घोषिता नित्य सर्वश्रेयस्करी नृणाम् ॥
रामकृष्णसुशिष्याय विवेकानन्दशर्मणे ।
भारतोन्नतिकाराय सदैवास्तु नमो नम ॥

सातारा [illegible] स आपटीकर

---

शश्वत् शश्वच्च, शश्वदेव दूरे अस्थापयिष्यम् । परम् अधुना यदा यदा त्वा पश्यामि, तदा तदा मे उपानहौ, लघ्वाकार शैलपरशु च (-मिलित्वा त्रीणि तानि-) त्वयि क्षिपामि । तथैव च करिष्यन्ति सर्वे मत्पश्चिमा यथार्थनामान नरा ।

तत श्वा अवदत्, ‘ तिष्ठ, तिष्ठ क्षण यावत् । नाय बिडाल मया, मत्पश्चिमेभ्य वा श्वभ्य समयम् अकरोत् ।” तत स दन्तान्

अदर्शयत्, अवदत् च, "मयि गुहायां वर्तमाने यदि त्वं शश्वत्, शश्वच्च, शश्वदेव शिशौ दयालुर्न भविष्यसि तर्हि त्वा मृगयिष्यामि यावत् हस्तगतो न भवसि; यदा च हस्तगतो भवसि, तदा त्वां दङ्क्ष्यामि। तथैव करिष्यन्ति सर्वे मत्पश्चिमाः यथार्थनामानः श्वानः।"

"अम्मो!" शृण्वती नारी अवदत्, "अतिचतुरोऽयं विडालः। तथापि न तावान् चतुरो यावान् अयं श्वा"। बिडालः शुभ्रो दन्तान् अगणयत्, (ते च नितान्त निशिताः अदृश्यन्त,) अवदत् च, "गुहायां वर्तमानोऽहं शश्वत्, शश्वच्च, शश्वदेव शिशौ तावत् दयालुर्भविष्यामि, यावत् स पुच्छं मे नातितराम् अपकर्षति। परम् अधुनाऽपि सोऽहं विडालः योऽनन्यश्चरति। सर्वेषु च स्थानेषु समदर्शी।" 'न नाम मयि अत्र वर्तमाने।" श्वा अवदत्, "यदि त्वद् अन्त्यं त्वं नावदिष्यः तर्हि शश्वत्, शश्वच्च, शश्वदेव अहं स्वं मुखं प्यधास्यम्। परम अधुना यदा यदा त्वां पश्यामि तदा तदा त्वा मृगयमाणो वृक्षस्य उपरि धावयिष्यामि। तथैव च करिष्यन्ति सर्वे मत्पश्चिमाः यथार्थनामानः श्वानः।"

ततो नरः स्वीये उपानहौ, लघु शैलपरशुं च– (मिलित्वा त्रीणि तानि–) विडाले अक्षिपत्। विडालश्च गुहायाः बहिः पलायितः। श्वा च तम् अनुधावन् वृक्षस्योपरि प्रैषयत्।

प्रेष्ठाः, तस्मात् दिनात् आरभ्य अद्य यावत् प्रतिपञ्चनर त्रयो यथार्थनामानः नराः शश्वत्, शश्वच्च, शश्वदेव विडाले वस्तूनि क्षिपन्ति यदा यदा तं पश्यन्ति, सर्वे च यथार्थनामानः श्वानः तं वृक्षस्योपरि अनुधावयन्ति। किं तु विडालोऽपि आत्मवर्तिनं समयार्धं पालयति। सः मूषकान् मारयति। गृहे वर्तमानश्च तावत् शिशुषु दयालुर्भवति यावत् ते तस्य पुच्छं नातितराम् अपकर्षन्ति। परं यदा च कृतकृत्यः सः, अन्तरान्तरा च, यदा च चन्द्रः उदयति, निशा च प्राप्नोति, तदा स एवासौ विडालः योऽनन्यश्चरति। सर्वेषु च स्थानेषु समदर्शी। ततः स गच्छति आर्द्रं वन्यारण्यं वा, आर्द्रस्य वनवृक्षस्योपरि वा, आर्द्रेषु वन्येषु गृहवितानेषु वा–स्वीयं वन्यं पुच्छं धुन्वन्, स्वीये वन्ये विविक्ते विचरन्।

* * *

## ।। ऋग्वेदे संतति–नियमनम् ।।

'सतति-नियमनम् ऋग्वेदेऽपि वर्तते' इतिवाक्यपठनादेव नैकेषां विदुषां मुखानि सस्मितानि भवेयु । परन्तु तैः सर्वैरपि लेखं पठित्वा स्वमनसि विचारणीयं यद् एतत् सत्यमस्ति न वा।

सततिनियमनं किमर्थं कर्तव्यमिति विचार्यमाणे य आधुनिक विचारो वर्तते स एवं प्रकारक । यस्मिन्नपि देशे तत्रत्या प्रजा, तत्रोत्पाद्यमानमन्न, एतयोर्द्वयोर्मध्ये सामञ्जस्यम् आवश्यकम्। यदि लोकसंख्यापर्याप्तं भक्ष्य-भोज्यादिकं तत्र वर्तते, तर्हि तत्रस्था जना सुखिन स्यु । किन्तु यदि देशे लोकानां भरणपोषणार्थमन्नमेवापर्याप्तं स्यात् अन्येभ्यो देशेभ्यो भिक्षा-वृत्तिमाश्रित्य, तदन्नस्यानयनमावश्यकं भवेत्, तर्हि तत्रस्थाया लोकसंख्याया नियमनम् अपरिहार्यमेव। भारतवर्षे जनसंख्याया आधिक्यात्, आवश्यक-स्यान्नस्याप्राप्तत्वाद्, एतादृशी दशा वर्तते । तस्माल्लोकसंख्यानियम-नार्थं सतति नियमनम् आवश्यकमेव जातम्। तस्य प्रचार मार्गान्तरा-भावात् वर्तमानयुगे योग्य एव।

परं प्राचीनकाले नासीद् भारतवर्षस्यैषा दयनीया दुर्दशा। अस्मिन्देशे आवश्यकानां भोज्यादि-पदार्थानां नासीदपर्याप्तता। यत्र तु मधुदुग्धघृता-दीनां कुल्या वहन्ति स्म, इति वर्णनं पठ्यते। तस्मिन् समये सतति-नियमनस्य विचार कथम् उत्पन्न स्याद् इति शङ्का स्वाभाविकी। तस्मान्नार्हति ऋग्वेदसदृशो ग्रन्थस्तां कल्पनां प्रकटीकर्तुम्, इत्यपि विचा-रणा न असाम्प्रता।

किन्तु विषयेऽस्मिन् पुर प्रदर्शितो विचार कर्तव्य एव। सतति-निर्माणकार्ये पुरुष स्त्री च उभावप्यावश्यकौ। न केवल पुरुष न च केवला स्त्री सन्तानम् उत्पादयितुं समर्था भवति। किन्तु तस्मिन् कार्ये पुरुषस्य आवश्य-कता तु बीजवपनार्थमेव। गर्भधारणाया पश्चात्, गर्भं धारिण्या स्त्रिया यानि दु खानि अनुभूयन्ते, सन्तानजननकाले या मरणप्राया यातना सह्यन्ते, तत्सर्वं स्त्रीणाम् एव भागधेयमस्ति। अत पीडा एता नैकवारं भवेयु इति यदीच्छा उत्पद्यते, तर्हि सा स्त्रिया एव मनसि जायेत, न पुन पुरुषाणां चित्ते। पुन पुन सतति-जननार्थं पुरुषो न कदापि निर्विण्णो भवेत्, या

निर्वेदमापद्येत सा तु स्त्री एव। तस्मात् अन्नाद्यभावेन न, किंतु जननदुःख-निवारणार्थं यदि स्त्री तस्मिन् कार्ये नियमनमिच्छति, तर्हि तस्या सा कामना न अनैसर्गिकी।

शीतलं परदुःखम् इति न्यायेन न कोऽपि ऋषिः स्वसुखहारिणी सन्तान-नियमन-विषयका प्रार्थनां कर्तुम् अर्हः। किंतु प्रार्थनामेवं प्रकारकां यदि काचिद् ऋषिका करोति तत्तु नैसर्गिकमेव स्यात्। वर्तते च ऋग्वेदस्य पञ्चमे मण्डले अष्टाविंशतितमं सूक्तं समिद्धो अग्निरिति षड्ऋचम्। अस्य सूक्तस्य विश्ववारानामिका अत्रिकुलोत्पन्ना ऋषिका। अग्निश्चास्य सूक्तस्य देवता। एषा विश्ववारा प्रार्थयत्यग्निं तृतीयस्याम् ऋचि–

'सं जास्पत्यं सुयममाकृणुष्व।'

सायणाचार्यः स्वभाष्ये अस्यार्थः स्पष्टीकृतः। हे अग्ने त्वं जास्पत्यम्। जाः जाया च पतिश्च जायापती। तयोः कर्म जास्पत्यम्। तत् सुयम सुष्ठु नियमनोपेतं सम सम्यक् कृणुष्व कुरुष्व। अत्र जा शब्दः जायापत्योः किं जास्पत्यं कर्म तत् स्पष्टमेव करोति। सुयममित्यस्य शब्दस्य प्रयोगः ऋग्वेदे नैकवारं दृश्यते। तत्र सर्वेष्वेव स्थलेषु अश्वशब्देन सह प्रयोगात् सूच्यते एतद् यज्जास्पत्यं कर्म नियमने अश्वविनयनमिव कठिनम्। अत एव विश्ववारा ऋषिकाया एषा प्रार्थना।

न केवलं विश्ववारयैव कृता एषा प्रार्थना। अन्यत्रापि दृश्यते एषा। सुविदितमेव सर्वेषां विदुषां यद् दशमे मण्डले वर्तते पञ्चाशीतितमं सूक्तं सत्येनोत्तभिता भूमिरिति। सूक्तस्यास्योपयोगः प्राधान्येन विवाह-संस्कारे। यथा भोगनियमनेच्छा स्त्रीणां स्वाभाविकी तथैव विवाहसंस्कारेण पुरुषं बन्धने स्थापयितुमिच्छापि स्त्रीणामेव संभवति। पुरुषस्याहिमन्विषये बन्धनेच्छा न स्वाभाविकी। 'एकस्य बह्वचो जाया भवन्ति' इति तु ऐतरेय-ब्राह्मणे तृतीयस्या पञ्चिकायां त्रयोविंशे खण्डे कथितमेव। अस्य कारण-मपि सुस्पष्टं वर्तते। जास्पत्यं कर्म कृत्वा तत्परिणामेन लिप्यते स्त्री, न पुरुषः। अतो 'येनैतद्दुःखं मय्यर्पितं स बन्धने अवश्यं रक्षितव्यः' इति स्त्रीणामेवेच्छा भवितुमर्हति। अद्यापि विवाहसंस्कारे 'धर्मे च अर्थे च कामे च नातिचरितव्या त्वयेयम्' इति नियमबन्धो वरस्यैव भवति, न वध्वाः। अत एव उपरिनिर्दिष्टं विवाहसूक्तम् अपि न केनचिदृषिणा दृष्टम्। अन्य

सूक्तस्य द्रष्ट्री ऋषिका एव। सप्तचत्वारिंशदृचात्मकं एतत्सूक्तमपि रचितं ऋषिकयैकया सूर्यानामिकया सवितृनामकस्य ऋषे कन्यया। सापि अस्य सूक्तस्य त्रयोविंशे मन्त्रे एतामेव प्रार्थना करोति यत्–

'सजास्पत्य सुयममस्तु देवा.।'

निर्दिष्टयो अनयो प्रार्थनयो न कोऽपि वर्तते भेद।

एवं विश्ववारायाः कथनात् सूर्यायाः समर्थनाच्च स्पष्टं ज्ञायते यद् उभे अपि सन्तानोत्पत्तिकरणे जाम्पत्ये नियमनमिच्छतः। उभयोरपि मतेन जायापत्योरेतत्कर्म सुष्ठुनियमितमेव भवितुम् अर्हति। पुराणकाले अस्य नियमनस्य उपाय एक एवासीत् मन संयम। पूर्वकाले नरा नियमपालनरता सयमितमनसश्चासन्। अधुना तु केषाचनापि नियमाना पालनाभावात् स्वाभाविकस्य सन्तान-नियमनोपायस्य स्थाने कृत्रिमा उपाया क्रियन्ते ये सुखोपभोगे क्षतिर्न स्यात् तत्परिणामश्च न भवेत्। येनापि कारणेन, केनापि प्रकारेण वा सततिनियमनमासीद्वैदिकेऽपि काले। पदार्थ–विज्ञानस्य प्रभावेण तत्सुलभ सुकरमपि जात वर्तमानकाले। अतस्तत्सर्वैरपि भारतवासिभि सुष्ठु प्रयोज्यम् इति अल्पम् अतिविस्तरेण।

'मुद्रिका' मित्रमण्डलम्
पर्वतीदर्शन, पुण्यपत्तनम् ९

'दिवेकरोपाह्वो रामचन्द्रसुतो हरि'

## ।। संयमि-सार्वभौमस्य दिग्विजयः।।

**"तेजस्विमध्ये तेजस्वी दवीयानपि गण्यते"**

आश्चर्याणा हि विविधानामेकमायतन किल भारतवर्ष । तथाहि —



अतिप्राचीन सर्वाश्चर्यावहमपौरुषेय वेदवाङ्मयमत्रैव आविर्भूतम् । यस्य शोकोऽपि पुन श्लोकताम अवाप्त तादृश पुण्यश्लोक कवि एनामेव भुवम् अलमकरोत् स्वजन्मना । अत्रैव खल्वाविरासीद वेदराशव्यवस्थापक अष्टादशपुराणाना पञ्चमवेदता प्राप्तस्य च भारतस्य प्रणता भगवान् बादरायण । अत्रैव रचयामास स्वरुधिरेण पैशाचीभाषाभूषणायमाना सप्त लक्ष श्लोक लक्षणाम् गुणाद्भुता बृहत्कथा गुणाढ्य । अष्टमे हायन चतुर्वेदविशारदत्व प्राप्ता श्रीमदाचार्या शङ्कराचार्या एनमेव देश जन्मना सचारेण च पवित्रीकृतवन्त । षोडश वर्षे आबालसुबोधया महाराष्ट्रगिरा सकलाम्नायसारसग्रहभूत दुर्विज्ञमार्थमपि गीतार्थं व्याचक्षाणा विचक्षणा ज्ञानदेवचरणा अत्रैव अवतीर्णा । अभिनव-कविकुलगुरव कवीन्द्रा रवीन्द्रा भारतरत्नगर्भाया एव गर्भरत्नभूता । धारातीर्थपतनधन्या सग्रामदेवताभूता, झाशीनगरसम्राज्ञी अस्यैव देशस्य सुकन्या । अथवा वाचाम् इदानीं किमु विस्तरेण ? सर्वमप्यस्य देशस्यानन्यसामान्यम् ।

भ्रान्तिहीनां देशभक्तिम्, अतुल्यां वैराग्यवृत्तिम् अमोघां वक्तृत्वशक्तिम्, असाधारणां च अध्यात्मज्ञानासक्तिं समकालमेव दधानानां भारतीयतत्त्वज्ञानमालायां नायकायमानानां सुगृहीतनामधेयानां श्रीविवेकानन्दस्वामिनां जन्मशताब्दीमहोत्सवं निर्वर्त्यतेऽस्माभिः साम्प्रतमनन्यमानसैः । शरदां शतं व्यतीतमवनितलमवतीर्णानां विवेकानन्दस्वामिनाम् । परिवर्तिनि संसारेऽस्मिन् कोटिशः प्राणिनः समुत्पद्यन्ते विलीयन्ते च पुनः । परं तेषामेव स्मृतिः स्मृतिवसनमिव हृदि निदधाति लोकः । येऽस्मिन् लोके लोकाराधनमेव प्रधानं कार्यं गणयन्ति शरीरयात्रायाः । ते दुर्लभास्तादृशाः । तादृशेष्वेव गुणरत्नरत्नाकरायमाणेषु पुरुषोत्तमेषु अन्तर्भवन्ति किल सम्भवन्तः 'वासुदेवः सर्वम्' इति भावयन्तः सन्तः स्वामिनः विवेकानन्दाः । अध्यात्मविद्याप्रदीपप्रकाशेन अखण्डभूमण्डलं प्रकाशितवन्तः दण्डिप्रवराः एते सत्यमेव वेदान्तस्य मानदण्डभूताः । प्रज्ञाबलेन लीलया गजान्तलक्ष्मीसंपादनसमर्था अपि भारतस्याध्यात्मिकं सामर्थ्यमाविष्कर्तुं भोगान् आहेयान् भोगानिव हेयान् मत्वा काषायाम्बरधराः धरामण्डलभ्रमणमारभन्त । ते एते खलु भारतोत्तमाङ्गभूतस्य वङ्गदेशस्योत्सङ्गे बालक्रीडां प्रौढशिक्षां सन्यासदीक्षां च यथायथं संपादितवन्तः । धन्यास्ते यद्गुणा ये तावत् शान्तदर्शिनः सर्वान् निष्ठाशान्तिपरायणः यतिगणः आक्रान्तशात्रवगणान् शूरवरानवतारमामासुर्नयनवान् ।

प्रातःस्मरणीय-चरिताः स्वामिनः गुणवेदाङ्गपुराण (१८६३)-प्रमिते ख्रिस्ताब्दे वङ्गवसुन्धरां स्वजन्मनाऽलमकुर्वन् । स्वामिनां जननी भुवनेश्वरी देवी । जनकश्च विश्वनाथः । पुत्रप्राप्तिधिया स्वामिनां जननी जननीतिमनुसृत्य तीव्रेण तपसा भगवन्तं स्थिरभक्तियोगसुलभं नीललोहितं निरन्तरमर्चयामास । तेन सुविमलतपःफलायमानं भारताभ्युदयावहं स्वामिनां जन्म सोमभूषिते वासरे समभवदित्यपि स्मरणीयं भवति । स्वामिनां नामधेयं 'नरेन्द्र' इत्यभवत् । सोऽयमनभिषिक्तो नरेन्द्रः । असिंहासनमस्य पुरुषसिंहस्य राज्यम् । अथवा सकललोकहृदयावकाशेऽस्य विराजते सिंहासनम् ।

क्रीडासक्तिर्हि बालानां स्वभावसिद्धा । परं महतां हि सर्वमप्यवजनातिगम् । तेन बालो नरेन्द्रोऽपि आसीत्क्रीडासक्तः । परं क्रीडापि तस्य

आश्चर्यावहतपश्चर्यामयी आसीत्। एकान्तप्रियता पुनरस्य अनन्यसाधारणो विशेष.। रामचन्द्रपूजा-लक्षणा, शिव-सपर्या-रूपा वाऽस्य प्रवर्तते स्म क्रीडा काले काले। मनसश्चेन्द्रियाणा च एकाग्रतारूप यत् किल अभ्यर्हित तप तत्सहजमेव आसीत् नरेन्द्रस्य। तेन जन्मसिद्धमस्य तप इति वक्तु न कोऽपि प्रत्यवाय ।

भगवदवतारभूताना श्रीशङ्कराचार्यज्ञानदेवप्रभृतीना विद्याग्रहण तावत् विश्वविस्मयकरमासीत्। स एव अनुभव नरेन्द्रचरितेऽपि पदम् अकरोत्। अथवा न तादृशा अवतारविशेषा. विद्या गृह्णन्ति प्रत्युत विद्यया एव ते स्वय गृह्यन्ते इति परमार्थ । यदाह गीता 'पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि स ' इति। एव स्थिते नवस्वरधृतिमिते (१८७९) ख्रिस्ताब्दे प्रवेशपरीक्षामुत्तीर्ण नरेन्द्र । क्रमेण च युगदिग्गजपुराणमिते (१८८४) ख्रिस्ताब्दे युगपुरुषस्यास्य सान्निध्येन बी ए परीक्षा आत्मान धन्यता नीतवती। एव परिसमाप्तो लौकिको विद्याव्रतसस्कार ।

अथ अलौकिक सस्कार । तत्र तावद् 'अथातो ब्रह्मजिज्ञासा' इति किल नरेन्द्रजीवनग्रन्थस्यादिम सूत्रम्। यत दुरधिगमब्रह्मविद्या-प्रचारायैव तस्य अवतार । पर तदर्थं ब्रह्मनिष्ठ गुरु सर्वथावश्यक । सोऽपि खलु नरेन्द्रेण सप्राप्त । जगतीतलवर्तिना सर्वेषा भागधेयवशात् कालिकाप्रसादाधिगत-त्रैकालिक-ज्ञान-सपन्नाना रामकृष्णपरमहसाना नयनसरणिमवतीर्ण क्षिप्रमेव नरेन्द्र । अपूर्वोऽय योग । तत्र तावत् शाब्दे परे च निष्णात देशिक । साधनचतुष्टयसपदा अलङ्कृतश्च छात्र । अत्र वस्तुनि–'चकास्ति योग्येन हि योग्यसङ्गम' इत्यत किमधिक वक्तव्य पुन ?

भूमिवसुवसुभूमि (१८८१) समते ख्रिस्ताब्दे प्रथम साक्षात्कृता नरेन्द्रेण ब्रह्मविद्वरेण्या विरक्ता भक्ताश्च रामकृष्णपरमहसा । विद्यासु शास्त्रेषु विवेकदीपेषु आद्येषु वाक्येषु च वर्तमाना भगवती कालिका तेषा हृदन्तरे सन्तत परिस्फुरन्ती आसीत्। एते परमहसा किल रसवसु-वसुवसुन्धरामिते (१८८६) ख्रिस्ताब्दे वसुन्धरामत्यजन् महासमाधि-मास्थाय। सोऽय रस(६)वर्षात्मक समय ब्रह्मरसमय इव अनुभूत सन्तत नरेन्द्रेण। तत्र तावद् रामकृष्णपरमहसा बहुभिर्दृष्टा बहुभि पृष्टा बहुभि स्पृष्टाश्च। पर न केषाञ्चन रोमोद्गम समजनि, न वा

अनिर्वचनीय आनन्द न वा अन्यथावृत्तिचित्तत्वम् । सर्वेऽप्येते विकारा अनेकजन्मससिद्ध-सस्कारसपन्न-मनोवृत्तौ नरेन्द्रे एव मूर्च्छन्ति स्म । सर्वोऽप्यय हृदयसवादस्य महिमा । शब्दसवादस्तु केवल निमित्तमात्रमत्र विषये । अथवा–'गुरोस्तु मौन व्याख्यान शिष्यास्तु च्छिन्नसशया'– इत्यस्य रामकृष्णविवेकानन्द-व्यतिकर स्फुट निदर्शनम् । अह तावदेव ब्रवीमि–

'ज्ञात नरेन्द्रमाहात्म्य रामकृष्णैर्यथायथम् ।
श्रीरामकृष्णमाहात्म्य नरेन्द्रेण तथा पुन ' इति ।

यथोक्त कालिदासे रघुदिग्विजये 'राज्ञा हिमवत सारो राज्ञ सारो हिमाद्रिणा' इति ।

यदि च दिग्विजयमेव लक्ष्यीकृत्य वक्तव्य स्यात् तर्हि रघुदिग्विजयाद्विशिष्यत एवास्य सयमिसार्वभौमस्य दिग्विजय । तेन रघुदिग्विजय लघुदिग्विजय इव प्रतिभाति ।

अमेरिकाया शिकागो नगरे गुणरत्नवसुभूमिते (१८९३) ख्रिस्ताब्दे गुणरत्नमण्डितपण्डितसभाया सर्वधर्मचर्चासत्रे यत् स्वीयेन ऊर्जस्वलेन भाषणेन वाचस्पत्यमाविरकारि, यच्च अद्वैतवेदान्तस्य सर्वशास्त्रमूर्धन्यत्व प्रत्यपादि यच्च सर्वधर्माभ्यर्हितत्व भगवत सनातनहिन्दुधर्मस्य प्रादर्शि श्रान्तदर्शिभि विवेकानन्दस्वामिभि तत्सर्वस्यापि भारतस्य महामहिमताविस्तारकारण भाषण दिग्विजयपर्यवसित सर्वेषामस्माक पर स्फूर्तिनिदानम् । तस्या किल सर्वधर्मपरिषदि व्याख्यानसिंहासनमधिष्ठाय धर्मेन्द्रवृन्दवन्द्या एते समर्थयामासु समर्थया गिरा यत्–

'तावद् गर्जन्ति शास्त्राणि जम्बुका विपिने यथा ।
न गर्जति महाशक्तिर्यावद् वेदान्तकेसरी' इति ।

परमार्थेन विप्रकृष्टमन्तर भारतस्य अमेरिकायाश्च । पर तत्र प्रवर्तमानाया तेजस्विना सभाया भारतगन कोऽपि तेजस्वी न केवल परिगणित किन्तु तेजस्वि-सार्वभौमत्वेन सम्मानित । यत्सत्यम्–

'तेजस्विमध्ये तेजस्वी दवीयानपि गण्यते' इति ।

संस्कृत-प्रगताध्ययन-केन्द्रम्
पुण्यपत्तनम् ७

प श्री ल. आठलेकर
एम् ए

# श्रीविवेकानन्द-शिला-स्मारक-मन्दिर-निर्माणे
# चरितार्थतां प्राप्ता कर्तृत्वशक्तिः
# श्रीमान् एकनाथजी रानडे



श्री एकनाथजी रानडे



लेखक —डॉ श्री. भा. वर्णेकर

सप्टेम्बर-मासस्य द्वितीये दिनाङ्के श्रीकन्याकुमारी-क्षेत्रान्तर्गत-विवेकानन्दशिलायां निर्मितस्य श्रीविवेकानन्द-स्मृतिमन्दिरस्य समुद्घाटन-महोत्सवो भारत-राष्ट्रपतेः सुगृहीत-नामधेयस्य सर्वलोकाभिमान्यस्य श्रीमद्-वराहगिरि-वेङ्कटगिरि-महाभागस्य अध्यक्षत्वे समपद्यत इति वृत्तपत्र-सहस्रप्रकाशित वृत्तान्तं को नु खलु न विदाङ्करोति।

"नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप" इत्यस्मिन् वचने भगवता श्रीमताम् उर्जस्विना स्वविभूतीनाम् अनन्तत्वम् उद्घोषितम्। एता सर्वा दिव्यविभूतयः भारतवर्षे स्थाने स्थाने हृदयङ्गममूर्तिरूपेण आविर्भूता इव मनोज्ञमन्दिरेषु चिराय विराजन्तेतमाम्। अनादिकालाद्

आरभ्य ब्रह्म-विष्णु-महेश्वर-प्रतीकभूताना तदवतारभूताना च राम-कृष्ण-बुद्धादीनाम् अनादिप्रकृति-प्रतिकृति-स्वरूपाणा श्री-सरस्वती-चण्डिकादीना जगन्मातृरूपाणा नाना-शतसहस्रा पाषाणमूर्तयः मन्दिरेषु प्रपूज्यन्ते सर्व भारतीयैः परया श्रद्धया। अयोध्या-मथुरा-माया-काशी-काञ्ची-अवन्तिका-जगन्नाथपुरी-द्वारावती - कोणार्क - नासिक-तिरुपति-तिरु-अनन्तपुर-प्रभृतिषु पुण्यक्षेत्रेषु प्राचीनार्वाचीनैः धर्मधुरीणैः नृपतिमणिभिः विनिर्मितानां महामन्दिराणां निःशेषं परिगणनं खलु तारागणनमिव सर्वथा दुष्कर सर्वशक्तिभृतो राष्ट्रशासनस्यापि । अत एव देशान्तरागता भारतपर्यटका मन्दिरमयमिदं भारतराष्ट्रमिति चकितचकिता इव वदन्ति लिखन्ति च।

एवं सत्स्वपि अपरिगणनीयेषु महामन्दिरेषु कन्याकुमारीक्षेत्रे रत्नाकर-नितय-कल्लोल माला-परिचुम्बित मूले भगवतीचरणाम्बुजचिह्न-पवित्रितशिखरे नात्युच्चैः वज्रदृढे पाषाणखण्डे विराजमानं राजाधिराज-मौलिमालाऽर्चनीयचरणसरोजस्य महामहिमशालिनो नवयुगजगदेकगुरो श्रीरामकृष्ण-परमहंस शिष्योत्तमस्य श्रीश्रीविवेकानन्दस्वामिनः तज्जन्म-शताब्दीस्मारकत्वेन विनिर्मितं नवमन्दिरं नूनम् अनुपममेव मे प्रतिभाति ।

दातृदृशा खण्डितम् अपि अखण्डितं राष्ट्रम्

तथाहि मन्दिरस्यास्य निर्माणार्थमावश्यको भूयिष्ठो धनराशिः न कस्यचिदेकस्य, न कयोश्चिद् द्वयोः, न वा केषाञ्चित् त्रिचतुष्पञ्चपाणां धनाधिपानां राजन्यानां वैश्यश्रेष्ठीनां वा धनकोषतः प्राप्तः, अपितु निखिल-भारतान्तर्गत-पल्ली-पत्तन-नगर-ग्राम-खेट-खर्वटवासिनां सकाञ्चनानां सुवर्णपात्रेभ्य इव अकिञ्चनानां मृत्पात्रेभ्य स महता प्रयत्नेन परःसहस्रैः कार्यकर्तृभिः सगृहीतः । अपि च हिन्दुधर्ममहिम्नः स्तोत्रोद्गातुः अस्य यतिवरेण्यस्य समभ्यर्चनार्थं हिन्दुधर्मान्तर्गत-जैन-बौद्ध सिक्ख-लिङ्गायत-सम्प्रदायानुयायिभिरिव अहिन्दवीय - ख्रैस्त - माहम्मदीय - पारसीक-साम्प्रदायिकैः सच्छीलैः वदान्यवर्यैः अहमहमिकया धनमर्पितम् । अपि च राज्याधिकारलिप्सया परस्परमनारतं लोकसभायां राज्यसभायां वा कलहायमानैः राष्ट्रवादि-समाजवादि-साम्यवादि पक्षोपपक्ष-शतानुयायिभिः विस्मृतविरोधभावैरिव परयात्मीयतया स्वीयो देयांशो मन्दिरस्यास्य निर्माणार्थं सश्रद्धं वितीर्णः । एवं मन्दिरस्यास्य निर्माणार्थं नानाविधान्तर्गत-

भेदनिमित्तं शतशः खण्डितमपि भारत राष्ट्रम् नूनम् एकीभाव प्रपन्नमिव अखण्डितरूपं सर्वैरनुभूतम् ।

सोऽयम् अभूतपूर्वश्चमत्कारो यस्य खल्वेकाकिन कार्यधुरन्धरस्य कर्मकौशलेन सर्वे ऐदंयुगीनैरस्माभि साक्षात्कृत स श्रीमान्-एकनाथरानडे-महाभागः स्वकर्तृत्वेन सुप्रथितनामधेयोऽपि अप्रथितचरित्र खलु बहूनाम् ।

## विद्या-क्रीडा-वाद्य-कला-कुशलता

अहं हि १९३० खिस्ताब्दत आरभ्य माध्यमिकविद्यालयच्छात्रत्वेन नागपुरस्थे न्यूइंग्लिशस्कूलनाम्नि माध्यमिकविद्यालये पठन्तमेन पञ्चदश वर्षदेशीय किशोरक स्मरामि । तदानीमेव नागपुरे नवोत्थितस्य राष्ट्रिय-स्वयंसेवक-संघस्य केन्द्रस्थाने स्वयंसेवक-व्रतमनेन श्रीरामकृष्णपन्तरानडे-महाभागस्य काशीनाथ-रघुनाथ-जगन्नाथ-एकनाथाख्येषु चतुरात्मजेषु चतुर्थेन एकनाथेन स्वभगिनीपते अण्णासोहोनीमहोदयस्य प्रेरणयाङ्गीकृतम् । विद्यालयाध्ययनवत् संघीये शारीरिकव्यायामयोग नानाविधासु च भारतीयक्रीडासु असाधारणमस्य नैपुण्य वयस्यै सर्वे साश्चर्यं दर्श दर्श निनरा प्राशस्यत । संघीये च रणवाद्य-वादक-वृन्दे सकलवाद्यवादनकौशलमप्यस्य सर्वमान्यमासीत् । नागपुरे ख्रिस्तमतप्रचारकै प्रवर्तिते हिस्लॉपमहाविद्यालये १९३५ तमे सवत्सरे बी ए परीक्षामुत्तीर्य क्रमश तत्त्वज्ञानविषये एम् ए परीक्षामपि १९३७ तमे वर्षे प्रथम-श्रेण्यामयमुदतरत् । विद्याध्ययनैक-निष्ठत्वेन विविधक्रीडाकौशलेन च तत्र महाविद्यालयेऽनेकेषा सहाध्यायिना प्राध्यापकाना च परमप्रेमादरास्पदमयमेकनाथ आसीत् ।

## नैव बन्धु प्राभवन् बन्धनानि

छात्रावस्थायामेव विद्यालयीनाध्ययनादपि राष्ट्रियस्वयंसेवकसंघस्य सांस्कृतिके राष्ट्रोत्थानकार्ये द्रढीयसीम् आस्थामसौ बिभर्ति स्म । नून संघ-संस्थापकेन परमपूजनीय-डॉक्टर-हेडगेवारमहाभागेन गुणवद्युवजनानि-वत्सलतया पुत्रीकृत इव आसीदयम् एकनाथ । अयमपि वात्सल्यपारावारे तस्मिन् महापुरुषे पितृतोऽप्यधिकामात्यन्तिकी निष्ठा खलु स्वहृदये बध्नाति-स्म । रात्रिन्दिव तत्साहचर्येण तदाज्ञापरिपालनेन, तद्विचारश्रवण-मनन-निदिध्यासनेन, तदितरचिन्तनविवर्जनेन च संघमयमेव जीवनमस्य शक्ति-

वृद्धि विशेष-शालिनो यौवनारम्भे ममपद्यत । सघस्थानमेव सदनं, संघ-स्वयंसेवका एव भ्रातरः, सघाधिकारिण एव आप्तजना, नित्य-नैमित्तिक-सघ कार्यक्रम-संयोजनमेव आह्निक धर्माचरणम् इत्येव सर्वंक-निष्ठतया योगाभ्यासिनामपि दुरुच्छेद्यानि पारिवारिक-प्रगमिजन-प्रणय-बन्धनानि दूरादिवोच्छिन्नानि भूत्वा नैन युवान बन्धु प्राभवन् ।

असाधारण यश संघकार्ये

तदानीतने काले सघकार्यविधाता डॉक्टरहेडगेवारमहाशयेन विदर्भ-बाह्येषु प्रदेशेषु सघशाखाजाल निर्माण-कार्यं सघटनकुशलाना सुविनीताना तरुणाना सहकार्येण समारब्धमासीत् । तथाहि सघकार्यविस्तारार्थं केचित् तरुणा महाराष्ट्रेषु केचन पञ्चनदप्रदेशे कतिपये उत्तरप्रदेशे च सत्मघ-चालकादेश शिरसिकृत्वा निरगमन् । अथ हि एकनाथ-रानडेमहाशय १९३८ तमे हिरम्नाब्दे समुत्तीर्ण-एम् ए-परीक्षाक महाकोशलविभागे प्रचारकत्वेन नागपुराद् निरगच्छत् । नचिरादेव तत्रत्येषु सकल-नगर-ग्राम-खेटेषु गत्वा गत्वा परशतान् अभिन्नहृदयान सुहृज्जनान् सघकार्यार्थम् एकीभावमापाद्य असाधारण यश सघकार्ये प्राप्तमनेन कार्यधुरीणेन ।

एव च १९३७ त १९४७ वर्षपर्यन्त महाकोशल मध्यभारत प्रदेशे सुदृढ सघशाखाजाल विस्तार्य सरसघचालकानाम् आदेशात श्रीरामकृष्ण-विवेकानन्दयो गुरुशिष्योत्तमयो अवतारभूमिभूते वङ्गप्रदेशे द्वितीय-महायुद्धाघात-परिस्थित्या शिथिलीभूत सघकार्यं सुदृढतामापादयितु प्रवि-ष्टोऽय सघटनकलाकुशल श्रीमान् एकनाथ । तत्र हि नचिरादेव वङ्गीया भाषा मातृभाषावत् आत्मसात् कृतवानय धीमान् । सार्वजनीनसभासु चास्य वङ्गभाषीय सावेश युक्तियुक्त व्याख्यान श्रुत्वा बहुधाश्चर्यचकिता इव आसन् वङ्गभाषाविशारदा अपि श्रोतार ।

अप्रकाशित प्रसिद्धिपराङमुखत्वात्

स्वातन्त्र्योदयावसरे भारतस्य विभजनेन पूर्व-पश्चिम-पाकिस्थान-प्रदेशात सहस्रशोऽथ लक्षश हृतसर्वस्वा पीडिता ताडिता निर्दलितमातृ-पितृबान्धवा हिन्दवो भारत प्रत्यशरणा इव शरणार्थमाधावन् । तदानी पूर्वपाकिस्थानत पश्चिमवङ्गप्रदेश प्रविष्टानाम् आधिव्याधिदैन्य-दारिद्र्य-

दावानलदग्धानां निर्वासितहिन्दूनां परित्राणाय समास्थापनाय च वाचन वास्तुहारा-सहायता-समिति वङ्गप्रदेशे समायोजिता श्रीमदेकनाथमहोदयेन । प्रतिक्षण प्रवर्धमानसङ्ख्याकानां तेषां दीनातिदीनबन्धूनां विपत्तिदु:खनिवारणार्थम् अहोरात्रमनारत तथा खलु प्रयतितमनेन यन्न कोऽपि तद् वर्णयितु शक्नुयात् । श्रीमत एकनाथरानडेमहोदयस्य धुरीणत्वे वास्तुहारा-सहायता-समित्या किंविध कार्यं कृतमिति बहवो विजानन्ति वङ्गीयाः । १९४९ ख्रिस्ताब्दतः अङ्ग-वङ्ग-कलिङ्गासम-कामरूप-रूपिण पूर्वाञ्चल प्रदेशस्य सङ्घकार्यभार श्रीमदेकनाथमहोदयेन अङ्गीकृत । तत पूर्वं सङ्घनिर्बन्धकाले अखिल-भारतीय-सत्याग्रहस्य सञ्चालनम् अपि अनेनैव महाशयेन सम्यक् कृतम् । एवभूतो हि देशव्यापी सत्याग्रहो न भूतो न भविष्यति । इत्थमविश्रान्त राष्ट्रोद्धारकार्यैकनिरतस्यास्य नामधेय क्वचित् वा न क्वापि वृत्तपत्रे कदाचनापि प्रकाशताम् आगतम् । प्रायेण हि वृत्तपत्रप्रकाशितनामधेया एव सुविदिता भवन्ति लोका लोकानाम् । राष्ट्रिय स्वयंसेवकसङ्घस्य वृत्तपत्रप्रसिद्धिपराङ्मुखतया न कस्यापि सङ्घकार्यधुरीणस्य नामधेय प्रायेण प्रकाशमायाति । एवमेव अस्यापि एकनाथरानडेमहाशयस्य नामधेयादिक न क्वापि प्रकाशमलभत ।

एवक्रमेण स्वगुणगणगरिम्णा कृतकार्यमहिम्ना च सङ्घकार्यधुरीणानां परमादरास्पदीभूतोऽयं महानुभाव राष्ट्रिय-स्वयंसेवक-सङ्घस्य सरकार्यवाहाभिधम् अत्युच्चैरधिकारपद १९५६ तमे ख्रिस्ताब्दे सर्वानुमत्या प्रापद्यत । गरिष्ठोऽपि स कार्याधिभारो विविध-महाकार्य-धारण-प्रतिष्ठे स्कन्धे लीलयैवामुना सम्यगूढ ।

"विविधनिमित्त काशीनगरे गिरिनगरे वा कश्मीरे ।
विहितनिवासं मातपुरे वा कृष्णातीरे शुचितीरे ।"

इत्येव वर्णितया श्रीदत्तात्रेयपद्धत्या सङ्घकार्यार्थम् आकाश्मीराद् आकन्याकुमार्या आ च कामरूपाद आ सौराष्ट्राद् प्रदेशे प्रदेशे, मण्डले मण्डले, नगरे नगरे, ग्रामे ग्रामे आबाल-वृद्धजनसमाजे निरन्तर सञ्चार कृत । एव १९३७ ख्रिस्ताब्दत १९६२ख्रिस्ताब्दपर्यन्त पञ्चविंशतिवर्षाणि सार्वत्रिकसञ्चारेण भारतराष्ट्रस्य सबहिरङ्गम् अन्तरङ्ग सम्यगनेन साक्षात्कृत

### हिन्दुराष्ट्रप्रबोधनाह्वानम्

अथ १९६३ तमख्रिस्ताब्दे ऐदंयुगीनजगदेकगुरोः महामहिमशालिनः श्रीविवेकानन्दस्वामिनः जन्मशताब्दीमहोत्सवनिमित्तं संघटितया महासमित्या, कन्याकुमारी-क्षेत्रान्तःपाति-श्रीपाद-शिलायां निर्विकल्प-समाधिव्युत्थानावस्थायां साक्षात्कृतात्मधर्मणस्तस्य महापुरुषस्य हृदयंगम-यशःकीर्तिपताकायमानं परम्परागत-भारतीयशिल्पकलाकौशल्य-निरूपायमानम् अद्वा श्रद्धासान्द्रहृदयानां जनानां कार्मणकर्मभूतं नूतनं मन्दिरं विनिर्मातुम् ऐकमत्येन निर्णीतम्। तदानीम् अस्य महाकार्यस्य सुदुर्धरं भारं वोढुं समर्थः श्रीमान् एकनाथ-रानडे-महाभागः सर्वेषां तत्कर्तृत्व-विशेषज्ञानां स्मरणसरणीम् अवतीर्णः। सर्वस्मिन् अस्मिन् भारतवर्षे स एक एव महाशयः कार्यभारममुं निर्वोढुं समर्थो नेतरो नेतारः इति निर्णीतसारैः सर्वैरैकमत्येन कार्येऽस्मिन् विनियोजितः अनेकगुणसनाथः श्रीमान् एकनाथः। उररीकृतनत्कार्यभारेणामुनाऽपि प्रथमत एव समग्रं विवेकानन्दवाङ्मयार्णवं मीमांसकाग्रहमवगाह्य सम्मूर्छितसंचयमयः "हिन्दुराष्ट्रप्रबोधनाह्वानम्" (Rousing Call to Hindu Nation) इत्याख्यः ग्रन्थः संग्रथितः। विवेकानन्दस्वामिनः राष्ट्रोत्थानसन्देशरहस्यमेव खलु अस्मिन् ग्रन्थे संपिण्डितं वर्तते। हिन्दी-मराठी प्रभृतिषु प्रादेशिकभाषासु च ग्रन्थस्यास्यानुवादाः शीघ्रं प्रकाशिताः।

### समुज्जृम्भिता पुरुषार्थशक्तिः

यस्मात् क्षणादमुनाऽसौ कार्यभारोऽङ्गीकृतः ततः प्रभृति मन्दिरस्यास्य निर्माणार्थं स यद्वत् प्रयतितमिति साकल्येन वर्णयितुं न प्रगल्भा मे वाणी न च पर्याप्तेयं परिमितपत्रसंख्याका पाक्षिक-पत्रिका-रूपिणी 'शारदा'। तथा हि आदावेव नानानिमित्तं स्व-परजनानां बहूनां कार्यार्णवेऽस्मिन् समुत्तिष्ठमानं विरोधम् अस्थानोत्थितं मैनाकमिव प्रशमय्य प्राप्तव्यसिद्धिं स्वायत्तीकर्तुं प्रस्थितोऽयं कर्मवीरः। यत्र श्रीपाद-शिलायाम् एतदभूतपूर्वं मन्दिरं निर्मातव्यमासीत् तत्र हि तृणकणः पानीयजलबिन्दुरपि दुरापः आसीत् प्रबलप्रयासैर्विना किं पुनरन्यदपि किञ्चिद्। तदेवं कण्टकाकीर्णमिव वर्तव्यम् अवलोक्य समुज्जृम्भितेवास्य पुरुषार्थशक्तिः। सर्वाङ्गसञ्चारिण्या तयाद्भुतशक्त्या, हृदयस्थितया च श्रीविवेकानन्द-स्वामिभक्त्या

पञ्चभि एव वर्षै भावुक-लोचन-चकोर-चन्द्र-मण्डलायमानम् अनुपमानं विंशतितमशताब्दीशेखरायमाणम् इद परमरमणीय श्रीविवेकानन्दस्मृति-मन्दिर सम्पूर्णता नीतम् । अस्य निर्माणे श्रीमत एकनाथ रानडेमहाभागस्य कर्तृत्व विचिन्तयतो मादृशस्य स्मृतिपथेऽवतरति,

" अङ्गनवेदी वसुधा कुल्या जलधिः स्थली च पातालम् ।
वल्मीकश्च सुमेरुः कृतप्रतिज्ञस्य वीरस्य ॥ "

इतीद पुभाववाग्देवताया श्रीवाणभट्टस्य सुभाषितम् ।

चरितार्थता प्राप्ता कर्तृत्वशक्ति.

भारतवर्षे लब्धजन्मना येन मानवेन नारूढो नगाधिराज, नावगाहिता स्वर्णदी, नालोडित महाभारत, नास्वादित रामायण, नाकर्णित भागवत, न वा समधिगता सुरभारती तस्य जन्म निरर्थकमेव सर्वथा । साम्प्रत श्रीपादशिलाधिष्ठित श्रीमदेकनाथमहोदयस्य कर्तृत्वेन साकारता गतस्य श्रीविवेकानन्दस्वामिन स्मृतिमन्दिरस्य सर्वाङ्गीण सौन्दर्य सौष्ठव च विचिन्त्य ब्रूमहे यद् येन खलु शताब्दयामस्या लब्धजन्मना मानवेन मन्दिरमिद न लोचनगोचरता नीयेत तस्याऽपि जन्म निरर्थकमेव भविष्यति । धन्य मन्बहमात्मान मन्ये येन मयाऽवाल्यत सुदृढ परिचय नितरा सुहृद्भावश्च प्राप्त एतन्मन्दिर-निर्माण विचक्षणस्य श्रीमत एकनाथरानडे-महाशयस्य । धन्य खलु स एकनाथो यस्य सघकार्य-सस्कार-समुद्दीपिता कर्तृत्वशक्ति, राष्ट्रभक्तिप्रवर्तकस्य महायोगिन श्रीविवेकानन्दस्य प्रथम-रमणीय-मन्दिरनिर्माणे चरितार्थता प्रापिता जगत्सूत्रधारेण परमेश्वरेण ।

वागीश्वरी-निवेदनम्
८१ अभ्यकर नगरम्
नागपुरम् ३

# न भूतो न भविष्यति ।

विवेकानन्दयोगर्षिस्तत्त्वज्ञानप्रपण्डित. ।
दिव्यो दिगन्तकीर्तिः स सार्थं राष्ट्रगुरू गुरुः ।। १

यन्माता स्त्रीजगत्सर्वं, जन्मदा " भुवनेश्वरी " ।
तया बाल्ये नरेन्द्रोऽयं सुसंस्कारैः सुसस्कृतः ।। २

' रामकृष्णो ' गुरुर्यस्य स्नेही ' श्रीमोक्षमूलरः ' ।
शिष्या ' निवेदिता ' यस्य सोऽद्वैताश्रमकारकः ।। ३

बभूव भाषणेनैव सुविख्यातो विभूतिमान् ।
मनोजवेन तत्कीर्तिः प्रससार दिशो दश ।। ४

भवद्दृष्टि. सदाऽऽसीच्च शिवे सत्ये च सुन्दरे ।
तत्समो शिवकृत् स्वामी न भूतो न भविष्यति ।। ५

सत्यपूजक आसीत् स सत्यवाक् सत्यतत्परः ।
तत्सम. सत्यवान् स्वामी न भूतो न भविष्यति ।। ६

वैराग्यमूर्तिर्मतिमान् प्रभविष्णु प्रभाववान् ।
वपुष्मांस्तत्समो स्वामी न भूतो न भविष्यति ।। ७

पाश्चात्या विस्मिता सर्वे दृष्ट्वा तत्संयमं यमम् ।
तत्सम संयमी स्वामी न भूतो न भविष्यति ।। ८

अभ्रे ताराः, कविषु कविता, चञ्चला वारिवाहे ।
धर्मे क्षेमं, यमिषु नियम सत्यशीलेषु सत्यम् ।। ९

यावच्च स्तो जनहितकरौ सूर्यचन्द्रौ धरायाम् ।
तावन्नूनं जनगणहितं स्वामिनं पूजयाम ।। १०

चटपत्तनस्थ. मा. वि. देवासकरः

॥ भाषासु मधुरा दिव्या पवित्रा सुरभारती ॥

श र्क रा

गृहोपयोगाय ...

निर्यातकरणाय

भारत-राष्ट्रे शर्करानिर्मातृषु
प्रति-एकर-क्षेत्रम् इक्षु-निर्माणे
शर्करानिर्माणे च अग्रत.सराणाम्
अस्माकम् राष्ट्रोत्कर्षे राष्ट्रविभवे
श्रे यो भा गि ता
.अ भि मा ना स्प द म् ।

## गोदावरी-शर्करा-कर्मान्तः मर्यादितः

( दि गोदावरी शुगर मिल्स लि )

कार्यदर्शी प्रतिनिधिः—
के जे. सोमैया ॲण्ड सन्स प्रायव्हेट लिमिटेड
फाजलभॉय बिल्डिङ्ग फोर्ट, महात्मा गान्धी-मार्ग, मुम्बई १

दीपावली–नववर्ष–शुभचिन्तनम्

## ॥ श्रीस्वामिविवेकानन्दपुण्यस्मरणम् ॥

श्रीमता स्वामिना विवेकानन्दपूज्यपादाना जन्मना भारतमाता धन्यता प्राप्ता एकोनविंशतितमस्य शतकस्य त्रिषष्टितमे ख्रिस्ताब्दे ।

भारतीय-तत्त्वज्ञानस्य प्रदीप न केवल स्वदेशे प्रज्वालितो भवद्भि अपि तु पाश्चात्याना विद्वद्वराणा बुद्धि दृष्टि च स्तिमितता नीता तत्प्रकाशाद्भवद्भि स्वामिवरेण्यै ।

ज्ञानकर्ममये लोहमार्गे स्वराष्ट्रस्योन्नतिरूप अग्निरथमिव गतिमन्त कृत्वा विंशतितमस्य ख्रिस्ताब्दशतकस्य द्वितीये वर्षे स्वामिन श्रीविवेकानन्दमहोदया परे ब्रह्मणि विलीनाऽभवन् ।

अस्मिन् जगति कालगणनाया प्रत्येक शतक कालरूपिणोऽग्निरथस्य एकैक स्थानकमिव प्रतिभाति । ख्रिस्ताब्दस्य विंशतिशतकरूपे स्थानके सर्वेऽपि वय तिष्ठाम । अस्मिन् स्थानके श्रीस्वामिन विवेकानन्दमहोदया कञ्चित्काल स्थिता तथापि दुर्भाग्य सर्वेषाम् अस्माक यद्वय तेषा पावन दर्शन कर्तुम् असमर्था आस्म । अपि सन्ति अधुना केऽपि महाभागा यै तेषा दर्शन कृत प्रवचन वा श्रुतम् । इयमपि तद्दिव्यम् अस्माक भाग्ये न लिखितम् ।

किन्तु येषा पुण्यवता तद्भाग्यम् आसीत् ते सर्वेऽपि एकमत्येन वर्णयन्ति यत् श्रीविवेकानन्दस्वामिमहोदया यथार्थतया परमेश्वरांशा इव प्रत्यदृश्यन्त इति । तेषा वाणी दिव्यशक्तिमती । तेषा व्यक्तित्वम् असामान्य दिव्यम् अनुभावविशेषयुक्त च । कश्चिद् बालक स्वामिवरान् स्वगृहद्वारम् उपस्थितान् वीक्ष्य सोद्घोष स्वपितरमकथयत् पश्य, 'तात, राजा आगत, अस्माक गृह राजा आगत' इति ।

अमेरिकासचालितजगद्धर्मपरिषद पश्चादेव श्रीविवेकानन्दस्वामिवरा जगत्प्रसिद्धा अभवन् । तथापि तत्पूर्वम् अपि यस्य यस्य दृष्टिपथम् आगता इमे स्वामिवरास्तस्य तस्य चेतसि सपदि एकमेव मत निश्चित यत् दैवीसम्पदलङ्कृता इमे महानुभावा इति । जापानदेशगतान् विवेकानन्दमहोदयान् दृष्ट्वा अयमेव भगवान् बुद्धस्तथागत आगत इत्यमन्यन्त तत्रत्या जना ।

लोकमान्य-तिलकमहोदयानाम् आतिथ्यशीलेषु गृहेषु इमे अनामि-संन्यासिरूपेण कञ्चित्कालं वासमकुर्वन्। तदा तेषां व्यक्तित्व-वक्तृत्व-विद्वत्त्वादिभिः श्रीतिलकमहोदया अतीव प्रभाविता आसन्। जगद्धर्म-परिषदनन्तरं स्वामिवराणां छायाचित्राणि वृत्तपत्रेषु दृष्ट्वा श्रीतिलक-महोदयैरभिज्ञातं यत् अयमेव स संन्यासी यो मद्गृहान् तीर्थीकृत्य गत इति।

स्वामिपूज्यपादानां समकालीनः सद्दर्शनपुनीतात्मानोऽत एव धन्य-जन्मानो नाना जना लिखन्ति यत् स्वामिवराणां नेत्रद्वये वाण्यां च दिव्यं तेजो निवसतीति। तत्सर्वं पठित्वा मन्ये अहं यद् उपनिषदां वाक्यानि अग्निर्वाक् भूत्वा मुखं प्राविशत्। आदित्यश्चक्षुर्भूत्वा अक्षिणी प्राविशत्। चन्द्रमा मनो भूत्वा हृदयं प्राविशत् इत्यादि स्वामिवराणां विषये अतीव उपपन्नानि इति। ऐतरेयवत् मुण्डकोपनिषदपि वर्णयति :—

अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ।
दिशः श्रोत्रे वाक् विवृताश्च वेदाः॥
वायुः प्राणो हृदयं विश्वमस्य।
पद्भ्याम् पृथ्वी एष सर्वभूतान्तरात्मा॥

इत्यादि-विराट्-वर्णनं श्रीस्वामिवराणां विषये यथार्थं प्रतिभाति।

वेदानाम् उपनिषदां संस्कृतमहाकाव्यानां च पावनानि दिव्योदात्तानि वचनानि श्रीविवेकानन्दमहोदया अतीव मधुरं धीरोदात्तं गायन्ति स्म। तत् श्रुत्वा अर्थम् अधिगम्यानधिगम्यापि आत्मनं कृतार्थं धन्यं पुनीतं चान्वभवन्सर्वे श्रोतारः। विवेकानन्दमहोदयैः गीतं भजनं श्रुत्वा तेषां गुरुचरणाः श्रीरामकृष्णपरमहंसा. ब्रह्मानन्दस्य परां कोटिं अध्यगच्छ-न्वारंवारम्।

सर्वदैव गुरुः सारं मितं मधुप्रवचनं व्याख्यानं च तेषां समस्तस्य विश्वस्य चेतसि भारतीयं धर्मं, भारतीयं तत्त्वज्ञानं, भारतीयां संस्कृतिं च पूजास्पदम् अकरोत्। विश्वस्मिन् अस्मिन् सर्वे एव धर्ममार्गाः एकमेव परमेश्वरं गच्छन्ति इति अनेक श्रुतिवचनैः स्पष्टीकृतं विशदीकृतं तेषां विधानं पाश्चात्य-विदुषां प्रीतयेऽभवन् तथा चानेन विश्वबंधुत्वभावना वृद्धिंगता।

विद्याऽविद्ये इति द्वयमपि मानवस्य जीवने नितान्तमावश्यकमस्ति। शरीरस्य मनस बुद्धे उन्नतिः अविद्याशब्देन सूचिता। तथा आध्यात्मिकी मानवोन्नति विद्याशब्देन सूचिता। आधिभौतिकी तथा चाध्यात्मिकी उन्नतिर्मानवजीवने समानतया महत्त्वमर्हति। शरीरमनोबुद्ध्यादिक समर्यम् उन्नत कृत्वैव आध्यात्मिकज्ञानाय नर पात्र भवति। यत्र शरीरमनोबुद्ध्यादीना दौर्बल्य तत्र कथम् आत्मज्ञान भवेदिति स्वामिवराणा निश्चित मतमासीत्। 'आप्यायन्तु ममाङ्गानि। भद्र कर्णेभि श्रृणुयाम देवा। भद्र पश्येम अक्षिभिर्यजत्रा। स्थिरै अगै तुष्टुवासस्तनूभिर्व्यशेम देव हित यदायु इत्यादिश्रुतिवचनानुसारिणो विवेकानन्दमहोदया सर्वतो दुर्बलाना भारतीयाना दुर्दशाम् उद्दिश्य तदा विचारसागरे मग्नाऽभवन् यदा ते कन्याकुमारी-समुद्र-तट-वर्तिनि महति शिलाखण्डे समासीना आसन्। दुर्बल निर्धनम् अज्ञान पङ्कमग्न च भारत ज्ञानविज्ञानयुक्त सपूर्णतया समर्थं च कर्तुम् आमरण यतिष्ये इति तै प्रतिज्ञात तत्रैव तस्मिन् शिलाखण्डे। ततश्च प्रतिज्ञापूर्ति-साधनरूपो श्रीरामकृष्णमिशननामधेयो विश्वव्यापक आश्रम स्थापितस्तै। ततश्च समारब्धा सुप्तस्य अवनतस्य भारतस्य जागृति उन्नतिश्च। रोगजर्जरम् अज्ञानपङ्कपरिमग्नम् अपेतसार भारत सर्वविपद्भ्य उद्धर्तुम् उन्नेतु च यतते सदा अयम् आश्रम स्वामिवराणाम्।

विज्ञानाधिष्ठितमाधुनिक जगत् यद् यत् तर्कसिद्ध तत् तदेव स्वीकरोति इति ज्ञात्वा श्रीस्वामिवरै प्रवचन-व्याख्यानद्वारा प्रदर्शित यत् अस्माक वैदिक-धर्म तर्कस्य अग्निपरीक्षायाम् अपि यशस्वी भवतीति। भारतीयाना यद् यद् सत्य शिव सुदर सत् तत् स्वामिवरै पाश्चात्याना समुख प्रस्थापितम्। तेषामपि यद् भारतीयैर्ग्राह्य — अनुशासनशीलता, उद्योगप्रियता, सघटनाचातुरी इत्यादिक स्वदेशवासिना पुरत उपस्थापितम्। अत महतो महीयस यस्य महात्मन आनृण्य न पौर्वात्या न चापि पाश्चात्या गन्तु प्रभवन्ति तस्मै श्रीविवेकानन्दविभूतये अनन्तमिता प्रणामा।

पुणे-विद्यापीठम्
पुणे ७

सौ सुमति विष्णु नारळीकर
एम् ए.

शारदा-गौरव-ग्रन्थ-माला ... २५

# श्रीविवेकानन्दचारितम्




लेखकः

डॉ. ग. बा. पळसुले
M. A. Ph.D.




मूल्यं . रूप्यकदशकम्

प्रकाशकः
प. वसन्त अनन्त गाडगीळ
शारदा-गौरव-ग्रन्थमाला
४२५ सदाशिवपेठ, पुण्यपत्तनम् ३०

* * *



* * *

मुद्रकः
प. वसन्त अनन्त गाडगीळ
श्रीशारदा-मुद्रण-सिद्धि-मन्दिरम्
४२५, सदाशिवपेठ, पुण्यपत्तनम् ३०
यशवन्त-मुद्रणालय.
१०३५, सदाशिवपेठ, पुण्यपत्तनम् ३०

# अथातो....

'शारदा'-संस्कृतमासिकस्य वर्षारम्भविशेषाङ्कार्थं मया विवेकानन्द चरित लेखनीयम् इति इच्छा 'शारदा'कारै श्री गाडगीळ-वसन्त-शर्मभि. एकवर्षात् पूर्वं प्रकटिता। मयाऽपि तदानी सच्चरित-कीर्तन-लोभात् 'यत्र देवदूता पदमपि अर्पयितु बिभ्यति, तत्र मूर्खा त्वरमाणा. प्रविशन्ति' इत्यर्थकम् आङ्ग्लम् आभाणक विस्मृत्येव झटिति चरित-लेखनम् अङ्गीकृतम्। मे-मासस्य अन्त यावत् तु पूर्वारब्धे वीर-सावरकर विषयकस्य नाटकस्य लेखनकर्मणि अह व्यापृत आसम्। जून-मासे तस्य समाप्तौ लब्धावकाशो विवेकानन्दचरितार्थे आधारग्रन्थान् पठितुम् चरितलेखनसामग्री च सयादयितु प्रारभे। २-९-१९७० दिने (विवेकानन्द-शिला-स्मारकस्य उद्घाटन-दिने) ग्रन्थप्रकाशन भवतु इति सकल्पितम् आसीत्। तस्य असभवस्तु नचिरादेव प्रत्येतुम् आरब्ध। लेखनार्थ-लभ्यस्य कालस्य मर्यादितत्वेऽपि चरित यथाशक्य समूलम्, साधारम्, अनुज्झित-महत्त्वपूर्णघटन च भवतु इति हेतुना लेखन व्यलम्बत। अन्तरान्तरा आपतितस्य मम शारीरिकस्य अस्वास्थ्यस्य हेतो तत् व्यलम्बत-तराम्। गतान् पञ्चषान् मासान् लेखन मुद्रण च इति उभयमपि समकाल प्रावर्तत। एव धावत्पलायतारूपस्य व्यापारस्य फलरूपेण यत् 'विवेकानन्द-चरितम्'-सम्प्रति वाचकेभ्य उपहारीक्रियते, तस्य गुणागुणयो. सरसत्व-नीरसत्वयो, ग्राह्यत्वाग्राह्यत्वयोश्च विषये संस्कृतप्रेमिण सारासारकुशलाश्च रसिकवाचका एव प्रमाणम्।

प्रस्तुतस्य 'विवेकानन्द-चरित'स्य मूलाधारोऽस्ति विवेकानन्द-स्वामिना 'पौरस्त्यपाश्चात्यै शिष्यै' लिखितम्, मायावती-अद्वैताश्रमेण च प्रकाशित विवेकानन्द-चरितम् ('The Life of Swami Vivekanada' by his Eastern and Western Disciples)। इम ग्रन्थ प्रमाणीकृत्य, अन्यैश्च विवेकानन्द-चरितै. त परिपूर्य मया प्रस्तुत 'विवेकानन्द-चरितम्' प्रणीतमस्ति। (तम् उद्दिश्य कृता. पृष्ठनिर्देशा: १९४४ ख्रिस्ताब्दे प्रकाशितां द्विखण्डा तृतीयावृत्ति लक्षयन्ति।)। एत मूलग्रन्थ विहाय रोमाँ

रोलौ-लिखित The Life of Vivekananda and the Universal Gospel ( 6th imPression calcutta 1965 ) 'राष्ट्रद्रष्टे स्वामी विवेकानन्द' वि. वि पेंडसे, 'स्वामी विवेकानन्द' त्र्य ग बापट, 'स्वामी विवेकानन्द' भीमराव कुलकर्णी इत्येतानि विवेकानन्द-चरित्राण्यपि मया उपयुक्तानि। श्री महेन्द्रनाथ-गुप्त विरचितस्य 'श्रीरामकृष्ण-वचनामृत' इत्यस्य त्रिखण्डो मराठी-अनुवादोऽपि (श्रीरामकृष्णाश्रम, नागपूर) विवेकानन्दाना (तदानीतनस्य नरेन्द्रस्य) श्रीरामकृष्ण-परमहंसै सह लब्ध-सहवासस्य जीवितस्य वर्णनार्थं मया प्राचुर्येण उपयुक्तता नीतोऽस्ति। तस्य द्विसख्यो निर्देश क्रमेण खण्ड पृष्ठ च लक्ष्यीकरोति। क्वाचित् मात्रया उपयुक्तम् अन्तिम पुस्तक नाम श्री पेंडसे महोदयाना 'विवेकानन्दकन्या निवेदिता।' विवेकानन्द-चरित-रत्ले एतै पूर्वसूरिभि कृतवाग्द्वारत्वात् मम स्थूलाऽपि लेखनी सुखप्रवेशाऽभूत् इति कृतज्ञेन मया निर्देष्टव्यम्। सस्कृते विवेकानन्द स्वामिना चरित नास्ति, अत सुबोधया सस्कृतभाषया तत् लेखनीयम् इत्यव मम अल्पो हेतु आसीत्। (कुत्रचित् तु घटनाविशेषाणा कालनिर्धारण मया प्रयतितम् अस्ति, पूर्वसूरीणा अल्पस्वल्पा प्रमादाश्च शुद्धीकृता सन्ति।) अत एतावन्ति पूर्वलिखितानि चरितानि मया पर्याप्तसामग्रीतया अवगतानि। यथास्थितस्य स्वामिना चरितस्य सरलेन निवेदनमात्रेण सतुष्टोऽहम्। न मया तत्र सप्रदायदर्शिनि वैयक्तिकमत्यधिष्ठिते व्याख्यानविशेषे लेखनी व्यापरिता।

अस्मिन् ग्रन्थ विपुला टिप्पण्य उपलभ्येरन्। (प्राय २५० , ग्रन्थमत्यायाः पञ्चमोऽश टिप्पणीरूपोऽस्ति।) यत्र यत्र चरितविषयक कश्चित् भाग न पर्याप्त प्रमाणित आसीत्, आख्यायिकान्तर-स्वरूपको वा प्रासङ्गिको वा अन्यत वा येन तेन प्रकारेण गौण आसीत, तत्र तत्र स टिप्पणीरूपेण प्रदत्तोऽस्ति किं च अशक्यम् एकस्या भाषाया सामर्थ्यं सौन्दर्यं वा कात्स्न्येन भाषान्तरे सक्रमयितुम्। अत अनेकानि उद्धरणानि (विशषत स्वामिनां वचनानि) टिप्पणीषु आङ्ग्लभाषया प्रदत्तानि सन्ति। मूलग्रन्थनिर्दिष्टा केचन सदर्भा सति आवश्यके टिप्पणीषु स्पष्टीकृता सन्ति। सन्ति, तेन प्रकृतुल्या प्रसङ्गा विचारा वा तथैव टिप्पणीषु उदाहृता सन्ति। केचित् स्वोपज्ञा शब्दा अपि (वस्त्रकोश, नौकाशय-, विगणय्य-कारिन्-, श्वासभाषित- इ ) मार्यापर्यायै तत्र व्याख्याता सन्ति।

संस्कृतलेखने व्याकरण- शब्दसंग्रहयोर विषये मम काचित् स्वीया शैली अस्ति। (नात्र तस्या प्रपञ्च क्रियते।) संधिविषये 'बहुलम्' वर्तते (यद्यपि व्यवस्थितविभाषाऽपि क्वचित् दृश्येत।) पदविवेक सेट्-त्वानिट्त्वादीना विषये क्वचित् शैथिल्य स्यात्। मित्र-शब्द (सुहृद्वाची) सदैव पुंसि प्रयुक्तोऽस्ति। स्कन्धास्कन्धि, नेत्रानेत्रि इत्यादय शब्दा कदाचित् वृद्धसमति नोपलभेरन्। खादतमोदता-सदृशा शास्त्रोक्ता शब्दा प्रयोगेण परिचिततरा कृता सन्ति, तदनुकरणरूपेण च धावतपलायता इत्यादय शब्दा निर्मिता सन्ति। चिलम्, टेबल, हुक्का, फकीर, दिवाण इत्यादय शब्दा तथैव स्थापिता सन्ति। अतिशयोक्ति परिहृत्य स्वभावोक्ति आश्रिताऽस्ति। सर्वमिद संस्कृत सुबोध लोकाभिमुखम् अन्यूनानतिरिक्ततया सूक्ष्मार्थवाचक च कर्तुम् उपकुर्याद् इति मन्ये।

श्री गाडगीळ वसन्तरायै अहम् अस्मै चापलाय प्रचोदित, उत्तमर्ण इव च अधमर्णं भूयो भूयो माम् उपगम्य ते ग्रन्थसमाप्ति यावत् विश्रामस्य नामापि ग्रहीतु मा नान्वजानन् इयत एव एवम् अल्पावकाश अय ग्रन्थ समाप्ति गन्तुम् अशक्नोत्। तेन ते एव वस्तुत अस्य श्रेयोभाज। संस्कृतग्रन्थप्रकाशन नाम साहसमेव किंचित्। तदिद साहस तेषा श्रियै भवतु। लेखनकार्ये प्रचलति नैकदा फ्लू-रोगेण आक्रान्तत्वात् लेखनासमर्थे मयि सति मम पुत्रेण आयुष्मता प्रमोदेन मम लेखकत्व प्रमोदेन अङ्गीकृतम्, दीपावली-सुलभा च खादतमोदता स्वेच्छया परित्यज्य होरानुहोरम् आसनबन्धधीरेण तेन मदुक्त पत्रार्पित कृतम्। परिशिष्ट-रूपेण प्रदत्ता 'विवेकानन्द चरिते निर्दिष्टाना व्यक्तीना सूचि' मम शिष्यया कु आशा फडके इत्यनया निर्मिताऽस्ति। तया स्वयमेव लेखकत्वसिद्धताऽपि प्रदर्शिता। मम मित्रोत्तमै डॉ बण्डोपन्त गुजर इत्यतै मम अस्वास्थ्यकाले तैस तैर् उपचारै मम उत्साहसपदम् अखण्डा रक्षितु प्रयतितम्। श्री त्र्य रा दामले महोदयै प्रूफवाचने साहाय्य कृतम्। श्री उल्हे प्रभृतिभिश्च संस्कृताक्षर-संयोजने लब्धकौशलै टङ्क-संयोजकै अकुरकुरायितैर्वा सर्वात्मना सहकार्यं कृतम्। सर्वेषाम् एतेषाम् अह कृतज्ञोऽस्मि।

गतान् पञ्चषान् मासान् अह विवेकानन्दमय इव आसम्। उत्क-

टैकचोटिकम्, प्रवृत्ति-निवृत्तिभ्यां च पर्यायेण सततम् उभयथा आकृष्यमाणम् विवेकानन्दव्यक्तित्वं किमपि गभीरं रामणीयकं बिभर्ति। अग्निकुण्ड इव दाहकं तत् एकतः बलोपासनम् आत्मविश्वासं च आगृह्णाति, अपरतश्च दीनदुर्बलान् प्रति परमकारुणिकतां बिभ्राणं तत् निजां कोमलशीतलतां प्रदर्शयति। साधुसन्तैः प्रागेव उपदिष्टायै नरनारायणसेवायै स्वामिभिः किमपि नवीनं परिमाणमिव प्रदत्तम्। समाजसेवया मोक्षः –मोक्षार्थं वा समाजसेवाम्–उपदिश्य तैः सनातनधर्म-युगधर्मयोः समन्वयः कृतः। अस्य ध्येयस्य च साकारीकरणार्थम् अत्यन्तपरित्यक्तस्वार्थानां विरागिणां शुद्धचरितानां अनुशासन-बद्धानां च जनानां संघटनामन्त्रः तैः उद्गीतः। विवेकानन्दानाम् उपदेशप्रभावः न केवलं रामकृष्णसंघे, अन्यत्रापि दृश्यते। एतादृशस्य, राष्ट्रवादम् अतीत्यापि राष्ट्रभक्तशिरोमणेः चरितस्य अभ्यसने, तस्य च देववाण्याम् अक्षरीकरणे मया कोऽपि आनन्दः अनुभूतः। सम्प्रति मुद्रितपृष्ठानि परिवर्तयमानोऽहं जाने 'ते हि नो दिवसा गताः'। वाचकोऽपि तस्य पठनेन एतादृशं कमपि आनन्दम् अनुभवतु। यदि च राष्ट्रस्य पुनरुद्धारार्थम् आवश्यकस्य विवेकानन्दप्रदत्तस्य मन्त्रस्य एतद्ग्रन्थपठनेन किंचिदपि पुनः स्मरणं स्यात् तर्हि तावतापि अहम् आत्मानं धन्यं मन्येय।

संस्कृत प्रगताभ्यास केन्द्रम्
पुणे-विश्वविद्यालय
पुण्यपत्तनम् ७

ग. बा. पळसुले

प्रकाशकीयम् –

# रौप्यमहोत्सव भाग्यम्

शारदा । संस्कृत-पाक्षिकम् । तदङ्गभूता शारदा-गौरव-ग्रन्थमाला । गत-दश-वर्षाणि ग्रन्थ-रत्नानि प्रकाशयन्ती विजयते । चरितम्, महाकाव्यं, नाटक, योगभाष्य, शब्दकोशः इति तत्र वैविध्यं रत्नानाम् । अस्मिन् दशमे वर्षे माला विवेकानन्दचरित प्रकाशयति । पञ्चविंशतितमं रत्नम् । अत एव रौप्यमहोत्सवभाग्या वयम् ।

विवेकानन्दसदृश पुरुषश्रेष्ठ चरितनायकः । डॉ. पळसुलेसमः शब्दप्रभु. चरितलेखक । भारते विवेकानन्द-स्मृति-मन्दिरम् अपि सागर-त्रिवेणी-सङ्गमे नचिरमेव सिद्धम् । अत. सर्वथैव समुचितकाले मालाभाग्योदयेन स्वात्मानं धन्यं मन्यामहे ।

इत्थम् एव प्रार्थयामहे नव-नवीन-सारस्वतान् ग्रथनार्थं ग्रन्थ-रत्नानाम् । विविधेषु विषयेषु । विविधासु शैलीषु । मालामण्डित-विविध-पुष्पाणां सुगन्धेन सुप्रसन्ना परमकारुणिका भगवती शारदाम्बा तदर्थं नः प्रचोदयात् इत्येव साभिवादनं प्रार्थयामहे ।

– वसन्त अ. गाडगीळ

# अनुक्रमणिका



स्थापकाय च धर्मस्य सर्वधर्मस्वरूपिणे ।
अवतारवरिष्ठाय रामकृष्णाय ते नमः ॥

विवेकानन्दः



"अहं सः अपारः महासागरोऽस्मि,
यस्य बुद्ध-खिस्तादयः तरङ्गाः सन्ति ।"

विवेकानन्दः

॥ ॐ ॥

# १. जन्म

दत्तान्वये शुद्धिमति प्रसूत शुद्धिमत्तर ।
नरेन्द्र इति योगीन्द्र शिवांश इव मूर्तिमान ॥

जगन्नियन्ता परमेश्वर तस्मिन् तस्मिन् काले, तस्मिन् तस्मिश्च देशे, स्वसूत्रानुसारेण तास्तान् महापुरुषान् इह अवतारयति। गत-शताब्द्या भारतीय-स्वातन्त्र्य विलोप्य आङ्ग्लसाम्राज्ये अत्र सुप्रतिष्ठिते पारतन्त्र्येण उद्वेजिता अनेके महापुरुषा जनजागरणार्थम्, जनमनसि पारतन्त्र्य-विद्वेष स्वातन्त्र्यलालसा च जनयितुम्, प्रयत्नान् अकुर्वन् । स्वस्व प्रवृत्त्यनुसारेण केनचित् राजकीय क्षेत्रे कार्यं कृतम्, केनचित् सामाजिके, केनचिच्च शैक्षणिके । धर्मस्तु भारतीय-जीवनपरपराया आत्माऽस्ति। सन्ति च सनातनस्यापि धर्मस्य अनेके विशेषधर्मा, येषा तत्तद्-युगानुसारेण आवश्यकतानुसारेण च अन्यतरस्य गौणत्वप्रदानपूर्वम् अन्यतरस्य साग्रहम् उपदेशनम् आवश्यक भवति । एतदनुसारमेव एकत्र प्रवृत्तिधर्मम् उपदेष्टुम्, धर्म लोकाभिमुख कर्तुम्, – समासेन राष्ट्रधर्म प्रतिपादयितुम, अन्यतश्च वेदान्तमत पाश्चात्यजगति प्रसारयितु भगवता रामकृष्ण-परमहसाना शिष्योत्तमा पूज्यपादा श्रीविवेकानन्द-स्वामिन गत-शताब्द्याम् आविरभवन् । आधुनिक-भारतस्य जनकेषु अन्यतमानाम् एतेषा विवेकानन्दाना चरितकीर्तनेन वयम् अद्य आत्मान पुनीमह ।

लोकोपकाराय वा, जन्मान्तरे आरब्धस्य योगानुष्ठानस्य पूर्तये वा गृहीतजन्मानो योगिन शुचीना श्रीमता गेहे जायन्ते, योगिना वा कुले सभवन्ति इति हि आह श्रीमती भगवद्गीता । अस्माक कथानायकस्य

तया दृष्टम्, स सन्यासी दुर्गाचरण आसीत् । तां प्रत्यभिज्ञातवान् दुर्गाचरण 'अहो अप्रतर्क्या भगवतो माया !' इति उदीरितवचन तत्क्षणम् अपाक्रामत् । तत्पत्नी अपि किमपि अनुक्त्वा यथाकाल तीर्थयात्रा समाप्य कलिकाता प्रति न्यवर्तत । ततश्च सा विश्वनाथ वर्धनैकपरा अभवत् । दौर्भाग्यात् तु न सा बहुकालम् अजीवत् । एकादशवर्षीयं विश्वनाथ पृष्ठतो विहाय सा लोकान्तरम् अगमत् ।

अग्रिमे वर्षे प्रव्रज्याया द्वादश वर्षाणि समाप्य दुर्गाचरण सकृत् गृहजनदर्शनार्थं कलिकाताम् आगत । पत्नी प्रागेव मृता आसीत् । सकृत् पुत्रमुख वीक्ष्य पुनरपि स परिव्राट् परिव्रजनाय प्रतस्थे । तत उत्तर तस्य जीवितवृत्तान्त अज्ञातोऽस्ति ।

क्रमेण विश्वनाथ यौवन प्राप । संस्कृत तथा पारसीकी इति भाषाद्वय तेन सम्यक् अधीतम् । सोऽपि परपरागत विधिज्ञ-व्यवसायम् अङ्गीचकार । सगीते तस्य रुचि आसीत् । बायवले तथा च हाफीज-काव्ये इत्युभयोरपि तस्य प्रीति आसीत । भुवनेश्वरी नाम तस्य पत्नी आसीत् । सा यथैव बुद्धिमती तथैव भक्तिमती अपि आसीत् । गृहकृत्येषु निपुणा आसीत् । मैत्रस्य, करुणस्य, दानशीलस्य च पत्यु सा अनुरूपा पत्नी आसीत् । रामायण-महाभारतयो पठन तस्यै बहु अरोचत । तस्या गुणसपन्निमित्त भृत्यवर्गस्य, तथैव च परिवारस्य अपि मनसि तामऽन्तरेण बहुमानविशेष आसीत् ।

एव सुखेन वसतोस्तयो यथाक्रम कन्याद्वयम् अजायत । तदनु च तस्या क्रीडासु सहचरी भवितुमिव अन्यापि एका कन्या समजनि । पुत्रलाभस्तु नासीत । को वा धार्मिको हिन्दु-दपती पुत्राभावे न खिद्येयाताम् ? भुवनेश्वरी ईश्वरैकशरणा आसीत् । तया पुत्रप्राप्त्यर्थं शिवाराधना

३ अत्र आख्यायिकान्तरम्— दुर्गाचरण कलिकाता प्राप्य स्वगृहम् अगत्वा कस्यचित् मित्रस्य गृहे अज्ञातोऽवसत् । विधिवशात्तु विदितनदागमवृत्तान्तै ज्ञातिभि बलात् स आनीय स्वगृहे निरुद्धप्रसर स्थापित । किमपि अनुक्त्वा दुर्गाचरण अनत्याग्रम अकरोत् । दिनत्रयानन्तर तस्य अनिष्टम् आशङ्कमानै ज्ञातिभि मुक्त सन् स पुनरपि गृहम् परित्यक्तवान् इति ।

तस्य क्रीडासहचरा आसन्। किं तु एव प्रकृत्या क्रीडाप्रियमपि तम् अन्तरान्तरा क्रोधावेशा अभिभवन्ति स्म। एव क्रोधाविष्टस्य तस्य क्रोध-शमनार्थं मात्रा जलपूर्णा कलशा तच्छिरसि आवर्जनीया वा आसन्, 'न त्वा शिव कैलास नष्यति' इति वा हानि प्रदर्शनीया आसीत्। एतादृशेषु अवसरेषु माता परिहासेनेव वदति स्म 'मया शिव पुत्र देहीति याचित, तेन तु निजपिशाचानाम् अन्यतम प्रेषित!' एतादृशेभ्य प्रसङ्गेभ्य अन्यत्र तु सदा प्रकटितस्वाभाविकोल्लासोऽय डिम्भ सर्वेषामेव सकौतुक लालनाविषय आसीत्। दानशूरतायाम् असौ बाल पितरम् अन्वहरत्। कदाचित् भिक्षा याचमानाय कस्मैचित् भिक्षवे भिक्षान्तरम् अपश्यता बालनरेन्द्रेण (पञ्चवर्षीयेण) तस्मिन्नेव दिने प्रथम-परिहिता नवा धोती अपनीय प्रदानीकृता[५]। (तदाप्रभृति याचके आगते अव्यवहार्यदान प्रतिरोधार्थं यदि कदाचित् नरेन्द्र प्रकोष्ठे न्यरुध्यत, तर्हि हस्ताभ्यासगतानि सर्वाण्यपि वस्तूनि वातायनेन याचकार्थ बहि प्रक्षिप्य स गुरुजनम् अर्दयति स्म!) उत्तरायुषि असख्याना जनानाम् आध्यात्मिक सारथ्य करिष्यमाण नरेन्द्र बाल्य सूतो भवितुम् एच्छत्। उष्णीषविभू-षितशिरा, अन्तरान्तरा च निनादितप्रतोद सारथि तस्य आदर्शपुरुष आसीत।

### भ्रुवोर्मध्ये ज्योतिर्दर्शनम्

षष्ठे वर्षे (१८६९) नरेन्द्र पाठशाला प्राविशत्। तत्रागतेभ्या असस्कृतेभ्य केभ्यश्चित् बालेभ्य अपशब्दान काश्चन श्रुत्वा सोऽपि अज्ञानत पित्रो समीपे तान उच्चारयामास। तच्छ्रुत्वा विद्यालयात् निष्कास्य गृह एव तस्य अध्यापन पितृभ्या प्रारब्धम्। आङ्गल्याः तथा च वङ्गीयाया प्राथमिका पाठा भुवनश्वरीदेव्या प्रदत्ता। अन्योऽपि एक अध्यापक गृहम् आगत्य अध्यापयति स्म। निद्राकाले त स्वापयन्ती तन्माता रामायण-महाभारतादिगता कथा कथयति स्म।

---

५ अत्र सन्तवर्यस्य तुकारामस्य 'अपि कौपीनमुत्सृज्य प्रसन्नाश्चेद्ददी-महि' इत्यथवा 'भले तरी देऊ कासेची लगोटी।' इति अभङ्गपङ्क्ति अपरिहार्यस्मरणा।

तदानीं मेधावी बालकोऽयम् अनेकान् प्रश्नान् पृच्छति स्म, येषु केचित् प्रश्ना दुरुत्तरा आसन्। निद्राकाले स प्राय भ्रुवोर्मध्ये ज्योतिः पश्यति स्म। प्रसरता तेन प्रकाशेन स्नात इव स निद्रां प्रविशति स्म। बहु कालं यावत् इत्थमेव सर्वे स्वपन्ति इत्येव सोऽमन्यत। (पश्चात् रामकृष्ण-परमहंसेन सह समागमे तेन पृष्टेषु प्रश्नेषु अन्यतमः ज्योतिर्दर्शनविषयकोऽपि आसीत्।)

अस्मिन् बाल्ये वयसि देवभक्तेः बीजं तस्य मनसि अङ्कुरितम् अभवत्। मातुर्मुखात् रामकथां श्रुत्वा मनसि जनितरामभक्तिः नरेन्द्र आपणं गत्वा एकां सीतारामं-मूर्तिम् अक्रीणात्, तां च मूर्तिं सौधोपरि प्रतिष्ठाप्य एकेन ब्राह्मणकुमारेण सह स तस्याः पूजनपरोऽभवत्। तां ध्यायन् स तत्र होरात्रुहोरम् उपविशति स्म। अथैकदा दीर्घं कालं नरेन्द्रम् अदृष्ट्वा अस्वस्थचित्तेन गुरुजनेन तस्य अन्वेषणं प्रारब्धम्। नैकवारम् उच्चैः आहूयापि अलब्धप्रत्युत्तरेण गुरुजनेन अन्ते द्वारं भङ्क्त्वा उपरितने प्रकोष्ठे प्रविष्टम्, यत्र नरेन्द्रः बाह्यसंज्ञाशून्य इव ध्यानमग्न आसीत्। अचिरेणैव तु तेन राममूर्तिः परित्यक्ता। साधकस्य कृते विवाहः मोक्षमार्गे विघ्नभूतः, विवाहकारणादेव रामचन्द्रस्य आपदः सोढव्या आसन् इति कस्यचित्[६] मुखात् श्रुत्वा तस्य मनः संशयारूढम् अभवत्। अन्ते मातुः उपदेशानुसारेण तेन राममूर्तिं परित्यज्य शिवमूर्तिः आनीता। तत्पुरतः तेन ध्याने आरब्धे अस्याः 'क्रीडायाः' अन्ये बालका अपि सम्मिलन्ति स्म। एकदा इत्थं ध्यानारूढे तस्मिन् सर्सरायमाणः कश्चित् नागराज तत्र प्राप्तः[७]। दृष्टमात्रे तस्मिन् अन्ये बालकाः वेपमानगात्रा नरेन्द्रं यथाकथचित् शब्दाय्य यत्र तत्र पलायिताः। कश्चित् कालं यावत् तत्र स भोगीन्द्र, नरेन्द्रायमाणश्च नरेन्द्रः इत्युभावेव आस्ताम्। स सर्पः कंचित् कालं धृतफणः स्थित्वा यथागतम् अपयातः। तस्मिन् अपयाते मात्रा स बाल्ययोगी कथम् आवेगभरेण क्रोडीकृतः स्यात् तत्

६ सारथः इति केचित्।

७ किं भुवम् अवतीर्णस्य शिवस्य विभूति-पूरणार्थं स आगत ?

८. 'नरेन्द्रो विषधरोऽपि'।

उत्प्रेक्षितुं शक्यम्। तदानीं पृष्टो नरेन्द्रः प्रत्युवाच, "नाहं सर्पादिकं किंचित् अवेदिषम्। केवलं कमपि आनन्दम् अनुभवन् आसम्।"

*'स्वयमेव नरेन्द्रता'*

ध्यानक्रीडया सह अन्यापि एका क्रीडा शिशोः नरेन्द्रस्य अभिमता आसीत्, या तस्य स्वान्तगतम् ईश्वरभावं द्योतयति। सा नाम राजक्रीडा। सोपानस्य अत्युच्चं पदस्थानं सिंहासनम् अभवत्। अनन्यसाधारणे तस्मिन् आसने नृपो भूत्वा नरेन्द्रः उपविशति स्म। अन्येषु पदस्थानेषु अमात्यादयः स्वस्वविभवानुरूपम् आसते स्म। न्यायासनोपविष्टश्च नरेन्द्रः न्यायनिर्णयम् अकरोत्। न स अणुमात्रमपि आज्ञाभङ्गम् असहत। मुक्तमात्रे तु न्यायासने धावत-पलायताक्रीडासु अन्यैः सह स्कन्धास्कन्धि नरेन्द्रोऽपि समिलति स्म। एकदा इत्थमेव प्रासादस्य डिम्बक्रीडापरः असौ भ्रष्टपादः सोपानमार्गेण गडगडायमानः अधः पतितः, तीक्ष्णेन च शिलाग्रेण विद्धत्वात् तस्य दक्षिणाक्षिसमीपे महान् व्रणः अभूत्। तद्विषये पश्चात् रामकृष्ण-परमहंसः अवदत् 'साधु अभवत्। तस्य शक्तिरोधो यदि एवं नाभविष्यत्, स जगत्संहारम् अकरिष्यत्।'

नरेन्द्रः अधुना सप्त-वर्षीय आसीत्। गृहे यावद् अध्येतुं शक्यम्, तावत् तेन अधीतम् आसीत्। तस्य धारणाशक्तिः असामान्या आसीत्। स 'एकपाठी' इवासीत्। अस्मिन् वयसि समग्रं मुग्धबोध-व्याकरणं तस्य कण्ठस्थप्रायम् आसीत्। रामायण-महाभारतयोः अनेकानि खण्डानि तस्य जिह्वाग्रस्थितानि आसन्। (एकदा गृहागतानां ग्रामात् ग्रामान्तरं सञ्चारिणां रामायण-पाठकानां पठनगताः केचित् दोषाः तेन प्रदर्शिताः आसन्।) अत अधुनाऽयं विद्यालयप्रवेशयोग्यः इति कृत्वा नरेन्द्रः पण्डित ईश्वरचन्द्र विद्यासागराणां 'मेट्रोपॉलिटन्' विद्यालये दशम्यां कक्षायां प्रवेशितः।

* * *

१ कतिपयदिनोत्तरं बोधिवृक्षस्य अधस्तात् उपविष्टस्य कमण्डलुधरस्य भगवतो बुद्धस्य अपि साक्षात्कारः नरेन्द्रेण अनुभूत इति आख्यायते।

## २. बाल्यम्

विवेकानन्दाना चरिते नेतृत्वम्, ईश्वरभाव, बुद्धिप्रामाण्यवादिता, चित्तिलवता, उपायज्ञता, प्रत्युत्पन्नमतित्वम्, उत्सर्गवृत्तित्व च इत्यादयो ये गुणा प्रकर्षेण अवभासन्ते, तेषा बीजावस्था बाल्यीयजीवनेऽपि स्पष्टतया द्रष्टु शक्यते ।

प्रायेण ये विद्यार्थिन वर्गशालाया चकासति, ते क्रीडाङ्गने न दृश्यन्ते, ये च क्रीडाङ्गने प्रकाशन्ते ते वर्गशालाया निस्तेजस्का भवन्ति । नरेन्द्रस्तु अपवादभूत सव्यसाची आसीत् । स्वभावतो बुद्धिमान् सन्नपि अय बाल क्वचिदेव स्वस्थानेऽदृश्यत । तस्य स्वस्थाने स्थितिर् नाम अवतप्ते-नकुलस्थितम् । अल्पोपाहारार्थं माध्यदिन विरामे खाद्य यथाकथचित् अभ्यन्तरीकृत्य स क्रीडाङ्गन धावति स्म । क्रीडानैपुण्यार्थं तेन पारितोषिकमपि लब्धम् । नारद इव कलहप्रिय स अन्योन्य कलहान् उत्पादयति स्म, स्वीयया 'स्वयमेव-नरेन्द्रतया' च शब्दप्राभवबलात् शमयति स्मापि । किं तु इद क्रीडैकनिमित्तकम् आसीत । तस्य हृदय शुद्धम् आसीत् । रुग्णाना सहाध्यायिना स तथैव शुश्रूषापर आसीत् । क्रीडास्विव मुष्टियुद्धेऽपि तेन कौशलम् अवाप्तम्, भारतीया मल्लविद्याऽपि च अभ्यस्ता । तस्य स्वर मधुर आसीत्, त च सगीतम अध्यापयितुम् अहमदखाँ नाम एको गायनाचार्योऽपि नियुक्त अभवत् । (अस्मिन बाल्ये वयस्यपि तेन 'न स्वर-तालमात्र सगीतम् । तत् खलु सगीत यत् गायकस्य भावनाविष्कार कुर्वत् श्रोतुर मनस्यपि समाना भावना जनयति,' इति प्रौढ मत प्रकटीकृतम् आसीत्[1] । )

---

१ पश्चात् नरेन्द्रस्य गान श्रुत्वा श्रीरामकृष्ण-परमहसा एव वदन्ति स्म, 'अस्य गान श्रुत्वा हृदयस्य परमात्मा कृत्तफणो नाग इव दोलायते' ।

स स्वभावतो नावीन्यप्रिय आसीत्। नवनवासु क्रीडासु, नवनवेषु च क्रीडनकेषु स अरमत।

**अद्भुता स्मरणशक्ति.**

वर्गशालायामपि न स सदैव पाठैकचित्त आसीत। अध्यापकेषु अध्यापयत्सु सत्सु अयं समीपस्थितेभ्य छात्रेभ्य जनान्तिकं रामायणादिकथा वा, स्व-'पराक्रम' कथा वा मन्दध्वनिना कथयति स्म। एकदा पाठे प्रचलति भाषणध्वनिं श्रुत्वा नूनम् अयमेव भाषते इति शङ्कमानेन अध्यापकेन 'कथय यद्यत् मया उक्तम्' इति नरेन्द्र आदिष्ट। नरेन्द्रेणापि उत्थाय अध्यापकोक्तं सर्वम् अनुज्झिताक्षरं यथावत अनूक्तम्। तत् श्रुत्वा त निरपराधं मत्वा उपवेश्य 'क स तर्हि भाषमाण आसीत्?' इति अध्यापक अपृच्छत्। पुनरपि नरेन्द्र उदतिष्ठत्। तस्य सत्यप्रियता वा प्रशसनीयतरा, नैकावधानिता वा, इत्यत्र विषये यदि अध्यापक सभ्रान्तोऽभवत् किमत्र चित्रम्?

अस्मिन् काले घटित एक प्रसङ्ग यथा नरेन्द्रस्य निर्भयता द्योतयति, तथैव तस्य बुद्धिवादितामपि। कस्यचित मित्रस्य उद्याने एको वृक्ष आसीत्[3] यस्य आरोहावरोहणेन, शाखा च अवलम्ब्य अधोमुख भूत्वा दोलाक्रीडया, नरेन्द्र आत्मान विनोदयति स्म। अथैकदा तमेवम् आरोहणप्रवृत्तं दृष्ट्वा वार्धक्यसुलभपरिदेवनशीलतया वा, बालकगतचिन्तया वा वृद्धो गृहस्वामी आगत्य "मा, मैव वृक्षम् आरोह। अस्मिन् वृक्षे कश्चित् ब्रह्मराक्षसो निवसति, स च वृक्षमारूढाना जनाना शीर्षभङ्ग करोति' इति प्रदर्शितभय अपयात। नरेन्द्र तत सर्वं तद्वचन सविनयम् अशृणोत्, अपयाते च गृहस्वामिनि पुनरपि वृक्षम् आरोढुम् आरभत। यदा च नरेन्द्रस्य मित्र त निषेद्धु प्रवृत्त, तदा नरेन्द्र शान्तम् उवाच, "अयि मुग्ध! कतिवार नु इम वृक्षम् आरूढपूर्वोऽस्मि। यदि अत्र सत्यमेव कश्चित् ब्रह्मराक्षसोऽभविष्यत् किं स एतत्पूर्वमेव मम शिरोभङ्ग नाकरिष्यत्?" प्रारब्धा च पुनरपि शाखावलम्बितस्य अवाङ्मुखस्य तस्य दोलालीला! उत्तरायुषि विवेकानन्द-स्वामिन एव भणन्ति स्म, 'मा केवल ग्रन्थविशेषकथितम् इदम्, पुरुषविशेषेण उक्तम्

२ इयमेवा कविता आसीत् इत्याहु।

३ चम्पकवृक्ष इति केचित्।

इति वा तत्र श्रद्धत्त । स्वयं सत्यम् अन्विष्यत [३] । तेषां वुद्धिप्रामाण्यवादित्वस्य परिचय एव बाल्येऽपि भवति । अन्योऽपि एतादृश प्रसङ्गः अत्र प्रकरणे निवेदनार्हः । तदानीं जातिभेदा कठोरा आसन् । स्पर्शास्पर्शनियमाना पालनम् अशिथिलतया भवति स्म । नरेन्द्रस्य पितरं प्रति अनेके जना व्यवहारनिमित्तम् आगच्छन्ति स्म । तेषां कृते तत्तद्धर्मनियता तत्तज्जातिनियताश्च भिन्ना गुडगुडिका (धूम्रपाननलिका) निहिता आसन् । गुडगुडिकाव्यत्ययेन कथं जातिभ्रंशो भवति इत्येतत् नरेन्द्रस्य मनसि किंचित् गूढमिव आसीत् । अत एकदा प्रयोग कर्तुमना स क्रमेण एकैकया गुडगुडिकया धूम्रपान कर्तुं प्रारभत । केनचिच्च एतदर्थं निर्भर्त्सित स प्रत्युवाच, 'न किमपि अभवत् । नास्ति कोऽपि उभयोर्' अन्योन्यसंबन्ध ।'

**उपायज्ञता**

एतत्कालगतान् काश्चन प्रसङ्गान् विवेकानन्द-चरितलेखका निर्दिशन्ति, यै बालस्यापि सत तस्य उपायज्ञता सूच्यते । एकदा सप्तमस्य एडवर्डस्य (तदानीतनस्य प्रिन्स ऑफ वेल्स इत्यस्य) भारतागमनावसरे नौकाशये एका युद्धनौका आगताऽऽसीत् । तां द्रष्टुं अनुज्ञापत्रं गृहीत्वा जना गच्छन्ति स्म । तदर्थं प्रार्थनापत्रहस्त नरेन्द्र पङ्क्तिस्थ अभवत् । द्वारपालेन तु बालोऽयम् इति कृत्वा स अन्त प्रवेष्टुं निषिद्ध । अधुना किं कार्यम् ? किंचित् चिन्तयित्वा, द्वारपालदृष्टिं परिहृत्य, स पृष्ठस्थितेन सोपानेन उपरितनीं भूमिकाम् आरोहत्, तं च कक्ष प्राविशत्, यत्र अनुज्ञापत्राणि दीयन्ते स्म । तत्र स्थितेन आङ्ग्लाधिकारिणा किमपि अनुक्त्वा प्रदत्तम् अनुज्ञापत्र गृहीत्वा नरेन्द्र मुख्येन बहिर्द्वारेण निष्क्रमितुं प्रवृत्त । अनुज्ञापत्रहस्त तं निष्क्रामन्त दृष्ट्वा योष्टि-पेटिवायमानमुख द्वारपालम् उद्दिश्य 'ननु अहं मायावी अस्मि' इत्युक्त्वा प्रमोदनिर्भरया गत्या नरेन्द्र अपाक्रामत् । अन्तरान्तरा नरेन्द्र मित्रै सह प्रमोदयात्रार्थं गच्छति स्म । एकदा इदं मित्रमण्डल मेटियाबुरुजस्थ नवाबीय प्राणिसंग्रहालयं द्रष्टुं नावा अगच्छत् । तद् दृष्ट्वा प्रतिनिवृत्तेषु तेषु मध्येमार्गं सहसा कश्चित् बाल वान्त्यादिपीडित अभवत्, नौश्च तेन अस्वच्छा

४ गुडगुडिकाव्यत्यय-जातिभ्रंशयो ।

अभवत्। बाले तदर्थं दत्त द्विगुण शुल्कम् अस्वीकृत्य नाविकै स्वयमेव नाव स्वच्छीकर्तु बाला आदिष्टा, तावच्च ते निरुध्य स्थापिता । अत्रान्तरे नौ तीर प्राप। तस्या तीरप्राप्तमात्राया नरेन्द्र तीरम् उत्प्लुत्य यदृच्छया दृष्टौ आङ्ग्ल-सैनिकौ उपगत । तयोर् अन्यतरस्य हस्त स्वीयेन कोमलेन हस्तेन गृहीत्वा, स्वीयया त्रुटितया आङ्ग्लभाषया वृत्तान्त निवेदयन् स तौ आकर्षन् घटनास्थलम् आनिनाय। आङ्ग्लसैनिकौ दृष्ट्वा भयभीताना नाविकानाम् अनिच्छतामपि बाला मोक्तव्या आसन्। —यतस्तयम् विशालनेत्र, मासलतनु, मधुरभाषी, चतुरश्च अय बालक सर्वेषामेव कमनीय आसीत्। तस्य प्रत्युत्पन्नमतिभि परिहासै, डिम्भसुलभाभिश्च लीलाभि वृद्धजनोऽपि विनोदितचित्त अभवत्। भगिनीति वा, पितृष्वसेति वा, पितामहीति वा वयोमानानुरूपै शब्दै सबोधत तस्य अवगुण्ठनवति स्त्रीजनऽपि अनिरुद्ध सचार आसीत्।

**निसर्गदर्शनेन समाधि**

१८७७ ख्रिस्ताब्दे विश्वनाथ बाबु स्थानान्तरम् अगरोत्। स मध्यप्रदेशे रायपुरम् अगच्छत्। पूर्वप्रस्थित त पश्चात् नरेन्द्रनेतृक[५] परिवार अन्वगच्छत्। तदानी लोहमार्गस्य अपूर्णत्वात् कश्चित अध्वा बलीवर्दयानेन गन्तव्य आसीत्। अथैकदा बलीवर्दकण्ठगताभिर् घण्टिकाभि दत्तताल शकट विन्ध्यस्य अधित्यकाम् आक्रामन् आसीत्। उभयत गगनभेदीनि उत्तुङ्गानि शिखराणि आसन्। सर्वतोदिश हरिद्वर्णः प्रसृत आसीत्। तैस्तै वन्यपुष्पगन्धै वासितो वायु मन्दमन्द सचरन् आसीत्। अन्तरान्तरा श्रूयमाणा पक्षिगणस्य आरावा अरण्यसहजा नीरवताम् गम्भीरतराम् इव आपादयन्त आसन्। निसर्गस्य प्रसन्नगम्भीर वैशाल्य हृदय स्पृशति स्म। सहसैव नरेन्द्रस्य दृष्टि दरीसनिविष्टे एकस्मिन् बृहति मधुकोशे पपात। तदानी विश्वभरस्य ईश्वरस्य अतर्क्यां विधानचातुरी रचनाकौशल च ध्यायतस तस्य मन बाह्यसज्ञाशून्यमिव अभवत्। कियत काल स एव समाधिमग्न अतिष्ठत्, नासौ अज्ञासीत्। प्रतिलब्धचेतनेन, कमपि अनिर्वचनीयम् आनन्दम् अनुभवता नरेन्द्रेण पश्चात् ज्ञातम् यत् अत्रान्तरे अनल्पो मार्ग अतिक्रान्त आसीत्।

५ तदानी नरेन्द्र चतुर्दशवर्षीय आसीत्।

रायपुरे कोऽपि विद्यालयो नासीत्। अत पितापुत्रौ अध्यापन-निमित्तेन घनिष्ठसबद्धौ अभवताम्। तयो अनकदा तेषु तेषु विषयेषु वादा भवन्ति स्म, यत्र पित्रा पुत्रस्य तीक्ष्णा बुद्धि अवलोक्य सा प्रयत्नेन सर्वाधिता, पुत्रेण च पितु साकल्यविमर्शिनी, मर्मग्राहिणी च विचारपद्धति अङ्गीकृता। विश्वनाथबाबु जानाति स्म, यत् ज्ञानदान नाम न सिद्धान्तानाम शिष्य शिरसि आरोपणम्, किंतु तस्य बुद्धे प्रचोदनेन विमर्शक्षमताया उत्पादनम्। तं नरेन्द्रस्य बुद्धिविकासाय मुक्तावसर प्रदत्त। अनकदा मित्रै सह पितुर् वादेषु प्रचलत्सु कदाचित् नरेन्द्रोऽपि तत्र समिलति स्म। अग्रतो गत्वा नरेन्द्रेण यत् वादकौशलम्, या कस्यापि विषयस्य सर्वकषा अध्ययनरीति या च सारग्राहिता प्रदर्शिता तस्य मूलारम्भ एव पितु पादमूले अभवत्।

१८७९ ख्रिस्ताब्दे विश्वनाथबाबु कलिकाता पुनरागच्छत्। सत्यपि वर्षद्वयात्मके अध्ययनखण्डे नरेन्द्रस्य अलौकिकी बुद्धि स्मरद्भि, तस्मिश्च वत्सलत्वर्वाद्भ अध्यापके अपवादीकृताय तस्मै 'प्रवेश' कक्षाया प्रवेशो दत्त। त्रयाणा वर्षाणाम् अध्ययनम् एकस्मिन्नव वर्षे समापनीयम् आसीत्। किं तु परिश्रमवशात्, ऐकाग्र्यबलाच्च नरेन्द्रेण तदपि अनुष्ठितम्। इदानीं तेन तादृशी ग्रहणशक्ति सपादिता आसीत यद्बलात् समग्रग्रन्थपठन तस्य आवश्यक नासीत्। आद्यन्त्ययो पङ्क्त्यो पठनन परिच्छेदस्य, अत्र च पृष्ठस्यापि तात्पर्यग्रहण कर्तुं स समर्थोऽभवत। अस्मिन् वर्षे आङ्ग्ल-बङ्गीय साहित्यमध्यात् अनेके प्रमाणभूता ग्रन्था तेन पठिता, भारतेतिहासविषयकाश्च अनके ग्रन्था अधीता। अस्य अवान्तरवाचनस्य कारणात् नियताभ्यासस्य काचित् हानि अभवत्, परिणामतश्च तस्य भूरि-परिश्रमा कर्तव्या आसन्। द्वि त्रि दिनासन्नाया परीक्षायामपि भूमितेर् अभ्यास आरब्धव्य आसीत्। तदानीम् अहर्निश आसनबन्धधीरो नरेन्द्र चतुर्विंशत्या होराभि समग्र भूमित्यध्ययन समापयामास[६]। प्रवेशपरीक्षा तेन प्रथमश्रेण्याम् उत्तीर्णा।

नरेन्द्र इदानीं षोडशवर्षीय आसीत्। स्वगृहस्य समीपवर्तिन्यां व्यायामशालाया तेन विविधो व्यायाम सेवित आसीत्। परिणामत

६ अत्र वृत्तान्त स्वय विवेकानन्देनैव निवेदितोऽस्ति।

 

तस्य देहो व्यूढोरस्क सपन्न । बालभाव परित्यज्य अधुना यौवनोन्मुखस्य नरेन्द्रस्यापि विषये

महोक्षतां वत्सतरः स्पृशन्निव द्विपेन्द्रभाव कलभः श्रयन्निव ।
रघु. क्रमाद्यौवनभिन्नशैशवः पुपोष गाम्भीर्यमनोहर वपु[7] ॥

इति कालिदासोक्ति चरितार्था अभविष्यत्। न केवल धीरोद्धताया गत्याम्, किं तु प्रायेण तेषु तेषु सर्वेषु व्यवहारेषु तस्य नरेन्द्रभाव स्पष्टीभवितु प्रारब्ध । उत्तरायुषि मया महत् कार्यम् अनुष्ठेयमस्ति इति काचित् गूढसूचना इव तेन अबोधपूर्वम् आसादिता[8] । तस्य स्वभावेऽपि वयोनुसार परिवर्तन भवितु प्रारभत । पुरा क्रीडासक्त नरेन्द्र अधुना गभीरपठनप्रवण अभवत्, व्याख्यानानि च श्रोतु प्रारभत। मित्राणाम् अङ्गीकारे दक्षता, चिकित्सकता च प्रादर्शयत् ।

प्रवेशपरीक्षोत्तर नरेन्द्र महाविद्यालय प्राविशत् । सोऽय तस्य आयुषो महत्त्वपूर्ण बालखण्ड अग्रिमे अध्याये प्रस्तूयते ।

* * *

---

७ रघुवश ३ ३२

८ बाल्येऽपि नरेन्द्र परिव्राजकाना भक्त आसीत् । 'उत्तरायुषि मया सन्यासिना भवितव्यम् । अस्ति तादृश हस्तसामुद्रिकोक्त भविष्यकथनम्' इति स वदति स्म । — बालेन सतापि नरेन्द्रेण अलौकिक-ग्रहण-स्मरण-शक्तिवत् काचित् अलौकिकी प्रत्यभिज्ञा-शक्तिरपि अन्तरान्तरा अनुभवितु प्रारब्धाऽऽसीत् । कस्मिश्चित् पुरुषविशेषे स्थानविशेषे वा प्रथममेव दृष्टे, अय पुरुष इद स्थान वा मया दृष्टपूर्वम् अस्ति, कस्मिश्चित् सभाषणे वा जाते, इत्थमेव सभाषण घटितपूर्वम अस्ति इति अबोधपूर्वा काचिन् प्रत्यभिज्ञा नरेन्द्रमनसि उत्पन्ना भवति स्म। एतद्विषय पश्चात् विवेकानन्दे उक्तम् आदौ तावत् पुनर्जन्मसिद्धान्तानुरोधेन मया समाधान क्रियते स्म। अधुना तु मह्यम् इत्थ भाति, यत् द्रक्ष्यमाणाना पुरुषाणाम्, वर्तिष्यमाणाना च घटनाना प्राग्दर्शन येनापि प्रकारेण जन्मत पूर्वमेव मया अनुभूतम् आसीन्। ('Now I believe that before I was born I must have visions somehow, of those subjects and people with whom I would have to come in contact in my present birth')

## ३. अथातो देवजिज्ञासा

१८७९ ख्रिस्ताब्दे प्रवेशपरीक्षाम् उत्तीर्य नरेन्द्र महाविद्यालय प्राविशत्। आदौ तावत् तेन प्रेसिडेन्सी कॉलिज इत्याख्ये महाविद्यालये नाम निवेशितम्। अनिरान्ते तु एकवर्षं स त परित्यज्य स्कॉटिश जनरल मिशनरी बोर्ड इत्यनया संस्थया प्रचालित (पश्चात् स्कॉटिश चर्च कॉलिज इति नाम्ना प्रसिद्धम्) महाविद्यालय प्राविशत्। तत्र प्रा विलियम हेस्टी नाम पण्डित प्राचार्य आसीत्।

**'नास्ति जर्मन-विद्यापीठेष्वपि नरेन्द्रनाथ-सदृश. छात्र.'**

महाविद्यालयेऽपि नरेन्द्रस्य अध्ययन तस्य निज शैलीविशेषम् अनुसृत्य प्राचलत्। अवान्तरवाचने व्यग्रमना. स प्राय नियताभ्यासात् प्रमाद्यति स्म। प्रथमयोर् वर्षयो तेन पाश्चात्या तर्कशास्त्रविषयका अनेके ग्रन्था आलोडिता। अन्तिमयोर् वर्षयो तेन पाश्चात्यतत्त्वज्ञानस्य नैके सम्प्रदाया अभ्यस्ता, युरोपीयाना च देशाना प्राचीनस् तथा च अर्वाचीन इत्युभयोऽपि इतिहास अनुशीलित। परीक्षाया समीपागताया चहादिपानपूर्वं यथापूर्वम् अहर्निश जागरण कृत्वा तस्य अभ्याससमाप्ति कर्तव्या आसीत्। तस्य प्रखरा बुद्धिमत्ता तु विदुषामपि ममता आसीत्। 'नरेन्द्रनाथस्य बुद्धिमत्ता लोकोत्तरकोटिकाऽस्ति। जर्मन विद्यापीठेष्वपि तत्त्वज्ञानम् अधीयानेषु छात्रेषु न मया तत्सदृश छात्रो दृष्ट ' इति नरेन्द्रविषये प्राचार्य हस्टी वदति स्म। संगीतसाधनाया तथा च व्यायामशीलने इत्युभयत्रापि तस्य रति पूर्ववत् आसीत्। अहमद खाँ त तेन हिन्दी-, उर्दू-तथा च पारसीकभाषागतानि अनेकानि गीतानि, विशेषत भक्तिगीतानि, अधीतानि[1]। (पश्चात् तस्य अन्यतरेण मित्रेण सपादितस्य

---

१ एतत्कालगताम् एकाम् आख्यायिकाम् आचक्षते। एकदा महाविद्यालये एक पाठ समाप्त। द्वितीय प्राध्यापक अद्यापि नागच्छत्। कुतश्चित् कारणात् स व्यलम्बत। अत्रान्तरे नरेन्द्रस्य

गतस्य तस्य मनश्चक्षुषः पुरतः भाविजीवनविषयके द्वे चित्रे पर्यायेण उपतिष्ठतः स्म। एकस्मिन् चित्रे सुखपूर्णं सांसारिकं जीवनम् आसीत् धनम्, अधिकारः, सम्मानः, मनोरमा पतिव्रता, वशंवदानि अपत्यानि। अन्यस्मिन् आसीत् वैराग्यदीपितः सन्यासः—अनासक्तिः, यायावरता, यत्रक्वचनशायिता, यत्रसायंनिवासः, यदृच्छालाभसंतोषः, रागद्वेषशून्यता, मानापमानसमता, नित्यसुखास्वादः[१]। उभे अपि चित्रे तम् आकृषतः स्म। स आत्मानम् उभयोरपि अनुभवसमर्थम् अमन्यत। क्रमेण तु पूर्वं चित्रम् अस्पष्टम् अभवत्, द्वितीयं च स्पष्टतरम् अभवत्। सन्यासी व्यजयत। नरेन्द्रेण श्रेयो वृतम्।

ब्राह्मसमाजः

एव्वेव दिनेषु तत्त्वजिज्ञासया गृहीकृतमना नरेन्द्रः ब्राह्मसमाजं प्रति आकृष्टः अभवत्। पाश्चात्यैः सह संपर्कोत्तरं भारतीयेषु जनेषु ये परिणामाः अभूवन्, तत्र अन्यतरो नाम आत्मसंशोधनम्। पाश्चात्येषु किम् अतिरिच्यते, अस्मासु च किं हीयते, ते कुतः विजयिनः अभवन् वयं च कुतः पराभूताः, इत्यादिविषयाणां मीमांसां कर्तुं हिन्दुसमाजस्य धुरीणाः प्रारभन्त। हिन्दुसमाजस्य रक्षणार्थं तस्य च प्रगत्यर्थं केषां दोषाणाम् अपनयनम् केषां गुणानां च आधानम् आवश्यकम्, अस्माकं धर्मसमाजयोः कालानुसारेण किं परिवर्तनम् आवश्यकम्, इति चिन्ता प्रावर्तत। अत्र वङ्गः अग्रसरः आसीत्। तस्य सुपुत्रेण प्रातःस्मरणीयेन राजा राममोहन राय इत्यनेन 'ब्राह्मसमाज'स्य निर्मितिः कृता। तदुत्तरं महर्षि देवेन्द्रनाथ-ठाकुर तथा च केशवचन्द्र सेन इत्येताभ्याम् इदम् आन्दोलनम् अग्रेसरीकृतम्। अयं समाजः निराकारम् एकेश्वरम् अङ्गीचकार। अतः

२ अस्य परिव्राजकजीवितस्य शोभनं शब्दचित्रं शंकरभगवत्पादा एवम् आलिखन्ति–

चिन्ताशून्यमदैन्यभैक्षमशनं पानं सरिद्वारिषु
स्वातन्त्र्येण निरङ्कुशा स्थितिरभीर्निद्रा श्मशाने वने।
वस्त्रं क्षालनशोषणादिरहितं दिग् वास्तु शय्या मही
संचारो निगमान्तवीथिषु विदां क्रीडा परे ब्रह्मणि॥
(विवेकचूडामणि)

तस्य मूर्तिपूजा समता नासीत्। ईश्वरस्य अवतारेषु तस्य विश्वास नासीत्। न च स मोक्षार्थं कंचिद् गुरुम् आवश्यकम् अमन्यत। सामाजिके स्तरे समताया स्थापन तस्य उद्दिष्टम् आसीत्। जातिभेदस्य निर्मूलनम्, तथा च स्त्रीणा दास्यविमोचन तस्य विशेषत अभिप्रेतम् आसीत्। लब्धाङ्ग्लशिक्षणे युवजने स्वभावत एव ब्राह्मसमाज प्रासरत्।

नरेन्द्रस्य यौवनप्रवेशावसरे ब्राह्मसमाज विभज्य दलद्वये विभक्त आसीत्। शिवनाथशास्त्री तथा च विजयकृष्ण गोस्वामी इत्येताभ्या साधारण-ब्राह्मसमाज इत्याख्य नवीन ब्राह्मसमाज निर्मित आसीत् (१८७८)। नरेन्द्र एतेन साधारण-ब्राह्मसमाजेन सलग्न अभवत्। ब्राह्मसमाजोपदिष्टेन मार्गेण गत्वा तत्त्वजिज्ञासाया शमन स्यात्, सत्यदर्शन भवेत्, इति तस्य विश्वास आसीत्।

अत्रान्तरे वयःप्राप्तस्य नरेन्द्रस्य विवाहचर्चा पित्रा प्रारब्धा। न तादृशाना वधूपितॄणा कापि न्यूनता आसीत्, ये प्रभूता वरदक्षिणा दातुम्, जामातर च आय सी एस परीक्षार्थम् आङ्ग्लभूम्यै प्रहितु सिद्धा आसन्। नरेन्द्रस्तु विवाह नैच्छत्। न केवल विद्याधिगमार्थम्, अन्तिमस्य सत्यस्य साक्षात्कारार्थमपि स ब्रह्मचर्यम् आवश्यकम् अमन्यत। शुचिता तस्य मेरुदण्डायमान मूलाधार आसीत्। सुलभवाममार्गे महाविद्यालयीने जीवने, सत्सु अपि प्रभूतेषु मोहनिमन्त्रणेषु, तेन शुचिव्रत कठोरतया पालितम् आसीत्। एकत मातृकृता सस्कारा, अपरतश्च तस्यैव अन्तरात्मगत 'किंचिन्' इत्युभय त सन्मार्गे धृतव्रतम् अस्थापयत्। प्राणेभ्योऽपि प्रियतरम् इद शुचित्व विवाहेनापि भङ्क्तु नरेन्द्र नैच्छत। यदा यदा विवाहप्रस्ताव आगत तदा तदा उपस्थितस्य यस्य कस्यापि अतर्कितस्य विघ्नस्य कारणात् स कालान्तरित कर्तव्य आसीत्[३]।

**'महाशय! अपि भवता ईश्वर साक्षात्कृतोऽस्ति?'**

कंचित्काल नरेन्द्र ब्राह्मसमाजे अरमत। तत्रत्यासु प्रार्थनासु, भक्तिगीताना च गायने, स कदाचित् चित्तोन्नतिम् अन्वभवत्। किं तु

३ श्रीरामकृष्णैरेव जगन्माता नरेन्द्रस्य विवाहविघ्नार्थं प्रार्थिता।

दिनेषु गच्छत्सु न तावन्मात्र तस्य समाधानाय अलम् आसीत् । ब्राह्म-समाजे प्रवेशात् पूर्वम् अहं यावान् दूरसाक्षात्कार आसम् तावानेव अधुनापि अस्मि, इति तस्य मनसि आयातु प्रारभत । स अस्वस्थचित्त अभवत् । एकस्मिन् दिन इत्यमेव अस्वस्थनाक्रान्तमना नरेन्द्र महर्षि देवेन्द्रनाथम् अगच्छत् । सकृत् मिलितपूर्वर् महर्षिभि स ध्यानम् अनुष्ठातुम उपदिष्ट आसीत । तस्य अनकितागमनेन विस्मयोपहताम् देवेन्द्र-नाथान् उपगम्य नरेन्द्र सहसा अपृच्छत्, 'महाशय, अपि भवता ईश्वर साक्षात्कृतोऽस्ति ?' तस्य आकस्मिकेन प्रश्नेन सभ्रान्ता देवेन्द्रनाथा केवलम् इदमेव ऊचु—'वत्स ! त्व योगिनेत्रोऽसि'। ' निराशो भूत्वा नरेन्द्र न्यवर्तत । तत उत्तर स अनेकान् अन्यान् धर्माचार्यान् अगच्छत् । न तु केनापि ईश्वर साक्षात्कृत आसीत् । अधुना किं कर्तव्यम् ? क प्रपत्तव्य ? सहसैव रामकृष्ण परमहसाना नाम तस्य स्मृतिपथम् अगच्छत्, यत्तन प्राचार्य-हेस्टीना मुखात् श्रुतम् आसीत् ।

स प्रसङ्ग इत्यम्—

एकदा आङ्ग्लभाषाया प्राध्यापक अनुपस्थित आसीत् । तत्स्थाने प्राचार्या आगता । वर्ड्स्वर्थ कवे 'एक्सकर्शन्' इत्याख्या कविता अध्यापयितु ते प्रारब्धा । वर्ड्स्वर्थस्य मनसि निसर्गं प्रति अनन्यसाधारण प्रेम आसीत् । इन्द्रधनु दृष्ट्वा तस्य मन उच्छलति स्म । मन्दमारु-तान्दोलितानि स्वर्णपुष्पाणि (Daffodils) दृष्ट्वा तस्यापि मन नृत्यति स्म । धृतहल कर्षक, तृणच्छेदनपरा जनपदस्त्री, अजाविक प्रेरयन् अविपाल इत्यादीना दर्शनेन तस्य प्रतिभा गुञ्जित् प्रारभते स्म । कोकि-लस्य कूजित श्रुत्वा तम् अन्वेष्टुकाम कविरय वृक्षात् वृक्षान्तरम् उन्मत्त-वत् भ्रमति स्म । निसर्गोन्मत्त वर्ड्स्वर्थ तस्य सनिधौ समाधिमिव अनुभवति स्म । समाधिविषये छात्रा अनभिज्ञा आसन् । 'समाधिर् नाम कस्मिन्नपि वस्तुनि ऐकाग्र्यनिमित्तक शुद्धचित्ते जनित परिणाम-विशेष ' प्राचार्या स्पष्टीचक्रु । ते अग्रे अवोचन्—'दुर्लभोऽस्ति एष

---

४ न मया ईश्वर दृष्टोऽस्ति, तव नेत्रे तु योगिन नेत्रे इव स्त', अत एव योगाभ्यासवशात् ईश्वर द्रष्टु प्रभविष्यस्यपि इति महर्षीणाम् आशय स्यात् ।

दिनेषु अनुभूतसमाधि पुरुष । मया एक एव तादृशो महात्मा दृष्टोऽस्ति। स नाम दक्षिणेश्वरस्य कालीपूजक । रामकृष्ण-परमहंस इति नाम्ना स प्रसिद्धोऽस्ति । यदि युष्माकम् अत्र विषये कुतूहलम् अस्ति, त गच्छत । स युष्माक सर्वानपि संशयान् उच्छेत्स्यति । '

नेद नरेन्द्रेण विस्मृतम् आसीत् । एकदा १८८१ खिस्ताब्दस्य नोहम्वर मासे श्रीरामकृष्ण-परमहसा सुरेन्द्रनाथ मित्र इत्याख्यस्य भवनस्य गृह गता आसन् । नरेन्द्रोऽपि तत्र गायनार्थं गत आसीत् । तस्य गायनेन प्रभावितचित्ते रामकृष्णे तद्गत पृष्ट्वा स दक्षिणेश्वरे आगमनार्थं निमन्त्रित आसीत्[५] । साक्षात्कृतपरमेश्वरस्य पुरुषस्य अन्वेषणे अन्यत्र सर्वत्र निराशीभूतेन नरेन्द्रेण अधुना रामकृष्ण-दर्शनार्थं दक्षिणश्वर गन्तु निर्णीतम् ।

* * *

५ एव प्राय सर्वे चरितकारा । श्रीरामकृष्ण-वचनामृते (३ ६७१–६७२) निर्दिष्ट स्वय नरेन्द्रस्य कथनम् अनुसृत्य तु प्रथम दर्शन दक्षिणेश्वर एव जातम् आसीत्, द्वितीय राजमोहनाना गृहे, तृतीय च पुनर् दक्षिणेश्वरे ।

## ४. गुरुशिष्ययोः प्रथममेलनम्

ज्ञानाम्भोधिप्रकटित-महातत्त्वमुक्ताफलाशी
भक्तिश्रद्धाकमल-विलसन्-मानसान्तर्विहारी।
सारग्राही गगनसदृश-महासचारशाली
गङ्गातीरे व्यवहरदनिशं कोऽप्यसौ राजहंस.॥

(श्रीरामकृष्णपरमहंसीयम्,* श्लो ३६)

वैराग्यस्य ईश्वरैकनिष्ठायाश्च परमम् आदर्श निदर्शयितुमिव, सर्वधर्माणा च समन्वय वर्तुमिव भगवता श्रीरामकृष्ण-परमहसाना जन्म[1] आसीत्। तेषा समाध्यनुभवस्य आरम्भ बाल्य एव अभवत्। जगत आध्यात्मिकप्रबोधनार्थं गृहीतजन्मना तेषा लौकिकशिक्षणे रुचिर् नासीत्। रामकुमारेण नाम ज्येष्ठेन भ्रात्रा सह कलिकाताम् आगते तै दक्षिणेश्वर इत्यत्र राणी रासमणि इत्याख्यया धर्मनिष्ठया स्त्रिया निर्मिते कालीमन्दिरे भ्रातु पश्चात् पूजकपद लब्धम्। कि तु नाय कश्चित् सामान्य, गन्धपुष्पाक्षतादीना समर्पणमात्रेण कृतकृत्यमन्य पूजक आसीत्। अन्ततो गत्वा आत्मसमर्पणायापि उद्यतो भूत्वा स आराध्यदैवतेन सह ऐकात्म्यम् आपद्यत[2]। नैकानि दिनानि साधनाम् अनुष्ठायापि अलब्धदेवीसाक्षात्कारेण, अतश्च जीवित निष्फल मन्यमानेन तेन एकदा समीपवर्तिन खड्ग गृहीत्वा यावत् आत्मघाताय स उद्गूरित, तावत् देव्या मूर्तिमत्या आविर्भूय स निवारित। तदाप्रभृति रामकृष्णा सदैव

*श्री भा वर्णेकररचितम्।

१. कामारपुकूर इत्यत्र, १८–२–१८३६ दिने। गदाधर इति तेषा प्रथम नाम।

२ इत्थम ऐकात्म्यानिष्टा रामकृष्णा अनवदा देवीपूजनार्थम् उपहृतानि पुष्पाणि निजशिरसि स्थापयन्ति स्म, स्वयमेव च देव्यै निवेदनात् प्राक् नैवेद्य भक्षयन्ति स्म।

जगदम्बाया जीवत्सनिधिम् अनुभवन्त[३], आनन्दरसपायिनश्च अतिष्ठन्। योगिन 'बालोन्मत्तपिशाचवत्' व्यवहरन्ति। रामकृष्णाना बालभाव आसीत्। 'अम्बया[४] अह बालभावे स्थापितोऽस्मि' इति ते वदन्ति स्म। बालकवत् ते तया सह सभापन्ते स्म, तस्याश्च शब्द तेपा परम प्रमाणम् आसीत्। ईश्वरदर्शनार्थं वैराग्यस्य कियती तीव्रता अपेक्ष्यते, जलोद्धृतस्य मत्स्यस्येव कियती व्याकुलता अपेक्ष्यते इति जिज्ञासा चेत् रामकृष्णचरितम् अवगाहनीयम्[५]।

### आध्यात्मिकी प्रयोगशाला

पश्चात् रामकृष्णै तास्तान् साधनाविशेषान् अनुष्ठाय तेन तेन प्रकारेण ईश्वरसाक्षात्कार अनुभूत। तेषा जन्मैव

> रुचीना वैचित्र्याद् ऋजुकुटिल नानापथजुषा
> नृणामेको गम्यस् त्वमसि पयसाम् अर्णव इव[६]।

इति सिद्धान्तस्य निदर्शनार्थम् आसीत्। आध्यात्मिकी प्रयोगशालेव सा याचित् आसीत्। तदर्थं च आवश्यका देशिका अपि यथाकालम् आगता। भैरव्या ब्राह्मण्या ते वैष्णव भक्तिसम्प्रदायम्, तान्त्रिकी च साधनाम् अध्यापिता। तोतापुरी इत्याख्यो गुरु तान् अद्वैतवेदान्ते निष्ठितान्

---

३ पूजाकाले ते स्वहस्तोपरि देव्या उच्छ्वासस्पर्शमपि अनुभवन्ति स्म, सौधम आरोहन्त्याश्च तस्या नूपुरशब्दमपि शृण्वन्ति स्म।

४ जगदम्बया भगवत्या कालीदेव्या।

५ श्रीरामकृष्णाना साधनाविकास विवेकानन्द चरितकारा (Eastern and Western Disciples) एव वर्णयन्ति The boy became the devotee, the devotee became the ascetic the ascetic became *the saint the saint became the man* of realisation, the man of realisation became the prophet, the prophet became merged in the Divine Nature which is God

६ महिम्न स्तोत्रम्।

अकरोत्। यस्य निर्विकल्पस्य समाधेः अनुभवार्थं गुरोः ४० वर्षाणि साधना अनुष्ठेया आसीत्, स रामकृष्णैः त्रिभिर् दिनैः अनुभूतः[७]। कञ्चित् कालं तैः यथावत् स्त्रीभावेन स्थित्वा भक्तेः शिरोमणिभूता मधुरा भक्तिः आचरिता[८]। हनूमन्तं च आदर्शं कृत्वा दास्यभक्तिरपि तैः अनुष्ठिता[९]। वस्तुतः सर्वासाम् एतासां साधनानाम् अनुष्ठानेन रामकृष्णानां किं वैयक्तिकं प्रयोजनम् आसीत्? किं तु सर्वेषां धर्माणाम् ईश्वरैकसाध्यतां दर्शयितुम्, तस्यास् तस्याश्च साधनायाः परंपराम् अखण्डां स्थापयितुं तैः सर्वा ता साधना अनुष्ठिता इत्येव मन्तव्यम्[१०]।

शनैः शनैः रामकृष्णानां कीर्तिपरिमलः प्रसर्तुम् आरभत। संसारतापतप्ता जनाः तेषाम् उपदेशामृतश्रवणेन आत्मानं शीतलयितुम् आगच्छन्। रामकृष्णाः अधिकारभेदानुसारेण उपदिशन्ति स्म। तथापि अयं तेषाम् उपदेशस्य साधारणः अर्थः आसीत्, ईश्वरप्राप्तिरेव मानवजीवितस्य उद्देशः। अन्यत् सर्वं — लोकसेवापि — गौणम्, अतश्च पश्चात् कर्तव्यम्। यद्यपि ईश्वरप्राप्तौ अनेके मार्गाः सन्ति, तथापि अस्मिन् कलियुगे नारदीयो भक्तिमार्गः श्रेष्ठः। एकान्ते व्याकुला भूत्वा ईश्वरार्थं रुदित। तेन आर्तरोदनेन स लभ्यः, न तर्कविचारेण। स साकारोऽपि अस्ति, निराकारोऽपि। स एव यदा निष्क्रियावस्थः भासते तदा ब्रह्मेति उच्यते, यदा च सृष्ट्यादिकृत् तदा शक्तिः (काली) इति उच्यते। कामिनीकाञ्चनमेव माया। तां तीर्त्वैव ईश्वरं प्राप्स्यथ। ईश्वरं कामयध्वम्। तस्मै अधिकारपत्रं दत्त। अपरिहार्यः अहंकारः, अतः 'भक्तो

---

७ तेषां तस्मात् व्युत्थानं लोककल्याणार्थम्।

८ अस्याम् अवस्थायां तेषां स्त्रीभावेन तथा नाम सात्म्यम् आपन्नम् आसीत्, यथा कथंचित् मासिकं स्त्रीधर्ममपि ते अन्वभवन्।

९ तदानीं दास्यभक्त्या आविष्टाः रामकृष्णाः हनूमद्वत् वृक्षस्य आरोहावरोहाभ्यां मोदन्ते स्म। तेषां मर्कटास्थि अपि तदानीं प्रवृद्धम् आसीत्।

१० श्रीमती शारदामणिः ('माताजी') नाम रामकृष्णानां सहधर्मचारिणी आसीत्। अखिलायां स्त्रीजातौ जगन्मातुः आविष्कारं पश्यन्तः रामकृष्णाः स्वधर्मपत्नीमपि मातृभावेन पश्यन्ति स्म।

इति द्वे गाने गीते[१४]"।

गानोत्तर नरेन्द्र हस्ते गृहीत्वा जनसकुल तत् स्थान विहाय रामकृष्णा तम् उत्तरस्या दिशि वर्तमान कक्षान्तरम् अनयन्। प्रविश्य च ते द्वार पिहितम्। कमपि रहसि प्रदेयम् उपदेशम् अपेक्षमाणो नरेन्द्र. ततो घटितेन वृत्तान्तेन विस्मयस्तिमित अभवत्। सहसैव अनवरत प्रवृत्त-आनन्दाश्रुप्रवाहा रामकृष्णा त चिरपरिचितमिव कोमलया दृशा अवलोक्य, पुन पुन तस्य हस्त पीडयित्वा 'आगतोऽसि तर्हि। ननु कियत् चिरायित त्वया! अयि निष्ठुर! कियन्त नु दीर्घं काल त्वा प्रतीक्षमाण स्थितोऽस्मि' इत्यादिक वक्तु प्रवृत्ता। यावच्च नरेन्द्र किंकर्तव्यविमूढस् तिष्ठति तावत् साञ्जलिबन्ध रामकृष्णा पुनरपि वक्तुम् आरभन्त, 'अयि प्रभो! जानामि त्वाम्। नारायणस्य अवतार. यो नर, स एव त्वमसि। मनुष्यजातेर् दुःखापनोदनाय[१५] त्वम् अवतीर्णोऽसि'।

अधिकतरविस्मयोपहत नरेन्द्र मनसि अचिन्तयत् 'अपि अयम् उन्मत्तक:? ननु अह विश्वनाथदत्तस्य पुत्र। अय तु मा नारायणम् अवतीर्णं मन्यते!' एव चिन्तयत्येव तस्मिन् स्वकक्ष गत्वा रामकृष्णै किंचित् मिष्टान्नम् आनीतम्, नरेन्द्र च स्वहस्तेन भोजयितु ते प्रारभन्त। 'ननु दीयता तत् मम हस्ते। बहिर्गत्वा मित्रै सह भोक्ष्ये' इति वदन्त नरेन्द्रम् अनादृत्य, 'ते पश्चात् लप्स्यन्ते' इत्युक्त्वा तै नरेन्द्र तत् सर्वं भोजित। ततश्च 'अचिरमेव एकाकी आगमिष्यामि इति प्रतिजानीहि'

---

(२३ पृष्ठत)
यास्यति? ' इति गीताशय। नरेन्द्रस्य स्वीया आर्तता अस्मिन् गाने कथ प्रतिबिम्बिता स्यात् इत्येतत् उत्प्रेक्षितु न कठिनम्। रामकृष्णास् तावत् गानश्रवणेन भावाविष्टा अभवन्। उत्तरत्र नरेन्द्रस्य गानश्रवणेन रामकृष्णाना भावावेश नित्य इवाभवन्।

१४ श्रीरामकृष्ण-वचनामृत २ ३७५। नरेन्द्रे देहबुद्धे अभावोऽस्ति इत्यपि रामकृष्णै तदानीम् अवलोकितम्। (श्रीरामकृष्ण-वचनामृत १ ३०२)

१५ 'मनुष्यजातेर् दुःखापनोदनाय' इत्यस्य स्थाने 'मम कृते' इति श्रीरामकृष्ण-वचनामृत ३ ६७२

इति ते नरेन्द्र सनिर्बन्धम् अब्रुवन्। गत्यन्तराभावात् 'तथा' इति नरेन्द्रेण उक्ते उभौ तौ यत्र भक्तवृन्द स्थितम् आसीत् त कक्ष पुनरपि न्यवर्तेताम्।

### आर्तरोदनेन ईश्वरलाभः

तत्र गत्वा भक्तवृन्दस्य पुरत नरेन्द्रस्य ज्ञानप्रभा प्रशस्य रामकृष्णा पप्रच्छु 'वत्स नोरेन्! अपि त्व निद्रावसरे किंचित् ज्योति पश्यसि?' नरेन्द्रेण 'आम्। पश्यामि' इत्युक्ते रामकृष्णा अवोचन्, 'सत्य तर्हि। अय ध्यानसिद्ध अस्ति। अय जन्मसिद्धो ध्यानयोगी अस्ति।' रामकृष्ण-गत विचारयन् नरेन्द्र कंश्चित् क्षणं तान् उपसृत्य पिपृच्छिषित प्रश्नम् अपृच्छत् 'महाशय, अपि भवता ईश्वर. दृष्टोऽस्ति?' 'आम्। यथा अह त्वा पश्यामि, तथैव ईश्वरमपि पश्यामि। यत्सत्यम, त स्फुटतर पश्यामि,' रामकृष्णा अवोचन्। ईश्वरदर्शनस्य कि साधनम इति नरेन्द्रस्य जिज्ञासा उत्प्रक्ष्येव ते अग्रे अवोचन, 'यथाऽह त्वा पश्यामि, त्वया सह च सभाषण करोमि, एवमेव ईश्वरमपि द्रष्टु तेन सह च सभाषण कर्तु शक्यते। किं तु कस्य तेन प्रयोजनम्? जना पुत्रदारार्थं वा, धनसपत्यर्थं वा अश्रुझरी विसृजन्ति, न तु ईश्वरार्थम्। यदि तु कश्चित् आर्तो भत्वा तथैव मुक्तकण्ठम् ईश्वरार्थमपि रुद्यात, ईश्वर तस्मै अवश्यम् आत्मान दर्शयत्।'

रामकृष्णानाम् एतेन वचनेन नरेन्द्रस्य मनसि पद कृतम्। अन्तत तेन अधुना स पुरुष आसादित आसीत्, येन ईश्वर दृष्ट आसीत्। धर्मस् तर्हि साक्षात् अनुभवनीयो विषय अस्ति, न केवल श्रद्धेय। नरेन्द्र रामकृष्णाना शुचितया, वैराग्येण, आत्मविश्वासेन च प्रभावित आसीत्। तथापि तेषा त प्रति अनाकलनीयव्यवहार-जनितया, अय पुरुष उन्मत्त, न्यूनतो न्यूनम् अर्धोन्मत्त स्यादपि इति शङ्कया स सर्वथा मुक्तो नासीत्। अन्योन्यविरुद्धं विचारै उभयथा आकृष्यमाणोऽपि याचित निर्वृतिम् अनुभवन् नरेन्द्र रामकृष्णान् आमन्त्र्य स्वगृह न्यवर्तत।

एको मासो व्यनीत। रामकृष्णा नरेन्द्रस्य प्रतीक्षापरा आसन्। न तु नरेन्द्र आगत। तस्य कृते रामकृष्णा व्याकुला अभवन्। यथा आर्द्रवस्त्र शोषणार्थं निष्पीड्येत, तथा नरेन्द्रस्य वियोगेन रामकृष्णाना

हृदय निष्पीड्यमानमिव आसीत्। एकान्ते गत्वा ते मुक्तकण्ठम् आक्रोशन्नपि - 'हे प्रिय। एहि, एहि। नाह त्वा विना जीवितु शक्नोमि।' एकमासोत्तर नरेन्द्र पुनरपि आगत। कलिकाताता दक्षिणेश्वरपर्यन्त दीर्घम् अध्वान (सप्त-किलोमीटर प्राय) पदा दलयन् श्रान्त एकाकी आगत[16]।

**स्वप्नो नु माया नु मतिभ्रमो नु**

प्रविश्य च नरेन्द्र रामकृष्णान् खट्विकायाम् उपविष्टान् अपश्यत्। रामकृष्णै त प्रविशन्त दृष्ट्वैव 'एहि, एहि' इति प्रेम्णा आहूय स्वीये आसने समीप एव स उपवेशित। यावच्च किम् अयम् 'उन्मत्तक' इदानी करोति इति उत्प्रेक्षितु नरेन्द्र आरभते, तावत् रामकृष्णा, केनापि भावेन आविष्टा, तस्मिन् दृष्टि बद्ध्वा किमपि अस्फुट भणन्त उपसृत्य त निजेन दक्षिणेन पादेन अस्पृशन्। रामकृष्णै एव स्पृष्टमात्रस्य नरेन्द्रस्य या अवस्था सजाता ता तस्यैव शब्दै वर्णयितु युक्तम्। नरेन्द्रो वक्ति

> "एव स्पृष्टोऽह सहसैव कामपि अननुभूतपूर्वाम् अवस्थाम् अन्वभवम्। तस्य कोष्ठस्य भित्ती, अन्यच्च कोष्ठगत वस्तुजात, सर्वमपि महता वेगेन भ्रान्त्वा कुत्रापि शून्ये विलीनम् एताभ्या विवृताभ्याम् अक्षिभ्याम् अपश्यम्। सर्वमेव विश्वम्, तेन सह च मम 'अहम्' अपि कुत्रापि विश्वग्रस्मरे महाशून्ये विलीयमान आसीत्[17]। तेन च मरणात् अभिन्नेन अनुभवेन भयचकितो भूत्वा, आत्मन प्रभवितुम् असमर्थोऽह, 'ननु भो! किमिद मयि भवान् करोति! ननु गृहे मम मातापितरौ स्त!' इत्याक्रोशम्। तत् श्रुत्वा विहस्य 'भवतु। भवतु। तथैव अस्तु। सर्वं यथाकाल

१६ पूर्वस्मिन् समये (मित्रै सह) स वाहनाधिरूढ आगत आसीत्।

१७ 'The touch at once gave rise to a novel experience within me With my eyes open I saw that the walls, and everything in the room, whirled rapidly and vanished into naught, and the whole universe together with my individuality was about to merge in an all-encompassing mysterious Void '

भविष्यति' इत्युक्त्वा रामकृष्णा मा वक्षसि अस्पृशन्। अहो आश्चर्यम्! तदेवम् उक्तमात्रे सति निमेषमात्रेण अन्तर्वहि सर्वमपि यथापूर्वम् अभवत्। ता एव भित्तय। तदेव कोष्ठगत वस्तुजातम्। स एव च मम 'अहम्'।"

अथ प्रकृतिम् आपन्नो नरेन्द्र यदिद मया अनुभूत तत 'स्वप्नो नु माया नु मतिभ्रमो नु' इति चिन्तयितु प्रारभत। अहो प्रभाव अस्य पुरुषस्य! अस्य इच्छामात्रेण तद् अद्भुतम् अवस्यान्तरम् आविर्भूतम्, तिरोभूतम् च। अपीय कापि मोहिनी विद्या स्यात्? अशक्य तत्। नाह् तथा हृदयदुर्बलोऽस्मि। यदि अयम् उन्मत्त, कुतोऽस्य इयती शक्ति? कुतो वा इद नैर्मल्यम्? कथ तर्हि तस्य मयि सः अनाकलनीयो व्यवहार उपपादनीय? किमपि निर्णेतु नरेन्द्र असमर्थ आसीत्। अन्ते 'तत् यथाकथमपि अस्तु, नास्य पुनरपि अवसरो देय' इति निश्चित्य नरेन्द्र जागरूक इव अतिष्ठत्। लब्ध प्रथम प्रतीघाताऽपि तस्य तार्किकी बुद्धि इद गूढ समाधातु कृतनिश्चया आसीत्। न तु तस्मिन् दिने तदुत्तर कोऽपि विशेष समपद्यत। रामकृष्णाना तेन सह व्यवहार चिरपरिचितेन मित्रेण इव स्नेहपूर्ण आसीत्। अथ अस्तम् अभिलषति सवितरि अचिर पुनरागमन प्रतिज्ञाय रामकृष्णे अनिच्छया अनुमतगमन नरेन्द्र स्वगृह न्यवर्तत।

गतेपु कतिपयेपु दिनेपु नरेन्द्र तृतीयवार दक्षिणेश्वरम् अगच्छत्। तस्य जन्मपूर्व वृत्तान्तम्, अवतारकार्यम् इत्येतदादि तन्मुखादेव श्रोतुम् इच्छन्त रामकृष्णा त समीपवर्ति यदुनाथ-मल्लिकस्य उद्यानम् अनयन्। तत्र भावाविष्टैस् तै स्पृष्टमात्रो नरेन्द्र बाह्यसज्ञाशून्य अभवत्। कियन्त काल स तदवस्य अतिष्ठत्, किं वा तदानीम् अभवत, न किमपि स अजानात्। यदा तु स प्रत्यागतचेतन अभवत्, तदा रामकृष्णै स्पृश्यमानवक्षसम् आत्मानम् अपश्यत्। अत्रान्तरे रामकृष्णै स अनेकान् प्रश्नान् पृष्ट आसीत्, तेन च ते प्रश्ना प्रत्युक्ता आसन्। अस्मिन विषये रामकृष्णै पश्चात् एवम् उक्तम् 'नरेन्द्रगत यत् मया पूर्वमेव ज्ञातम् आसीत्, तत् तस्य उत्तरै दृढीमृतम्। तद् रहस्य तथैव तिष्ठतु। इदमेव वच्मि-तदानी मया ज्ञातम् यत् नरेन्द्र प्रागेव सिद्ध ऋषि अस्ति

यदा च स निज सत्य स्वरूप ज्ञास्यति तदा योगेन स तनुत्याग करिष्यति' इति।

**नरेन्द्रावतारस्य अद्भुतदर्शनम्**

वस्तुत, यथा उपरि उक्तमस्ति, नरेन्द्रस्य दक्षिणेश्वरगमनात् पूर्वमेव रामकृष्णं तद्गत ज्ञातम् आसीत्। समाध्यवस्थाया तं तत् ज्ञानचक्षुषा दृष्टम् आसीत्। रामकृष्णैरेव स्वय कथितस्य तस्य अद्भुतस्य वृत्तान्तस्य अय सारांशोऽस्ति —

"एकदा अह समाधिस्थ आसम्। तदानी दृष्टम्, यत् मम मन उपरि उपरि गच्छति। ज्योतिर्मयेण मार्गेण आरोहत् तत् तारकालोकम् अतिक्रम्य सूक्ष्मलोक प्राविशत्। ततश्च ऊर्ध्वमूर्ध्वं गच्छति तस्मिन् उभयतोमार्गं सूक्ष्म शरीरा देवता अपश्यम्। तस्यापि लोकस्य अन्त प्राप्य, तेजोमयी भित्तिम् अतिक्रम्य, मन्मन उपरिष्ठ निराकारलोक प्राविशत्। अशरीरी स लोक देवतानामपि अप्रवेश्य आसीत्। तत्र अह सप्त ध्यानस्थान् ऋषीन् अपश्यम्। तेषाम् ऋषीणा अतीतदैवत माहात्म्य मयि चिन्तयति तस्य अव्यावृतस्य ज्योतिर्मयस्य लोकस्य कश्चित् भाग घनीभूय दिव्यबालकरूपेण परिणत। क्षणेन स दिव्यो बालक अन्यतमम् ऋषिम् उपसगम्य, आत्मन कोमलाभ्या बाहुभ्या त कण्ठे अश्लिष्यत्, स्वेन च मधुरेण शब्देन त व्युत्थापयितुम् आरभत। तेन दिव्येन स्पर्शेन व्युत्थित स ऋषि तमेव साक्षात् पुरत अपश्यत, य स ध्यानावस्थितेन मनसा पश्यन् आसीत्। प्रसादस्तिमितया दृशा प्रेक्षमाण त बालक अब्रवीत्, 'अह भुवम् अवतरामि। त्वयापि मया सह आगन्तव्यम्'। स्नेहमय्या दृशैव प्रदर्शितानुमति स ऋषि पुनरपि समाधिमग्न अभवत्। ततोऽह विस्मयेन पश्यामि, यत् तस्य ऋषे शरीरमनसो कश्चिदश पृथक भूत्वा ज्योतीरूपेण त बालकम् अनुगच्छति। नरेन्द्र दृष्ट्वा अह झटिति अभ्यजानाम् — स ऋषिरेव अयम् इति"।"

१८ One day I found that my mind was soaring high in Samadhi along a luminous path. It soon transcended the

किं तु एव सिद्ध सन्नपि, ईश्वरीयकार्यार्थं च अवतीर्ण सन्नपि, नरेन्द्र अज्ञात-निजस्वरूप आसीत । तस्य च तथैव मायाबद्धत्वेन स्थापन

---

(२८ पृष्ठत)

stellar universe and entered *the subtler region of ideas* As it ascended higher and higher I found on both sides of the way ideal forms of gods and goddesses The mind then reached the outer limits of that region, where a luminous barrier separated the sphere of relative existence from that of the Absolute Crossing that barrier, the mind entered the transcendental realm, where no corporeal b-ing was visible Even the gods dared not peep into that sublime realm, but had to be content to keep their seats far below The next moment I found seven venerable sages seated there in Samadhi It occurred to me that these sages must have surpassed not only men but even the gods in konwledge and holiness, in renunciation and love Lost in admiration I was reflecting on their greatness when I saw a portion of that undifferentiated luminous region condense into the form of a divine child The child came to one of the sages, tenderly clasped his neck with his lovely little arms, and addressing him in a sweet voice attempted to drag his mind down from the state of Samadhi The magic touch roused the sage from his superconscious state and he fixed his unmoving half open gaze upon that wonderful child His beaming countenance showed that the child must have been the treasure of his heart In great joy the strange child said to him I am going down You too must go with me ' The sage remained mute but his tender look expressed his assent As he kept gazing on the child he was again immersed in Samadhi I was surprised to find that a fragment of his body and mind was descending on earth . . .

रामकृष्णं आवश्यकं मताम्। सामान्यपुरुषस्य इव तस्यापि चिराय प्रयत्न, साधनायाश्च परम्परा भवतु इत्येव ईश्वरेच्छा आसीत्। अन्यस्य यस्य कस्यापि बुद्धिचरणस्य साधकस्य इव नरेन्द्रस्यापि साधनमार्गं आदौ तमोवृतो भूत्वा संशय, अविश्वास, अश्रद्धा, निराशा इत्यादीन् गर्तविशेषान् अतिक्रम्य अन्ते निःसंशय ज्ञानज्योतिः प्राप्नोत्। आदौ गुरुम् अनावश्यकं मन्यमान, मूर्तिपूजायाम् अश्रद्दधान, जगन्मातृ मन्दिरागमनार्थं रामकृष्णानां कृतोपहास, तेषां च अद्भुतानि दर्शनानि मतिविभ्रमरूपाणि मन्यमान, अद्वैतवादिभिश्च ऋषिभिः नूनम् उन्मत्तैः भाव्यम् इति शङ्कमानो नरेन्द्र अन्ततोगत्वा गुरुचरणौ भूत्वा आध्यात्मिकसिद्धेः परां काष्ठाम् अन्वभवत्। मानसिकसंघर्षबहुलम् इदं नरेन्द्रस्य साधनाजीवितम् अत एव तादृशसंघर्षेण उभयतः आकृष्यमाणानां साधकानाम् आश्वासकरं भवति, दीपस्तम्भायते।

नरेन्द्रस्य मनसि अन्ततोगत्वा यत् आमूलचूल परिवर्तनम् अभवत्, तत् कदा, केन क्रमेण, विशिष्य कस्मात् कारणात् इत्यादीनां यथावत् सौक्ष्म्येण निवेदनं न शक्यम्। रामकृष्णान् प्रति नित्यं गच्छन्नपि, तांश्च शुचित्व-स्नेहमयत्वादिनिमित्तं च बहु मन्यमानोऽपि न तेषां किमपि वाक्यं नरेन्द्र तावत् अङ्गीचकार, यावत् तस्य बुद्धिसमाधानं न जातम्। केनापि कालेन नरेन्द्रस्य तर्ककर्कशा बुद्धि रामकृष्णान् गुरुत्वेन अङ्गीचकार। तावत्पर्यन्तं तु रामकृष्णानां तं प्रति असीम स्नेह एव तस्य निबन्धनी रज्जु अभवत्। नरेन्द्रस्य साधनेतिहासे गुरुशिष्ययो अयं संबन्ध किमपि विशेषं महत्त्वं धारयति।

* * *

---

(२९ पृष्ठत)

of an effulgent light No sooner had I seen Naren than I recognised him to be that sage " ( Life of Swami Vivekananda, pp 61-62 )— स दिव्यो बालक रामकृष्ण-परमहंस-रूपेण अवतीर्ण इति पश्चात् रामकृष्णानामेव मुखात् अवगतम् अभवत्।

## ५. तत्त्वज्ञशिक्षया अभ्यासः

दुर्लभ त्रयमेवैतद् देवानुग्रहहेतुकम् ।
मनुष्यत्व मुमुक्षुत्व महापुरुषसश्रय ॥
( विवेकचूडामणि )

इति पूज्यपादा श्रीशकराचार्या वदन्ति । नरेन्द्रे ( न केवल नरमात्रे[1] ) उत्कटा मुमुक्षा, सत्यसाक्षात्कारेच्छा, प्रागेव उत्पन्ना आसीत् । अधुना तेन रामकृष्ण-परमहस-सदृशस्य महापुरुषस्य आश्रयो लब्ध । श्रीरामकृष्णाना मार्गदर्शनानुसारेण नरेन्द्र इदानी साधनामार्गम् आक्रमितु प्रारभत ।

अनन्यसामान्य गुरुशिष्यसबन्ध

एतयो गुरुशिष्ययो अन्योन्यसबध अनन्यसामान्य आसीत् । प्रायण शिष्येण गुरु उपसत्तव्य, तया तथा च सेवया परिचरणीय, स्तोष्टव्यश्च भवति । 'गुरुवाक्य प्रमाण' कृत्वा, बुद्धिस्वीकृत वा अबुद्धिस्वीकृत वा तस्य अङ्गीकर्तव्य भवति । न स गुरुणा सह विवदितु शक्नोति । प्रकृते तु सर्वं विपरीतम् आसीत् ।

नरेन्द्र प्रायेण सप्ताहस्य एकवार, द्विवार वा, रामकृष्णदर्शनार्थं दक्षिणेश्वर गच्छति स्म । यदि कदाचित् तु स कार्यवशात् गन्तु नाशक्नोत्, तर्हि रामकृष्णा व्याकुला भवन्ति स्म । बालस्वभावात् ते अधीरा भूत्वा नरेन्द्र प्रेषयितु कमपि पुन पुन प्रार्थयन्ति स्म[1] । समीपवर्ति उद्यान गत्वा एकान्ते मुक्तकण्ठ रुदन्ति स्म । देवीसमीपे वा नरेन्द्रागमनार्थं प्रार्थयन्ति स्म । कदाचित् असह्यविरहवेदनास् ते नरेन्द्र द्रष्टु स्वय कलिकाताया तस्य

---

१ एकदा रामदयाल तथा च बाबुराम इत्येतौ भक्तौ दक्षिणेश्वरे रात्रौ न्यवसताम् । तदानीम् अनेकान् दिवसान् नरेन्द्र दक्षिणेश्वरम् आगत नासीत् । तस्या रात्रौ निद्रितौ तौ रामकृष्णै अनेकवारम् उत्थापितौ, याचितौ च 'यदा स्व युवा कलिकाता गमिष्यथ, तदा नरेन्द्रम् अत्र प्रेषयतम् । मा विस्मरतम्' इति ।

गृहं गच्छन्ति स्म—परब्रह्म इव पुण्डलीकदर्शनाय[2]। यदि सा नरेन्द्रस्य ब्राह्मसमाजे गमनवेला आसीत्, तर्हि जनजल्पनिर्भया रामकृष्णा नत्रापि अगच्छन्[3]। अनेकदा नरेन्द्रस्य दर्शनमात्रेण रामकृष्णा भावसमाधिं प्रविशन्ति स्म। त बालकवत् स्वहस्तेन भोजयन्ति स्म[4]। त लालयन्ति स्म। त सर्वदा पुरत स्तुवन्ति स्म।

अन्ये शिष्या शिष्यधर्मम् अनुसृत्य वीजनेन वा, पादसंवाहनेन वा, अन्येन वा तेन तेन प्रकारेण गुरु पर्यचरन्। नरेन्द्रस्तु तथा कर्तुम् उत्सुकोऽपि स्वयं रामकृष्णैः निषिद्ध[5]। 'तव मार्ग अन्य अस्ति' इति तं त

२ पुण्डलीको नाम महान् मातापित्रो भक्त आसीत्। एकदा तस्मिन् पित्रो सेवापरे सति स्वयं भगवान् तं द्रष्टुं गत। तदानी 'तिष्ठतु भगवान् यावदहं पित्रो सेवां समापयामि' इत्युक्त्वा पुण्डलीकेन भगवत्स्थित्यर्थम् एका इष्टका प्रक्षिप्ता इति कथा महाराष्ट्रे प्रसिद्धा।

३ एकदा इत्थमेव नरेन्द्रं द्रष्टुं रामकृष्णा ब्राह्मसमाज गता। तेन तत्र जनितस्य सम्भ्रमस्य, नरेन्द्रस्य च असन्तोषस्य वृत्तान्त चरित्रकारै (Eastern and Western Disciples) वर्णितोऽस्ति (पृ ७१-७२)।

४ एतादृशेषु विषयेषु रामकृष्णा बालनिर्विशेषा, जनजल्पनिर्भयाश्च आसन्। एकदा (२४-४-८५) श्री गिरीश-घोषस्य गृहे सर्वे प्रसाद-ग्रहणार्थम् उपविष्टा आसन्। रामकृष्णा एकस्या पङ्क्तौ आसन, अन्यस्या च नरेन्द्र। अर्धसमाप्ते भोजने सहसा रामकृष्णा स्वीयाया स्थालीत कांश्चित खाद्य-पदार्थान् गृहीत्वा उदतिष्ठन्, नरेन्द्रं च गत्वा 'नरेन्द्र! इदं तावत् भक्षय' इत्युक्त्वा तत् दत्त्वा पुनरपि स्वस्थानम् अगच्छन इति वृत्तान्त श्रीरामकृष्ण-वचनामृते (३ १७३) निवेदितोऽस्ति। रामकृष्णै नरेन्द्रस्य स्वहस्तभोजनस्य अनेके वृत्तान्ता सन्ति।

५ 'त्वयि शिवोऽस्ति, मयि शक्तिरस्ति, उभौ च अभिन्नौ' इत्येकदा रामकृष्णा नरेन्द्रम् अब्रुवन्। कथं नाम शिवोऽपि सेवां करोतु? अनेन परिचरणनिषेधप्रसङ्गेन किंचित् प्रासङ्गिकं स्मर्यते। लोकमान्यै तिलकै न कदापि स्वीया धर्मपत्नी आत्मन पाद-संवाहनं कर्तुम् अनुमता।

वदन्ति स्म। अन्येषा शिष्याणा कृते भक्ष्याभक्ष्य-नियमा आसन्। शौचाशौच पालनीयम् आसीत्। नरेन्द्रस्तु एतेभ्यो नियमेभ्य निर्मुक्त आसीत्। 'तस्मिन् चटचटायमान ज्ञानाग्नि सर्वामपि अशुद्धि अतत्क्षण भस्मसात् करोति' इति ते वदन्ति स्म। तेषा नरेन्द्रे निसीम विश्वास आसीत्। न कमपि आत्मन पुरत नरेन्द्र निन्दितु ते अन्वजानन्।

**नरेन्द्रे नारायण**

रामकृष्णाना मनसि नरेन्द्रविषयक योऽयम् अपार स्नेहसागर सततोच्छलित आसीत्, कोऽपि अपूर्व पक्षपात आसीत्, तस्य स्वरूप सर्वथा विशुद्धम् आसीत्, अपार्थिवम् आसीत्। तस्य च प्रेम्णः कारण तै प्रथममेलने एव प्रकटीकृतम् आसीत्। ते नरेन्द्रे नारायण पश्यन्ति स्म। अनश्च नरेन्द्रस्य भोजन नाम नारायणभोजनम् इति तेषा श्रद्धा आसीत्[६]। आत्मान प्रति प्रदर्श्यमानस्य अस्य 'अन्धप्रेम्ण' कारणम् अजानानो नरेन्द्र रामकृष्णान् निर्भर्त्सयते स्मापि। 'एव मदेकचित्ताना युष्माकम् अन्यस्मिन् जन्मनि मद्भावेन परिणतिर् भविष्यति। यथा गृहीतमृगजन्मन भरतस्य' इति स तान् वदति स्म। आदौ तावत नरेन्द्रस्य वचन श्रद्दधाना रामकृष्णा एतेन विचारेण दूयन्ते स्म। पश्चात् तै एकदा जगदम्बा गत्वा, तया सह मन्त्रयित्वा, सानन्द निवृत्य नरेन्द्र उक्त, 'शठ! अम्बा वदति, यस्मात् अह त्वयि ईश्वर पश्यामि, अनस् त्वयि एव स्निह्यामि। यदा त्वयि ईश्वर न पश्येयम्, तदा त्वयि दृष्टिपातमपि कर्तुं न शक्नुयाम्' इति।

रामकृष्णा सर्वेषा पुरत नरेन्द्र निसकोच स्तुवन्ति स्म। नरेन्द्रसदृशा शुद्धचित्ता बालका नित्यसिद्धा सन्ति[७], तेषा यत् देहधारण, या या साधना, सा लोकशिक्षणार्थम् इति ते वदन्ति स्म। वैराग्यस्य जन्मसिद्धतया अनुत्पन्नकामिनीकाञ्चनमोह नरेन्द्र ते 'होमा' पक्षिणा

६ राखाल प्रभृतीना विषयेऽपि रामकृष्णानाम् इय धारणा आसीत्।
७ अय पक्षी अत्युच्चै वसति, भेदोन्मुख तस्य अण्डम् अध पतितुम् आरभते, अध पततस् तस्मात् पक्षिशावक निर्गच्छति, भूमि-

उपमिमते स्म। तस्य विशाले लोचने, मधुरः शब्दः, धीरोद्धता च गतिः पितृवात्सल्यभाजः तान् सदैव हरति स्म। मधुराधिपतेः इव नरेन्द्रस्य सर्वमेव तेषां मधुरं प्रत्यभात्।

नरेन्द्रे अष्टादश शक्तय .

एकदा विख्याताः ब्राह्मसमाजनेतारः श्री केशवचन्द्र-सेन महोदयाः तथा च श्री. विजयकृष्ण गोस्वामिनः रामकृष्णान् द्रष्टुं दक्षिणेश्वरम् उपस्थिताः आसन्। नरेन्द्रोऽपि तदानीम् उपस्थितः आसीत्। रामकृष्णाः पर्यायेण उभावपि आलोकयन्त आसन्। अथ केशवचन्द्र-प्रभृतिषु अपयातेषु रामकृष्णाः अवोचन्, 'यदि केशवे माहात्म्यस्य एकं लक्षणम् अस्ति, नरेन्द्रे तादृशानि अष्टादश लक्षणानि सन्ति। केशवे तथा च विजये मया मन्दप्रकाशा ज्ञानदीपिका दृष्टा, नरेन्द्रे तु जाज्वल्यमानो ज्ञानसूर्यः' इति। अनया आपाततः अतिशयोक्तिभूतया प्रशंसया अनुरिसक्तेन, प्रथितयशसोश्च तयोः तुलनया आत्मानं सत्यमेव लघुं मन्यमानेन नरेन्द्रेण यदा स्वीया असंमतिः प्रकटीकृता, तदा रामकृष्णाः अवोचन्, 'किं करोमि। न तत् मम वाक्यम् आसीत्। यत् जगदम्बया मह्यं दर्शितम्, तत् मया केवलम् अनूदितम्। न च सा कदापि असत्यं दर्शयति'। तुल्यनिन्दास्तुतिर् नरेन्द्रः न स्तुत्या दृप्येत इति तेषां विश्वासः आसीत्। न च तैः

---

(३३ पृष्ठत)
प्राप्ते. पूर्वमेव आकाशे तस्य अक्षिणी विवृते भवतः, नूतनोत्पन्नाभ्यां च पक्षाभ्यां स अस्पृष्टभूमिः एव पुनरपि आकाशं गच्छति इतीयं होमापक्षिविषयिणी कथा वेदे श्रूयते इति रामकृष्णाः वदन्ति स्म। यथा होमापक्षी सदैव भूमिस्पर्शातीतः, तथा नरेन्द्रादयोऽपि कामिनीकाञ्चनरूपायाः मायायाः अतीताः इति ते उदाहरन्ति स्म।

श्रीरामदासस्वामिभिः दासबोधे (१५.८) 'अेक प्राणी अंतरिक्षी असती। तेही नाही देखिली क्षिती। वरीच्या वरी उडोन जाती। पक्ष फुटल्यानतरे।' इति वदद्भिः एतादृशाः पक्षिणः निर्दिष्टाः सन्ति।

केनापि आत्मन पुरत कृता नरेन्द्रनिन्दा अनुमता। 'नरेन्द्रनिन्दा नाम शिवनिन्दा' इति ते वदन्ति स्म।

'वादो नावलम्ब्य' इति सूत्र' रामकृष्णाना समतम् आसीत्। सर्वे धर्मा ईश्वरमेव प्रापयन्ति, सर्वाणि च मतानि तस्या तस्यां भूमिकायाम्, साधकस्य च तत्तद्-अधिकारानुसारेण सत्यानि सन्ति इति तेषा विश्वास आसीत्। अत ते वाद न कदापि प्रोत्साहयन्। नरेन्द्रस्तु अत्रापि अपवाद आसीत्। नरेन्द्र परपक्षमतानि काण्ड काण्ड खण्डयति इति ते सकौतुक वदन्ति स्म। उत्तरायुषि नरेन्द्रेण जगते धर्मशिक्षा प्रदातव्याऽस्ति, बुद्धि-वादिनो जगत शङ्कानिरासपूर्वक समाधान कर्तव्यम् अस्ति, अत तस्यैव शङ्कानिरसन प्रथम भवतु, तस्य च वादकौशल वर्धताम् इतीव हेतुना रामकृष्णा नरेन्द्रस्य वादप्रीति न व्यरुन्धन्।

यस्मिन् काले नरेन्द्र रामकृष्णान् प्रति गन्तु प्रारभत, तदानीतनी तस्य मानसिकी अवस्था अवधेया[९]। अन्तिमसत्यस्य अन्वेषणस्य, तस्य च

८ नारदभक्तिसूत्रम् ७४

९ तदानी नरेन्द्रस्य सहकारिषु डॉ ब्रजेन्द्रनाथ सील महोदया अपि आसन्। पश्चात् १९०७ खिस्ताब्दे एते डॉ सील महोदयै 'प्रबुद्धभारत' पत्रिकायाम् एक लेख विलिख्य स्वयम् अवलोकित तदानीतनो नरेन्द्र अन्तरङ्गबहिरङ्गतया वर्णितोऽस्ति। प्रथम ते बहिरङ्गम् एव वर्णयन्ति–

Undeniably a gifted youth, sociable, free and unconventional in manners a sweet singer, the soul of social circles, a brilliant conversationalist, somewhat bitter and caustic piercing with the shafts of a keen wit the shows and mummeries of the world, sitting in the scorner s chair but hiding the tederest of hearts under the garb of cynicism, altogether an inspired Bohemian but possessing what Bohemians lack, an iron will, somewhat peremptory and absolute, speaking with accents of authority and withal possessing a strange power of the eye which could hold his listeners in thrall

साक्षात्करणस्य तीव्रेच्छा तस्य मनसि समुत्पन्ना आसीत्। तदर्थं यत्किमपि मूल्य प्रदातुं स सिद्ध आसीत्। किं तु अद्ययावत् न कोऽपि निश्चितो मार्ग, न वा कोऽपि आत्मविश्वासी मार्गदर्शक तेन उपलब्ध आसीत्। तस्य बाल्यसुलभा आस्तिकता तावत् प्रागेव सचूर्णिता आसीत्। तत्त्वज्ञानस्य अध्ययनकारणात् स स्पेन्सर-प्रभृतीनाम् अज्ञेयवादेन आकृष्ट आसीत्। कश्चित्काल तस्य चित्त समाहितमपि अभवत्। किं तु तस्य स्वाभाव्यम् अन्यदेव आसीत्। य तत्त्वज्ञानस्य केवलम् अध्ययनेच्छु, स अज्ञयवादेन तुष्यतु नाम। न तु स, य तत्त्वज्ञानस्य अनुभवेच्छु। असह्या भवति तस्य अज्ञेयता। नरेन्द्र अनुभूत्यथम् अताम्यत्।

किं तु एव सत्यपि, रामकृष्णाना शुचित्वेन, स्नेहमयत्वेन, आत्मविश्वासेन च प्रभावित सन्नपि, प्रमाण विना न तेषा किमपि वाक्य स्वीकर्तुं नरेन्द्र सिद्ध आसीत्। व्यपगत-मूर्तिपूजाविश्वासाय तस्मै रामकृष्णाना कालीमन्दिरगमनम् देव्याश्च पुरत तेषा प्रणमन नारोचत। स तदर्थं परिहसति स्मापि। अथैकदा 'यदि काली न श्रद्दधासि, किमर्थं तर्हि इह आगच्छसि ?' इति रामकृष्णै पृष्ट, 'न इहागमनमात्रात् मया किमपि अवश्यश्रद्धेयम्, युष्मदर्थम् आगच्छामि' इति स्पष्टम् आचष्ट नरेन्द्र। ब्राह्मसमाजे अङ्गीकृता निराकारस्य उपासना अद्यापि तस्य मनसि कृतपदा आसीत्। रामकृष्णै शनै शनै स इद ग्राहित, यत् भगवान् कस्यचित् (=ज्ञानिन) कृते निराकारोऽस्ति, कस्यचिच्च

(३५ पृष्ठात्)

एव नरेन्द्रस्य बहिरङ्ग वर्णयित्वा तस्य मनसि वात्यायमानम्, अन्येश्च प्राय अलक्षित भावसघर्षं ते एव प्रस्तुवन्ति –

This was patent to all But what was known to few was the inner man and his struggles,—the 'stuerm und drang' of soul which expressed itself in his restless and Bohemian wanderings इत्थ प्रस्तुत्य डॉ. रीरं महोदयै विस्तरत वर्णित नरेन्द्रस्य मानसिक सघर्ष विशेषजिज्ञासुभि मूलग्रन्थ एव द्रष्टव्य। Eastern and Western Disciples विरचितम् Life of Swami Vivekananda, पृ ९२-९८ इत्यत्र अय लेख उद्धृतोऽस्ति।

( = भक्तस्य ) कृते साकारोऽपि । गोपी-कृष्ण-कथा स्वीकर्तुं नव्यशिक्षितो नरेन्द्र नैच्छत् । स तत्र अनैतिकतामपि अपश्यत् । रामकृष्णा वदन्ति स्म, 'अय वृत्तान्त ऐतिहासिक स्यात्, न वा । अन्यत् सर्वं विहाय किमिति राधाया भक्ते औत्कट्यमात्र त्व नावलोकयसि ? ' '[१०]

**अद्वैतानुभवः**

नरेन्द्र ज्ञानमार्गस्य अधिकारी अस्ति इति रामकृष्णै ज्ञातम् आसीत् । अत तै स अष्टावक्रसहितादिकान् अद्वैतग्रन्थान् स्वसनिधौ पठितुम् आदिष्ट आसीत् । तत्रस्थ जीवात्म-परमात्मनो अद्वैतप्रतिपादन नाम परमात्मन अवमान इति नरेन्द्रस्य मतम् आसीत् । ईदृश 'पाखण्ड-मत ' प्रतिपादयद्भिर् मुनिभि नूनम् उन्मत्तकैर् भाव्यम् इति स आदौ तावत् वदति स्म । तस्य औद्धत्येन अविचलिता रामकृष्णा प्रशान्तमनसा ब्रह्मात्मैक्यभाव युक्तिवचोभि त प्रतिपादयन्ति स्म, 'ईश्वर स्वरूपदर्शनार्थं पुन पुन प्रार्थयस्व ' इति नरेन्द्रम उपदिशन्ति स्म । एकदा एतादृश ब्रह्मात्मैक्यप्रतिपादन रामकृष्णमुखात् श्रुत्वा तद्वचसि अप्रतीतो नरेन्द्र ततो निष्क्रान्त । समीपे श्री प्रतापचन्द्र हाजरा नाम पुरुष आसीत् । तम् उपगम्य 'अहो अद्वैतवाद ! घट ईश्वर ! पात्रम् ईश्वर ! त्वम् ईश्वर ! अहम् ईश्वर ! किमीदृश्यमत परम ? ' इति उपहसितु नरेन्द्र प्रवृत्त । समीपकक्षस्थितै रामकृष्णै तत श्रुतम् । अर्धभावाविष्टा ते बहिरागता । 'किं रे, किं भणसि ? ' इति सस्मितम् उक्त्वा ते तम् अस्पृशन् । तै एव स्पृष्टस्य नरेन्द्रस्य या अवस्था जाता सा स्वय नरेन्द्रेण निवेदिताऽस्ति । अथ तत्र साराश —

" गुरुणा एव ऐन्द्रजालिकेन इव स्पृष्टमात्रस्य मम मन किमपि अद्भुतम् अवस्थान्तरम् अगच्छत् । विस्मयस्तिमितेन मया दृष्टम्, यत् विश्वस्मिन्नपि जगति परमात्मान विहाय न किमपि विद्यते । तस्मिन् दिने अहीयमाना सा अवस्था तथैव आसीत् । गृहागतोऽह

१० पश्चात् श्रीविवेकानन्द-स्वामिन एव ' ये गोपी-कृष्ण-सबन्ध-निमित्त भारत निन्दन्ति, न तै भक्तिमार्गस्य रहस्यम् अवगत न वा कृष्णावतारस्य ' इति वक्तु प्रवृत्ता ।

सर्वं ब्रह्ममयम् अपश्यम् । भोजनाय उपविष्टोऽहं अन्नपात्राणि, तत्रस्थम् अन्नम्, तस्य परिवेषकम्, भोक्तारं च स्वयं माम्, सर्वं ब्रह्मैव अपश्यम् । कदाचित् द्वित्रान् ग्रासान् भुक्त्वा उपारमम्, कदाचित् तु अविदितपरिमाणम् अभुञ्जि । यथा कश्चित् मद्भिन्न एव भुञ्जान आसीत् । तत् दृष्ट्वा मम माता अबिभेत् । मार्गेण गच्छन् अहं धावमानानि वाहनानि अपश्यम्; किं तु समीपागतानि अपि तानि परिहर्तुं न मनसि इच्छा उदेत् । तानि मया सह एकाकारमानि इत्यपश्यम् । . . . अस्याम् अवस्थायां किंचिदिव उपशान्तायां जगत् स्वप्नवत् प्रतिभातुं प्रारभत । कॉर्नवॉलिस्-चतुष्केण गच्छन्नहं तत्रस्थायाः वृतेः लोहशलाकाः सत्याः वा स्वप्नभूता वा इति निश्चेतुं ताः शिरसा आहन्मि स्म ।' इयमपि अवस्था कानिचित् दिनानि अतिष्ठित् । "

इमं वृत्तान्तं निवेद्य नरेन्द्रो वक्ति, 'यदा अहं प्रकृतिस्थः अभवम्, तदा मया ज्ञातं यत् मया अद्वैतभाव. आस्वादित आसीत् । ततश्च शास्त्रवचनं सत्यमेव इति सहसा मम प्रत्यभात् । न तत प्रभृति मया अद्वैतसिद्धान्ता. प्रत्याख्याताः ।'

रामकृष्णाना मार्गदर्शनानुसारेण तेन ध्यानमपि आरब्धम् । दक्षिणेश्वरे पञ्चवटया स ध्यानम् आचरति स्म । गृहेऽपि रात्रौ सर्वेषु सुप्तेषु स ध्यानम् आतिष्ठत् । शनैः शनैः अभ्यासेन तस्य ऐकाग्र्यम् अवर्धत । स तेन कामपि मन.शान्तिम् अन्वभवत् । अनेकदा ध्यानोत्तरम् अनिच्छयैव स आसनत्यागम् अकरोत् । तेन दृष्टाः स्वप्नाः अपि असामान्याः आसन्, अनुभूता च निद्रापि न सामान्यैव आसीत् । ध्यानकाले अनुभूतानां दर्शनाना कारणात् आहितबलो भूत्वा तस्य विश्वास. वर्धिष्णुर् अभवत् । 'अन्यो देहः, अन्यश्च अहम्' इति आत्मन देहात् पृथक्त्वमपि सः अनुभवितुं प्रारभत ।

### रामकृष्णानां पद्धतिः

एवं श्रीरामकृष्णसदृशस्य तत्त्वज्ञस्य शिक्षया नरेन्द्रस्य आध्यात्मिकोऽभ्यासः अग्रत.सरः आसीत् । रामकृष्णानाम् अध्यापनपद्धतिरेव अनन्यादृशी आसीत् । न तत्र व्यासपीठीयवक्तृत्वस्य आडम्बर आसीत् । तेषां स्वैरकथाः शास्त्राणि अभवन् । सहजसुबोधया शैल्या, असंख्येयैश्च

दृष्टान्तै ते प्रतिपाद्य विषय सुगमम् अकुर्वन्। 'इदमेव सत्यम्' इति तेषाम् आग्रहो नासीत्। 'इदमपि सत्यम्, तदपि सत्यम्' इति तेषा अधिकारानुसारेण समन्वयव्यवस्था आसीत्। 'अनन्तविभव परमात्मा। क स् तस्य ऐश्वर्यं इयत्तया जानीयात्? मा एकाङ्गी भू। मा आग्रहैक-शरणो भू। परमात्मान स्वरूपदर्शनार्थं सतत प्रार्थयस्व। यत्किमपि च स्वरूप स दर्शयेत्, तेन सतुष्य' इति ते नरेन्द्रम् उपदिशन्ति स्म। राम-कृष्णाना दृष्टि सूक्ष्मा आसीत्, वाणी तु सौम्या। शिष्येषु दृष्टाना दोषा-णाम् अपनयनार्थं ते सौम्यै शब्दै उपदिशन्ति स्म। रामकृष्णाना प्रेम किमपि अपूर्वम् आसीत्। पञ्च वर्षाणि यावत् तत् नरेन्द्रेण अनुभूतम्। प्रारम्भिके कियत्यपि काले वुद्धिवादिना नरेन्द्रेण रामकृष्णाना गुरुतया कात्स्न्र्येन स्वीकार न कृत। तस्याम् अवस्थायामपि नरेन्द्रो रामकृष्णान् यत् बहु अमन्यत, तत् तेषा दिव्यप्रेमनिमित्तमेव। उभाभ्यामपि गुरु-शिष्याभ्याम् अन्योन्यौ परीक्ष्य स्वीकृतौ[11]। नरेन्द्र रामकृष्णेषु वैराग्यम्,

---

११ काञ्चनस्य स्पर्शोऽपि न मे सह्य इति रामकृष्णा वदन्ति स्म। इद परीक्षितुकामेन नरेन्द्रेण तेषु अनुपस्थितेषु तेषा शय्यायाम् एक रूप्यकनाणक गूढ स्थापितम्। पश्चात् प्रतिनिवृत्ता राम-कृष्णा शयनीये उपाविशन्। उपविष्ट-मात्रास्तु ते सहसा विद्युत्-स्पृष्टा इव प्रतिसहृत्य अपासरन्। नरेन्द्र नि शब्दम् अवलोकयन् आसीत्। तत केनचित् शय्याया अन्वेषणे कृते नाणक लब्धम्। रामकृष्णै अवगतम् यत् नरेन्द्रेण एव परीक्षा कृता।–रामकृष्णै-रपि अन्यशिष्या इव नरेन्द्रोऽपि शरीरत मनस्तश्च परीक्षित। न केवल विशाले इत्येव नरेन्द्रलोचने तेभ्य अरोचताम्। 'स कथयन यत् न त्व शुष्कज्ञानिमात्र। त्वयि गभीरेण ज्ञानेन सह एकसश्रयाम् आर्द्रां भक्तिमपि ते द्योतयन।' इति ते नरेन्द्रम् अवदन्। नरेन्द्रस्य निष्ठा जिज्ञासुभि रामकृष्णै एकदा तेन सह सभाषण परित्यक्तम्। आगत्य प्रणाम कृत्वा समीपोपविष्टम् नरेन्द्रम् अनादृत्य ते अन्यै सह सभाषणपरा अभवन्। इत्थ कतिपयवारम् अभवत्। नरेन्द्रस्य तु वर्तनं यथापूर्वम् आसीत्। एवम् एकमासे व्यतीते रामकृष्णा नरेन्द्रम् अब्रुवन्, 'इद पश्य अह त्वया सह शब्दमपि न भाषे, कथ नाम त्वम् इदानीम् अत्र

शुचिताम्, ईश्वरभक्तिम्, अनन्यसाधारणं च आत्मविश्वासम् अपश्यत्; रामकृष्णाश्च नरेन्द्रे उत्कटां तत्त्वजिज्ञासाम्, पौरुषम्, स्वावलम्बनम्, निर्भयत्वम्, सत्यनिष्ठां च अपश्यन्। उभयो: संगमात् एक: नवीन एव युगधर्म: उदेष्यन् आसीत्।

एवं नरेन्द्रस्य उभयमपि अध्ययनम् अग्रत:सरम् आसीत्—एकत: महाविद्यालयीनम्, अपरतश्च दक्षिणेश्वरीयम्। तस्य संगीतसाधनाऽपि अखण्डिता प्रावर्तत। अन्तरान्तरा तस्य विवाहविषये चर्चा भवति स्म। तदा तदा च केनापि अकल्पितेन कारणेन विवाह: विघ्नितोऽभवत्। एवं काले गच्छति सहसैव एका घटना समपद्यत, या नरेन्द्रस्य दैनंदिन-जीवने क्रान्तिकरी अभवत्। सा नाम तस्य पितु: आकस्मिको मृत्यु:।

* * *

(३९ पृष्ठत:)
आगच्छसि?' 'किमहं युष्माकं शब्दश्रवणार्थमेव आगच्छामि?' नरेन्द्र: प्रत्यवोचत्, 'अहम् आगच्छामि, यत: अहं युष्मासु स्निह्यामि, युष्मांश्च यतो द्रष्टुम् इच्छामि'। एवमुक्ते रामकृष्णै: वस्तुस्थितिं निवेद्य निष्ठागाढतार्थं नरेन्द्रस्य प्रशंसा कृता।

## ६. 'अन्नचिन्ता चमत्कारा'

दत्ताना कुलपरपराम् अनुसृत्य नरेन्द्रेणापि विधिज्ञेन भवितव्यम् इति तस्य पितु – विश्वनाथबाबूनाम् – इच्छा आसीत्। तं विधे साक्षात् परिचयार्थं नरेन्द्र निमाईचरण बसु इत्याख्यस्य विधिज्ञस्य सहायक कृत आसीत्। नरेन्द्रस्य अनिच्छतोऽपि, तस्य विवाह कलिकातास्थस्य कस्यचित् धनिकस्य कन्यया सह तं सकल्पित आसीत्। किं तु ईश्वरेच्छा अन्यैव आसीत्। सकल्पितस्य विवाहस्य सपादनात् पूर्वमेव विश्वनाथबाबूना हृदयविकारवशात् देहान्त अभवत्[1] (१८८४)। तदानी नरेन्द्र बी ए परीक्षायाम् उपविष्ट आसीत्। निर्णयस्य प्रकटनार्थम् अवकाश आसीत्। अस्याम् अवस्थाया मनोविनोदनार्थं नरेन्द्र वराहनगरस्थस्य कस्यचित् मित्रस्य गृह गत आसीत्। खादतमोदना प्रवर्धमाना आसीत्।[2]सहसैव केनचित् आगत्य नरेन्द्राय तस्य पितु आकस्मिक निधन निवेदितम्। नरेन्द्र गृह न्यवर्तत। तस्य माता, द्व ज्येष्ठे भगिन्यौ, कनिष्ठौ च भ्रातरौ रुदन्तौ आस्ताम्। दु खाहतेन नरेन्द्रेण यथाकथचित् तेषा सान्त्वन कृतम्, पितुश्च और्ध्वदेहिकम् अनुष्ठितम्।

**खादतमोदता समाप्ता**

अनेन पितुर् निधनेन तस्मिन् दिने नरेन्द्रस्य खादतमोदता या अकस्मात् विराम नीता, सोऽयं न तात्कालिकोऽभवत् विराम। क्वचित्

१. इय घटना १८८४ ख्रिस्ताब्दस्य प्रारम्भिके काले अभवत् इति सामान्येन विवेकानन्द-चरितकारा लिखन्ति। श्रीरामकृष्ण-वचनामृते (२५७) विश्वनाथबाबूना मृत्यौ, नरेन्द्रेण च आपन्नाया कष्टाया दशाया प्रथमो निर्देश २-३-८४ दिनीये वृत्तान्ते उपलभ्यते। तदनुसारेण १८८४ ख्रिस्ताब्दस्य फेब्रुअरी मासे विश्वनाथबाबूना देहान्तोऽभवत् इति अनुमातु शक्यम्।

बाल्यकालं यावत् तस्य जीवनादेव सादरमोदता अपहृतेव अभवत्। नवोत्थया अन्नचिन्तया तस्य स्वाभाविकः प्रमोदः अपहृतः। नरेन्द्रस्य कुटुम्बे तस्य पिता एकमात्रः धनोपार्जकः आसीत्। तस्य जीवनपद्धतिः व्ययशीला आसीत्, येन सञ्चयः असम्भव आसीत्। अनन्यः आश्रितजनः पोषणीयः आसीत्। निःस्वनाथबान्धवेषु मृतमात्रेषु उत्तमर्णानां पौनःपुन्येन गृहे आगमनं प्रारब्धम्। अस्याम् अवस्थायां बान्धवा अपि क्षते क्षारमिव क्षेप्तुं प्रारभन्त। तेषां साहाय्यं तावत् दूरापास्तमेव, ते नरेन्द्रस्य गृहविभजनार्थं पैतृकस्य भागस्य च प्राप्त्यर्थं न्यायालये प्रार्थनापत्रं प्रदत्तम्[१]।

**क्रूरसत्यस्य प्रथमः परिचयः**

जगतः क्रूरया वास्तवतया सह नरेन्द्रस्य इदं प्रथमः परिचयः अभवत्। अशौचे असमाप्ते एव जीविकार्थं द्वाराद् द्वारं भ्रमणम् आवश्यकम् अभवत्। सेवार्थं प्रार्थनापत्रं वस्त्रकोषे[२] निधाय स प्रतिदिनं कार्यालयात् कार्यालयम् अगच्छत्। यत्र यत्र तु स अगच्छत्, तत्र तत्र 'न'-कार एव तस्य स्वागतीभूतः। अनेकदा विनैव पादत्राणं भ्रमितव्यम् अभवत्। अभुक्तः, अर्धभुक्तो वा एव ग्रामं ग्रामं स भ्रमति स्म। अस्मिन् काले जातेन प्रथमेन आदर्शेन नरेन्द्रस्य एवं निश्चितः मतिः अभवत् यत् अस्मिन् जगति निःस्वार्था करुणा अतीव विरला अस्ति। नास्ति च तत्र दीनदुर्बलानां कृते स्थितिः स्थानम्। संसारः जगत् नाम कश्चित् पिशाचस्यैव कृतिः स्यात् इत्यपि कदाचित् स अमंस्त[३]। एतादृशा स्वार्थैक-

---

२ एतदनन्तरम् एकदा (३-८-८४) रामकृष्णः अवदत्, यत् तस्य (माता) अन्नाभावस्य परिणामभूता इव कष्टम् अनुभवति। (श्रीरामकृष्ण-वचनामृत, २ २९६)

३ जेब, खिसा, Pocket

४ "But everywhere the door was slammed in my face. This first contact with the reality of life convinced me that unselfish sympathy was a rarity in the world—there was no place in it for the weak, the poor and the destitute . . the world sometimes seemed to me to be the handiwork of the devil." (Vivekananda)

लक्षणाया जगत्-पृष्ठभूमौ नरेन्द्रस्य चित्तौदार्यं स्पष्टतर भवति। अनेकदा तस्मिन् मित्र-दर्शनार्थं गते सुखसवादोत्तरम् आतिथ्यरूपेण मिष्टान्नम् आनीयते स्म। एषु दिनेषु प्राय सर्वदैव अर्धभुक्तस्य नरेन्द्रस्य जठरे बुभुक्षाग्नि स्वभावत एव सततप्रदीप्त आसीत्। किं तु मिष्टान्न-दर्शनस्य समकालमेव अर्धभुक्त गृहजनोऽपि तस्य मनश्चक्षुष पुरत आयाति स्म। 'गृहजने अभुक्ते सति को वा मम अधिकार इद मिष्टान्न भोक्तुम्?' इति च चिन्तयित्वा, किमपि स्वयं कार्यं व्याजीकृत्य, क्षमा-पयित्वा च, तत् स्थान विहाय स अन्यत्र गच्छति स्म। गृहागतस्तु अन्ये किंचिदिव अधिक भोजनाश लभन्ताम् इति बुद्ध्या 'मया अद्य मित्रगृह प्रभूत भुक्तमस्ति, अधिक किमपि भोक्तुम् अधुना अशक्यम्' इत्युक्त्वा स भोजन परिहरति स्म वा, अत्यल्प वा खादति स्म। – तस्य केचन मित्रा अनुचितं उपायं धनार्जनं कुर्वन्ति स्म। तै नरेन्द्रोऽपि तथा कर्तुम् उपदिष्ट। एकया एकाकिन्या, धनिकया, तद्रूपसपदा च आकृष्टया स्त्रिया स्वसहवास उपायत्वेन ससूचित। नरेन्द्रेण तु कठोरनिर्धारवता एतादृश्य सूचना पादप्रहारेण दूरापसारिता।

**मानमहताम् अग्रेसर, शिष्य, गुणग्रीतश्च गुरु**

जीविकाया अन्वेषणमग्न न्यायालयीने च कार्ये व्यग्रो नरेन्द्र न वार वार रामकृष्णान् उपगन्तुम् अशक्नोत्। तस्य नवागतेन दारिद्र्यण व्यथित-चित्त रामकृष्णे नरेन्द्रस्य कृते वृत्तिगवेषणार्थम् ईशानप्रभृता भक्ता उक्ता[५]। एकदा (११–३–८५) 'अधुना नरेन्द्रनाथ न अत्र (दक्षिणे-श्वरे) मुहुर्मुहु आगच्छति' इति केनचित् भक्तेन उक्ते रामकृष्णा अवोचन्, "वर्तते एव आभाणक – 'अन्नचिन्ता चमत्कारा कालिदास हॉय बुद्धिहारा',' (अन्नचिन्ता नाम अतीव आश्चर्यम्। सा कालिदास-स्यापि बुद्धिम् अपहरति)। तत्पूर्वम् एकदा (२५–६–८४) चिन्ताग्रस्तन नरेन्द्रेण श्री ईशानाना गृहे गीत गान न रामकृष्णाना रुच्यं आसीत्। गान समाप्तौ ते नरेन्द्रम् अवोचन्, 'त्वम् इदानी वृत्तिचिन्तया आक्षिप्तमना

५ श्रीरामकृष्ण-वचनामृत, २ २०४
६ श्रीरामकृष्ण-वचनामृत, ३ ८३

असि । तेन तव गीतम् अलवणम् इव अभात्'। ' नरेन्द्र एव दारिद्र्य-पीडितोऽपि 'मानमहताम् अग्रेसर' आसीत्।[७] स कदापि स्वीय दारिद्र्य प्रादर्शयन्, न वा केनापि कृत तस्य निर्देशम् असहत । एकदा दक्षिणेश्वरे नरेन्द्र उपस्थित आसीत् । तदा तस्य दु खन व्याकुला रामकृष्णा उपस्थितम् अन्यतम धनिक भक्तम् अवोचन्, ' नरेन्द्रस्य पितु मरणकारणात् तस्य गृहजन दारिद्र्येण क्षुत्क्षामकण्ठ सजातोऽस्ति । अत युक्त तस्य सुहृद्भि तस्य साहाय्यम् आचरितुम् । ' पश्चात् तस्मिन् भक्ते अपयाते रुष्टेन नरेन्द्रेण एतत्कथनार्थं रामकृष्णसनिधौ स्वीया असमति प्रकटीकृता। तत श्रुत्वा तस्य मानभङ्गकरणेन दारिद्र्यनिर्देशेन कृतापराधम् इव आत्मान मन्यमाना , अश्रुमुखाश्च रामकृष्णा अवोचन्, ' वत्स नरेन्द्र, किं न जानासि त्वम्, यत् नास्ति मम तव कृते किमपि अकार्यं नाम ? ननु तव अर्थे गृहात् गृह भिक्षामपि अटेयम् । ' रामकृष्णानाम् एतेन निरतिशयेन प्रेम्णा नरेन्द्र अवाक् इव अभवत् । अस्मिन् विषये उत्तरायुषि नरेन्द्र अवदत्, ' रामकृष्णै स्वीयेन प्रेम्णा अह दासीकृत । ' किं तु न केवल गुरुणा शिष्य प्रेम्णा दासीकृत आसीत्, गुरुरपि आत्मान शिष्येण गुणक्रीतम् इव अमन्यत, अतश्च तदर्थं भिक्षाटनस्यापि सिद्धता तेन प्रदर्शिता[८] ।

ईश्वरविषयकस्य सशयस्य प्रादुर्भाव,

एषु दिवसेषु गृहजनेन अनुभूयमानाया दुर्दशाया कारणात् नरेन्द्र-मनसि ईश्वरविषय सशयस्य प्रादुर्भाव अभवत् । यदि ईश्वर स्यात्, यदि च स दयालु स्यात्, तर्हि कुतो मया मम च कुटुम्बीयै जनै एतावत् दु खम् अनुभूयते, कुतो वा स मम प्रार्थना न शृणोति इत्येतत् ज्ञातु स

७ श्रीरामकृष्ण–वचनामृत, २ २२२

८ तुल्यता भगवत श्रीकृष्णस्य अर्जुनविषयिणी युधिष्ठिर प्रति उक्ति –

तव भ्राता मम सखा सबन्धी शिष्य एव च ।
मासान्युत्कृत्य वै दद्यामर्जुनार्थे महीपते ॥

(महाभारतम्, ६ १०३ ३३)

असमर्थ आसीत्। अथैकदा 'मैदान' सञ्ज्ञके स्थाने स मित्रै सह छायाम् आश्रित्य उपविष्ट आसीत्। मनोविनोदनार्थं केनचित् गानम् आरब्धम्। ईश्वरस्य परमकारुणिकत्व वर्णयत् तत् गान – कदाचित् तत् नरेन्द्रस्य सान्त्वनार्थमेव उद्दिष्ट स्यात् – नरेन्द्रस्य कर्णयो तप्तरसमिव प्राविशत्, आत्मान च धारयितुम् असमर्थ स उदैरयत्, 'तिष्ठ! अलम् एतेन! अक्षमोऽहम् इद श्रोतुम्। आसीत् कश्चित् काल, यदा मयापि एवम् अमन्यत। सम्प्रति तु अनुभूतजगत्संघर्षस्य मम सा विडम्बनेव भाति।' किं तु एवम् उदितसशयस्यापि तस्य ईशश्रद्धा न सर्वथा नष्टा आसीत्। प्रतिदिन वृत्तिगवेषणार्थं निर्गमनवेलायाम् ईश्वरस्य नामग्रहणपूर्वक स प्रातिष्ठत। एकदा तस्य मात्रा इद नामकीर्तन श्रुतम्। श्रुतमात्रे एव दारिद्र्यदु खेन आत्मन अप्रभु सा आक्रोशत्, 'धिङ्, मूर्ख! आ जन्मन. त्वया तारस्वरेण ईश्वर प्रार्थ्यते, किं तस्य फल त्वया लब्धम्?' अनेन मातुर्वचनेन नरेन्द्रस्य ईश्वरविषयक सशय दृढीभूत। स्वीय च उत्कटैक-कोटिक स्वभावम् अनुसृत्य स प्रकाशम् ईश्वरस्य सत्ता तस्य च दयामयत्वम् अन्तरेण सशय प्रतिपादयितुम्, ईश्वरप्रार्थनायाश्च वैयर्थ्यं प्रचारयितु प्रारभत। भयात् लोभाद्वा कस्यापि अङ्गीकार तस्य स्वभाव-प्रतिषिद्ध आसीत्। क्रमेण नरेन्द्र नास्तिक्यबुद्धिपिशाचिकया गृहीत इति वार्ता रामकृष्णान् प्रति प्राप्नोत्। तस्य नि सकोचेन मतप्रकटनेन जनिता तद्गता काचित् व्यसनपात-किंवदन्ती अपि रामकृष्णान् प्रास्यन्दत। रामकृष्णै अत्र विषये न किमपि मत प्रकटीकृतम्। तेषा केचन शिष्यास्तु एतद्वृत्तान्तविषयक सत्य स्वय परीक्षितु नरेन्द्रम् उपागता। तदानीं सभाषणप्रसङ्गेन तै नरेन्द्रगतेषु प्रवादेषु ध्वनितविश्वासकारणात् नरेन्द्र अधिकतर-कटुमानस अभवत्। तेन उदीरितै आततायिशब्दै दृढीभूत-सशया, तद्गतेषु च प्रवादेषु सर्वथा उपजातविश्वासा ते न्यवर्तन्त, सर्वं च वृत्तान्त गुरवे न्यवेदयन्। केचन दु खिता अभवन्। यदा तु भवनाथो नाम रामकृष्णानाम् अन्यतम प्रियशिष्य अश्रुमुखो, भूत्वा 'हा हन्त! वय नाम तथाभूतो नरेन्द्र इत्थम् अध पतित' इति सदु खम् अवदत्, तदा रामकृष्णा सक्रोधम् अवोचन्, 'धिङ्, मूर्ख! नेद सत्यम् इति अम्बया अहम् उक्तोऽस्मि। यदि पुन कदाचित् एतादृश भाषेथा, नाह त्वयि दृष्टिपातमपि कुर्याम्।' शिष्येषु विश्वस्य रामकृष्णा यदि मा परि-

त्यक्ष्यन्ति, तर्हि एवम् असमीक्ष्यकारिभिस् तैः ममापि न किमपि प्रयोजनम् अस्ति इति नरेन्द्रेण चिन्तितम् आसीत्। पश्चात्तु रामकृष्णे प्रकटितं स्वविषयकं विश्वासं श्रुत्वा स कथं लज्जया कृतज्ञतया च भाराभिभूतः स्यात् तद् उत्प्रेक्षितुं शक्यम्।

सहसा संशयनिरासः

इत्थम् एकतः परिस्थितिसमुत्पन्नया नास्तिक्यबुद्ध्या, अपरतश्च बाल्यात् आरभ्य—विशेषतश्च रामकृष्णानां सहवासे—अनुभूतैः दर्शनैः दृढीकृतया आस्तिक्यबुद्ध्या इति उभयतः आकृष्यमाणो नरेन्द्रः नित्य-व्यवहारपरः वृत्तिगवेषणपरश्च आसीत्। अस्याम् अवस्थायाम् एकस्मिन् दिने दयालोः परमेश्वरस्य सृष्टौ यदिदम् अपारं दुःखं दृश्यते तस्य स्पष्टी-करणं सहसा तस्य बुद्धौ स्फुरितम्, सर्वे च तस्य संशयाः निरास्यन्त। सोऽयं वृत्तान्तः पश्चात् स्वयं नरेन्द्रेण इत्थं कथितोऽस्ति—

"आसीत् स अचिरप्रवृत्तः वर्षाकालः। एकदा वृत्ति-गवेषणाय निखिलं दिनं भ्रान्त्वा सायं गृहं निवर्तितुम् अहं प्रातिष्ठे। तस्मिन् समग्रे दिने अहम् अभुक्तः आसम्, ततः उपरि च पर्जन्य-वृष्ट्या अन्तर्बाह्यम् आर्द्रार्द्रः अभवम्। श्रान्तगात्रः खिन्नमनाश्च अहं पदात्पदमपि गन्तुम् अशक्तः सन् कस्यचित् गृहस्य अट्टे अवासदम्। न जाने किमहं सचेतः आसम्, उत अचेतः। तैस्तैः अनेकैः विचारैः आक्रान्तोऽहं तान् अपनोदितुम्, मनश्च एकाग्रीकर्तुं सर्वथा असमर्थः आसम्। सहसैव कयापि दैव्या शक्त्या मम आत्मोपरि वर्तमानानि आवरणानि एकैकशः अपनीतानि इव अन्वभवम्। कथं नाम पारमेश्वरो न्यायः पारमेश्वरी च दया सह वसेताम्, कथं च आनन्दमयस्य तस्य सृष्टौ इदं दुःखम् वर्तते इत्येतद्विषयकाः मम सर्वेऽपि संशयाः स्वयमेव कुत्रापि विलीनाः अभवन्। येनापि गम्भीरेण अन्तःपरीक्षणेन तस्य सर्वोऽपि अन्वयार्थः मम बुद्धौ आरोहत्, मम समाधानं च जातम्। यदा अहम् उत्थाय गृहं प्रस्थितः, तदा शरीरे श्रमस्य लेशोऽपि अवशिष्टः नासीत्। कस्या-अपि अद्भुतायाः शान्तेः, बलस्य च आधानहेतोः मनोऽपि नवीकृतम्

आसीत् । तदानी रात्रिः अतीतप्राया आसीत्[९] । "

अनेन प्रसङ्गेन न मे जन्मः सामान्यपुरुषवत् द्रव्यार्जनेन कुटुम्ब-पोषणार्थः, नतराम् इन्द्रियभोगार्थः इति नरेन्द्रस्य दृढा मतिः अभवत् । यथा पितामहेन – दुर्गाचरणेन – संसारं परित्यज्य संन्यासः गृहीत आसीत् तथा कर्तव्यम् इति इच्छा तस्य मनसि उदेत् । स गूढं तत्सिद्धतापरोऽपि अभवत् । यदृच्छया तस्मिन् काले एकदा रामकृष्णाः कलिकाताम् आगताः आसन् । तान् आपृच्छ्यैव परिव्रजितव्यम् इति विचार्य नरेन्द्रः तत्र गतः । रामकृष्णैः आगृहीतश्च सः तैः सह दक्षिणेश्वरम् अगच्छत् । तत्र अन्येऽपि भक्ताः आसन् । किंचित्कालोत्तरं रामकृष्णाः भावाविष्टाः अभवन् । तदवस्थाश्च ते सहसा नरेन्द्रम् उपगताः, तं च अतीव कोमलेन भावेन स्पृष्ट्वा अश्रुपूर्णनयनास्ते

कथा बलिते डराई, ना बलिते ओ डराई
आमार मने संदेह हय बुझि तोमाय हाराई हाराई[१०] ॥

इत्यादिकं गीतं गातु प्रवृत्ताः । नरेन्द्रेण ज्ञातम् : मम निर्णयः रामकृष्णैः

---

९. 'Suddenly I felt as if by some divine power the coverings of my soul were removed one after another. All my former doubts regarding the co-existence of divine justice and mercy, and the presence of misery in the creation of a Blissful Providence, were automatically solved. By a deep introspection I found the meaning of it all and was satisfied. As I proceeded homewards I found there was no trace of fatigue in the body and the mind was refreshed with wonderful strength and peace. The night was well-nigh over.' अत्र दुःखसमस्यायाः कारणस्य स्पष्टीकरणम् अन्तर्दर्शनेन लब्धम् इत्येतावदेव नरेन्द्रः निर्दिशति । किं नाम तत् स्पष्टीकरणम् इति नु दौर्भाग्यात् साक्षात् निर्दिष्टं नास्ति ।

१०. 'वक्तुं धैर्यं नास्ति । अवक्तुमपि धैर्यं नास्ति । मा वयं त्वत्तो वञ्चिताः भूम' इत्यर्थः । अन्यासां घटनानामिव अस्या अपि

तर्कितोऽस्ति । तस्य नेत्राभ्याम् अश्रुधारा प्रवृत्ता । गुरुशिष्ययोः अनेन जनान्तिकेन 'सम्भाषणेन' उपस्थितो जनः विस्मितोऽभवत् । पश्चात् रात्रौ अन्यान् भक्तजनान् विसृज्य एकान्ते नरेन्द्रं रामकृष्णः साश्रु अवोचत्, 'जानाम्यहम्, यत् त्वम् अम्बायाः कार्यार्थम् इह आगतोऽसि । न त्वं संसारे स्थास्यसि । तथापि मयि अनुग्रहबुद्ध्या, यावदहं जीवामि त्वमपि इह तिष्ठ ।' नरेन्द्रेण तद् वाक्यम् अङ्गीकृतम् । तस्यां रात्रौ तत्रैव दक्षिणेश्वरे स्थित्वा अपरेद्युः नरेन्द्रः स्वगृहं न्यवर्तत ।

जीविकाचिन्ता पुनरपि प्रावर्तत । कस्यचित् विधिज्ञस्य कार्यालये किंचित् कार्यं कृत्वा, ग्रन्थांश्च अनूद्य जठरदरीपूरणार्थं यावत् न्यूनतमम् आवश्यकम्, तावत् धनम् नरेन्द्रः आर्जयत् । किं तु नासीत् तावता किमपि स्थैर्यम् । एवं काले गच्छति एकदा तेन एवं चिन्तितम् – रामकृष्णानां प्रार्थनां भगवान् शृणोति । अतः मम दारिद्र्यापनोदनार्थं देवीं प्रार्थयितुं ते याचनीयाः, इति । यदा तु दक्षिणेश्वरगतेन नरेन्द्रेण रामकृष्णः तथा कर्तुं प्रार्थितः, तदा ते अब्रुवन्, 'नाहम् एवं कर्तुं समर्थः । यतस्त्वं जगदम्बाम् अनमन्यसे, अत एव इत्थं क्लिश्यसे । स्वमेव गत्वा तां प्रार्थयस्व' इति । आरम्भे प्रतिनिधीभूय पुनरपि देवीं प्रार्थयितुं नरेन्द्रेण निर्बन्धं याचिता रामकृष्णाः सदयम् अवोचन्, 'वत्स ! बहुवारं नु त्वदर्थं मया अम्बा प्रार्थिता । यतस्तु त्वं तां नाङ्गीकरोषि, अतः न सा मम प्रार्थनाम् अभ्युपगच्छति । आस्तां तावत् । अद्य मङ्गलवासरः अस्ति । अद्य रात्रौ स्वयं कालीमन्दिरं गत्वा त्वं ताम् ईप्सितं याचस्व । तव इच्छापूर्तिर् भविष्यति ।'

---

(४७ पृष्ठात्)
घटनायाः दिनाङ्कः विवेकानन्द-चरिते नोपलभ्यते । वर्षस्य प्रारम्भकाले निधनमाप्ता नरेन्द्रस्य जनकनिधनघटनायाः अनन्तरं कस्मिंश्चिद् दिने एतदपि घटितम् स्यात् । श्रीरामकृष्ण-वचनामृते (२४८) तु १-३-८५ दिनाङ्कस्य वृत्तान्तवर्णनावसरे मास्टरमहाशय-गुप्तमहोदयाः रामकृष्णाः नरेन्द्रम् उद्दिश्य गीतस्य तस्य गानस्य ('कथा बलिते डराई ..') निर्देशं कुर्वन्ति । अपि तर्हि घटनोत्तरं ६-७ मासैः इयं घटना पुनरावृत्ता ?

विवेक देहि

नरेन्द्र तत्सर्वं विश्वस्य रात्रि परिपालयम् तस्थौ। रात्रौ नव-वादन-वेलाया रामकृष्णं आदिष्ट, केनापि स्वर्गीयेण मदेन मत्त इव विसष्ठुल-चरण, किमपि किमपि च उत्प्रेक्षमाण नरेन्द्र कालीमन्दिर प्रातिष्ठत। प्रविश्य च स यावत् मूर्तौ दृष्टि क्षिपति, तावत् तत्र जीवन्ती, चैतन्यमयी, सदाप्रसुत-दिव्यप्रेमा, सतत-सौन्दर्यपरिवाहिणी च देवी साक्षात् अपश्यत्। एव दृष्टमात्राया तस्याम् उच्छलद्भ्या भक्तिप्रेममहातरङ्गाभ्याम् अभिभूत, दिव्यानन्दमत्तश्च नरेन्द्र ता पुन पुन दण्डवत् प्रणम्य प्रार्थयाचक्र, 'अम्ब! देहि मे विवेकम्। देहि मे वैराग्यम्। देहि ज्ञानम्। देहि भक्तिम्*। यथा मया तव अखण्ड दर्शन स्यात, तथा अनुमन्यस्व'। अधुना विस्मृतजगत सशान्तचित्तस्य च तस्य मनसि केवल जगदम्बा व्यराजत"।

---

* पठ्यताम्

साक्षात् काली शुचिजनमन कामनाकल्पवल्ली
सा यस्याग्रे स्वयमुपगताभीष्टकामप्रपूर्त्यै।
येनापत्तिकथितमनसाऽप्यर्थितातस्वरेण
विस्मृत्यान्यन्निजसुखमहो भक्तिरेवातिशुद्धा॥
(रामकृष्णपरमहंसीयम् श्लो ८६)

११ 'About 9 o clock the Master commanded me to go to the temple As I went I was filled with a divine intoxication My feet were unsteady My heart was leaping in anticipation Reaching the temple as I cast my eyes upon the image, I actually found that the Divine Mother was living and conscious the Perennial Fountain of Divine Love and Beauty I was caught in a surging wave of devotion and love In an ecstacy of joy I prostrated myself again and again before the Mother and prayed, 'Mother, give me discrimination! Give me renunciation! Give unto me knowledge and devotion! Grant that I may

देवालयात् निवृत्त, 'अपि त्वया दारिद्र्यनिवारणार्थं जगदम्बा प्रार्थिता ? ' इति च रामकृष्णे पृष्ट नरेन्द्र निज चिकीर्षितप्रार्थनाविस्मरण विभाव्य रामकृष्णाना वचनानुसारेण पुनरपि कालीमन्दिरम् अगच्छत्। पुनरपि च स एव वृत्तान्त आवर्तत। पुनश्च तृतीयवार देवालयप्रविष्ट स लज्जातिशयेन अभिभूत अचिन्तयत्, 'यथा राजसमीपे गत्वा कश्चित् शाकमुष्टिं प्रार्थयेत, तथैव ममेमा जगदम्बाम् उपगम्य इय क्षुद्रा प्रार्थना। अहो मे मौर्ख्यम् ! ' एव चिन्तयन् पश्चात्तापदग्धो नरेन्द्र सभक्त्युन्मेष देवी प्रणम्य, 'अम्ब ! ज्ञानं भक्तिं च विहाय नान्यत् किमपि अपेक्षे ' इति च ताम् उक्त्वा रामकृष्णान् प्रति न्यवर्तत। सर्वोऽय रामकृष्णानामेव प्रभाव इति स व्यजानात्। तान् गत्वा स उवाच, 'भवत्प्रयुक्तात् मोहिनीमन्त्रादेव अहम् एव विस्मरणशील अभवम्। अत इत पर यथा मम गृहजनस्य दारिद्र्यपीडा न स्यात् तथा वर भवानेव ददातु '। रामकृष्णास्तु 'नैतादृशी आशी मम मुखात् कदापि निर्गच्छति। यत तवापि मुखात् अभीप्सिता प्रार्थना न निर्गता, अतो न सासारिक सुखोपभोग तव विधिलिखित इव इति भाति ' इत्यवोचन्। पश्चात्तु नरेन्द्रेण निबन्धप्रार्थितास्ते ' भवतु। न्यूनतोन्यून कदन्नेन स्थूलवस्त्रेण च तव कुटुम्ब न परिहास्यते ' इति आश्वासयामासु।

तस्या रात्रौ नरेन्द्रस्य मनसि देवीम् अन्तरेण कोऽपि भक्तिविशेष प्रथममेव अजायत। रामकृष्णाना सकाशात् एक देवीस्तोत्रम् अधीय विगतान्यसङ्ग स सर्वां रात्रि सदैव स्तोत्र गायन् तस्थौ। अन्येद्यु अपराह्णे दक्षिणेश्वर प्राप्त वैकुण्ठनाथ-सन्याल इत्याख्य अन्यतमो भक्त नरेन्द्र तत्र सुप्तम् अपश्यत्। पूर्वरात्रे घटिता नरेन्द्रविषयका सर्वा घटना तस्मै रामकृष्णै निवेदिता। ततश्च परमसतुष्टास्ते अवदन्, 'नरेन्द्रेण अधुना जगदम्बा अङ्गीकृता। किं नेदम् आश्चर्यम् ? ' वैकुण्ठनाथेन तथेति

(४९ पृष्ठ)

have an uninterrupted vision of Thee!' A serene peace reigned in my soul The world was forgotten Only the Divine Mother shone within my heart " (Vivekananda)

उक्तेऽपि मोदमेदुरा रामकृष्णा पुन पुन तमेव प्रश्न पृच्छन्तस् तस्थु । चतुर्वादन-वेलायाम् उत्थाय नरेन्द्र तान् आमन्त्रयितुम् उपस्थित । त दृष्ट्वा तु रामकृष्णा भावाविष्टा अभवन् । आत्मन नरेन्द्रेण सह अभेद ते शब्दे कृत्वा[१] च प्रतिपादयन्त चिर तस्थु । अन्ते अष्टवादन-वेलाया तेषु प्रकृतिम् आपन्नेषु नरेन्द्र-वैकुण्ठनाथौ तान् आमन्त्र्य कलिकाताम् उद्दिश्य प्रातिष्ठेताम् ।

महत्त्वपूर्णं प्रयाणकम्

विवेकानन्दाना जीवनाख्याने इद दारिद्र्योपाख्यान किमपि महत्त्व बिभर्ति । भारतीयसमाजे प्रसृत दारिद्र्य नरेन्द्रेण अतन प्रसङ्गेन एव साक्षात् अनुभूतम् । कथ बुभुक्षित न प्रति भाति किंचित्, कथ च क्षीणा नरा न केवल निष्करुणा निरीश्वरा अपि भवन्ति इत्येतत् तेन स्वयम् अनुभूतम् । अग्रे विवेकानन्दै दारिद्र्यापसारणस्य, दरिद्राणाम् उदरपूर्तेश्च य साग्रह पुरस्कार कृत, तस्य मूल तै पूर्वजीवन स्वयम् अनुभूतायाम् अस्या दारिद्र्यावस्थायाम् अस्ति । अनुभूत दारिद्र्य सामान्य पुरुष वैयक्तिक-संपन्नता-संपादनेन आत्मान कृतकृत्य मन्यते, सा तस्य प्रतिक्रिया अस्ति । कश्चिदेव तु विवेकानन्दसदृशो महात्मा 'आत्मवत् सर्वभूतानि' पश्यन्, स्वीय दुःख सामाजिकस्तर सक्रम्य निखिलसमाजस्य दारिद्र्यापसारण निज कर्तव्य मन्यते । 'यदि नरेन्द्र सुखसवर्धितोऽभविष्यत्, यदि तस्य दारिद्र्यानुभवो नाभविष्यत् तर्हि स कश्चिद् अन्य एव अभविष्यत् – नीतिज्ञो वा, विधिज्ञो वा, वाग्मी वा, समाजसुधारको वा' इति एकदा रामकृष्णा अब्रुवन् । तत्काल-दुःसहाऽपि इय घटना अन्ततो

१० तदानीं रामकृष्णै चिल्म्'त धूम्रपान कृत्वा स्वहस्तधृतया तयैव 'चिल्म्'त नरेन्द्र धूम्रपान कारित, पुनरपि तै तयैव स्वय धूम्रपान कृतम् । शौचाशौचविषये अतीव दक्षाणा रामकृष्णानाम् इम व्यवहार प्रेक्ष्य तेषा नरेन्द्र-विषयक अलौकिक प्रमा, उभयोश्च अलोकसाधारण सबन्धविशेष मया ज्ञात इति वैकुण्ठनाथो वर्णयति (Eastern and Western Disciples लिखित The Life of Swami Vivekananda, पृ ११६-११७) ।

गत्वा विवेकानन्द निर्मितौ उपकारिणी अभवत्। – अन्यच्च। एतावत्काल-पर्यन्त नरेन्द्रस्य मूर्तिपूजाया श्रद्धा नासीत्। कालीमन्दिरे गमननिमित्तम्, तत्र च कालीमूर्ते उपासनानिमित्त स रामकृष्णान् अनवदा उपाहसत् अपि''। उपरिनिर्दिष्टात् प्रसङ्गात् प्रभृति तु तेन मूर्तिपूजाया रहस्यम् अवगतम्। विश्रान्त तस्य मूर्तिपूजाविरोध। तेन भगवती काली–ब्रह्मण सक्रिय रूपम् – अङ्गीकृता''। दक्षिणेश्वरे प्रथमगमनात् आरभ्य या नरेन्द्रस्य विवेकानन्दे परिणतिप्रक्रिया आरब्धा तस्याम् इदम् एक महत्त्व-पूर्ण प्रयाणकम्[15] अस्ति।

* * *

---

१३ श्रीरामकृष्ण-वचनामृत १ २९१, ४१२ ४२९ इत्यादि। अस्मिन् विषय प्रथमखण्ड ५६१ पृष्ठगतानि रामकृष्णानाम् एतानि वाक्यानि पठनीयानि–

"श्रीरामकृष्णा – दृश्यता तावत् नरेन्द्र। अहो तस्य स्वभाव सौन्दयम्। आदौ तु स मम कालीमातरम् उद्दिश्य किमपि किमपि निरर्गल प्रलपति स्म। एकदा कोधाविष्टोऽह तम अब्रवम् 'धिक् दुष्ट। मा अत्र पुनरपि पद निधा।' तदानी स शनकै बहिर् निरगच्छत्, मा च प्रसादयितु प्रायतत।'

१४ एषु दिनेषु नरेन्द्र श्री अन्नदा गुहाना गृह गच्छति स्म। एकदा नरेन्द्रेण तेषा गृहे आगमनी गीता। (आगमनी नाम मातृगृहम् आगता दुर्गाम् उद्दिश्य गीयमान पारपरिक गीतम्।) एकदा (१४-९-८४) सोऽय वृत्तान्त हाजरामहोदयै रामकृष्णभ्य कथित। नरेन्द्र तत्र दक्षिणेश्वरे उपस्थित आसीत्। तत् श्रुत्वा रामकृष्णै पृष्टम् 'अयि, किं सत्यमेव त्वया आगमनी गीता?' नरेन्द्रेण 'तथा' इत्युक्त्वा पुनरपि आगमनी गीता। ता शृण्वन्त एव रामकृष्णा भावाविष्टा अभवन्। (श्रीरामकृष्ण वचनामृत २ ३५८-३५९)

१५ टप्पा, landmark

## ७. अन्तिमः अन्तेवासः

पूर्वस्मिन् प्रकरणे निवेदितात् उपाख्यानात् अनन्तर पुनरपि नरेन्द्रस्य दैनदिनजीवितक्रम यथापूर्व प्राचलत्। बी ए परीक्षोत्तर तेन प्रारब्ध विधेर् अध्ययनम् अप्रत-सरम् आसीत्। तत्तत्-काल-लब्धं तैस् तैर् उपायै स उप-जीविकाम् अकरोत्[१]। तस्य यावज्जीव ब्रह्मचर्यपालनस्य निर्धार स्थिर आसीत्। आध्यात्मिकानुभूते पात्रतासपाद-नार्थं ब्रह्मचर्यस्य आवश्यकता स रामकृष्णे सम्यक् ग्राहित आसीत्। गृहे विवाह-प्रस्तावे उपस्थिते 'किं मा मज्जयितुम् इच्छथ?' इति नरेन्द्र सक्रोधम् आक्रोशति स्म। अनेकदा निर्णीतप्रायो विवाह[२] रामकृष्णे अम्बा प्रार्थ्य विघ्नित आसीत्। 'कुशाग्रबुद्धि नरेन्द्र प्रभूत धनम् अर्जयितु समर्थ। दक्षिणेश्वरीयेण तु तेन महन्तेन मन्त्रमोहित इव नरेन्द्र व्यर्थमेव स्वीय जीवितम् अवसादयति। तेन इद मौर्ख्यं परित्यज्य धनोपार्जने प्रवर्तितव्यम्' इति तस्य मित्रा वदन्ति स्म। नरेन्द्रेण तु श्रेय प्रेयसो निर्णय प्रागेव कृत आसीत्[३]। किं च अधुना 'कामिनीकाञ्चनमेव माया' इति रामकृष्णानाम् उपदेशस्य सार तस्य मनसि दृढ कृतपद

---

१ प ईश्वरचन्द्र-विद्यासागराणा विद्यालये मासार्धमास तेन अध्या-पकत्वम् अपि अनुष्ठितम्।

२ श्रीरामकृष्ण-वचनामृत ३ ६५९ श्री विश्वनाथबाबूना मरणोत्तर मासार्धमासेन (मार्च १८८४) श्री आर मित्राणा कन्यया सह नरेन्द्रस्य विवाह समन्त्र्यमाण आसीत् (श्रीरामकृष्ण-वचनामृत २ ७६)।

३ दृश्यता तृतीय प्रकरणे 'श्रेयश्च प्रेयश्च मनुष्यमेत' इति-शीर्षक परिच्छेद (पृ १५-१६)।

आसीत्। कदन-स्थूलवस्त्रयो कृते यावदेव आवश्यक तावन्मात्र कर्म कृत्वा समयें लब्धमान सति नरेन्द्र दक्षिणेश्वरम् आधावति स्म।

दक्षिणेश्वरस्था कालीवाटिका साधनाया अनुष्ठानार्थम् उचित स्थानम् आसीत। कोलाहल-बहुलाया कलिकाताया बहिर्भूतम इद स्थान समीपवाहिन्या पापतापहारिण्या पुण्यसलिलया भगवत्या भागीरथ्या पवित्रितम् अस्ति। ततोऽपि च तत् पवित्रितम् आसीत् तीर्थानामपि तीर्थभूताना रामकृष्णाना पावनेन निवासेन। पञ्चवटया रामकृष्णाना साधनया प्राप्तमाहात्म्यानि, अत एव साधकाना साधनानुकूलानि 'बिल्वतल' प्रभृतीनि स्थानानि आसन्। कण्व-जाबालि-प्रभृतीनाम् आश्रमेभ्य न अहीयत अय रामकृष्णानाम् 'आश्रम'। तत्र केवल रूक्षा शास्त्रचर्चा नासीत्। हास्यविनोद नासीत् निषिद्ध। वृक्षाणाम् आरोहावरोहौ आस्ताम्। दोलाक्रीडा आसीत्। धावतपलायता आसीत्। वनभोजनम् आसीत्। रामकृष्णा अपि अत्र समिलन्ति स्म। ते गन्धर्वदुर्लभेन कण्ठेन स्वय गायन्ति स्म, गापयन्ति स्म च। हसन्ति च, हासयन्ति च। चित्तचमत्कारिण्य आख्यायिका तेषा तत्त्व-कथासु रोचकता सपादयन्ति स्म।

**परिप्रश्नाः**

आदित प्रभृत्येव नरेन्द्रस्य दिव्यो भविष्यकाल रामकृष्णाना मनश्चक्षुष पुरत आसीत्। अयमेव मम सदेशहर, अस्य मुखेनैव मम सदेश जगति प्रसरिष्यति इति तै ज्ञातम आसीत्। अत तस्य व्यक्तित्वनिर्मितौ रामकृष्णा सदैव दक्षा आसन्। तस्य विकासार्थं तै पूर्णावसर प्रदत्त। अन्ये शिष्यास तावत् रामकृष्णाना मुखात नि सृतम् एकैक शब्द वेदवाक्यवत् अविशङ्कया अङ्गीकुर्वन्ति स्म। नरेन्द्रस्तु गुरुवाक्य मनसि अतुलयत्, पर्यालोचयत, आक्षिपच्च। स एव प्रष्टुम् अधृष्णोत्। प्रमाण विना न किमपि स्वीकर्तुं स ऐच्छत्। अनेकदा रामकृष्णाना समीपे शिष्याणा प्रचण्डानि वादकाण्डानि अभवन। नरेन्द्रस्य निर्भया नि सकोचा च प्रश्नशीलता तेषु स्पष्टाऽभवत्। ९-५-८५ दिनीये वृत्तान्ते' 'ईश्वर नररूपेण अवतरति इत्यत्र किं प्रमाणम्? प्रमाणा-

४ श्रीरामकृष्ण-वचनामृत ३ १८३-१८४

भावे च तत्र कथं विश्वासः कार्यः ''देवानाम् अमरत्वे किं प्रमाणम् ?' 'शास्त्राण्यपि विप्रतिपेधवन्ति दृश्यन्ते। कथं तत्र विश्वासः कर्तव्यः?' 'भवतु नाम गीता स्वयं कृष्णेन कथिता। किं तावता ?' इति प्रश्नमनुप्रश्नं पृच्छन् नरेन्द्रोऽवलोक्यते। अन्यत्र वादप्रतिकूलैरपि रामकृष्णैः नरेन्द्रस्य ईश्वरादिष्टं भावि धर्मप्रसारकार्यं मनसा अवदधद्भिः तस्य शङ्काभ्यः प्रश्नेभ्यश्च मुक्तावसरः प्रदत्तः, तस्य वादकौशलं च प्रशंसितम्।

'इह इङ्गितेन, चेष्टितेन, निमिषितेन, महता वा सूत्रप्रबन्धेन आचार्याणाम् अभिप्रायो गम्यते,' इति महाभाष्यकारः पतञ्जलिः आह। रामकृष्णानाम् अध्यापनपद्धतिविषयेऽपि इयम् उक्तिः चरितार्था भवति। सत्यपि द्विसहस्र-पृष्ठमिते त्रिखण्डात्मके श्रीरामकृष्णवचनामृते मुद्रिते (तस्य च कतिपयगुणे अमुद्रिते), रामकृष्णाः साक्षाच्छब्दैः यावत् उपादिशन्, तस्य कतिपयगुणमपि प्रकारान्तरेण उपादिशन्। तेषां कटाक्ष, तेषां मुखमण्डले वर्तमानो भावः, तैः गीतं गानम्, तेषां मौनमपि अर्थपूर्णम् आसीत्। ते व्याहारात् अपि आचारेण अधिकतरम् अध्यापयन्। अनकदा वादरता शिष्याः वादसमाप्तौ प्रकृतिम् आगताः गुरुदेवं समाधिमग्नम् अपश्यन्। अथ रामकृष्णानाम् अशब्दो वादनिषेधः इति कालेन शिष्याः अजानन्। एकदा अवतारविषयके उग्रविवादे उपरते (यत्र नरेन्द्रः विजयी अभवत्) रामकृष्णाः भक्तजनम् उपगम्य गीतं गातुं प्रवृत्ताः। गीतस्य आशयः आसीत् – भगवान् न वेदेषु उपलभ्यः, न दर्शनेषु, न तन्त्रेषु। स केवलं प्रेम्णः मधुररसस्य अभिलाषुकः, इति। शिष्यैः अवगतम्।

**गभीरम् अवगाहस्व**

रामकृष्णाः वदन्ति स्म – भोजनोपविष्टानां जनानां कोलाहलः कियत्कालं प्रचलति ? यावत् न भोजनं प्रारब्धम्'। भ्रमरस्य गुञ्जारवः कियत्कालं प्रचलति ? यावत् न मधुपानम् आरब्धम्'। तद्वत् वादस्य 'कुरुकुरा' अपि तावदेव भवति, यावत् ईशदर्शनं नास्ति। तस्मिन् जाते सर्वं शान्तम्। एतादृशैः दृष्टान्तैः रामकृष्णाः अपरोक्षानुभूतेः माहात्म्यम्,

५. श्रीरामकृष्ण-वचनामृत १ १५२
६. श्रीरामकृष्ण वचनामृत १ ६२, ७७

तदुत्तरकालिक च विवादासहत्व प्रतिपादयन्ति स्म । भक्तिशून्याना शास्त्रैकपाण्डित्याना कामिनीकाञ्चनसक्ताना पण्डिताना विषये तेषा मनसि अणुमात्रोऽपि आदरः नासीत् । 'गृध्रा अपि प्रोच्चै उड्डयन्ते । दृष्टिस्तु अधो भूमिपतितेषु पूतिगन्धिषु शवषु' इति ते उदाहरन्ति स्म[७] । अत तै केवल शास्त्रपाण्डित्य न प्रोत्साहितम् । नरेन्द्रस्य तु ज्ञानमार्ग इति जानद्भिस् तै भक्ति-ध्यानाभ्या सहैव अद्वैत-शास्त्राभ्यासमपि कर्तुं स उपदिष्ट । ध्यानाभ्यासकाले तेन अनुभूताना विघ्नाना निरसनार्थं तै सप्रात्यक्षिक मार्गदर्शन कृतम्[८] । नरेन्द्र प्रकृत्या विगणय्यकारी[९] आसीत्[१०] । अत तस्य स्वभाव आदौ तावत् त ध्याने आत्मान सर्वथा मज्जयितु नाभ्यजानात् । ध्यानातिरेकेण काचित् मनोविकृति सजायेत इति स आशङ्कत । रामकृष्णै तस्य भीतिम् अपसारयितु स एकदा एवम् उक्त, 'नरेन्द्र, यदि एक मधुपूर्ण पात्र वर्तेत, यदि च त्व मक्षिका स्या, तर्हि क्व उपविष्टस् त्व मधु पास्यसि ?' 'ननु प्रान्तोपविष्ट,' नरेन्द्र प्रत्यवदत् 'यदि मध्य प्रविशेय तर्हि अध पतित्वा मधुमग्न

७ श्रीरामकृष्ण-वचनामृत १ ५८

८ प्रातःकाले ध्यानोपविष्टस्य नरेन्द्रस्य चित्तैकाग्रता जूट निर्माण्या (Jute mill) घर्षणेन ध्वनिना भग्ना भवति स्म । नरेन्द्रेण तथा निवेदिते रामकृष्णै तस्मिन् ध्वनौ एव ऐकाग्र्य कर्तुं स उपदिष्ट । एकदा ध्यानावसरे देहबुद्ध सर्वथा अपसारण कठिनम् इति अनुभूते नरेन्द्रेण तत् रामकृष्णेभ्य कथितम् । तदानी रामकृष्णै स एव उपाय आस्थित य तेषा गुरुणा-तोतापुरीमहोदयेन-तेषा विषये आस्थित आसीत् । तै नरेन्द्रस्य भ्रुवोर्मध्ये स्वनखेन निपीड्य उक्तम्, 'या इयम् वेदना, तस्याम् ऐकाग्र्य कुरु'। एतादृशा उपाया देहबुद्धिपरित्यागे उपकारका आसन् इति नरेन्द्रेण उक्तमस्ति ।

९ हिशेबी, calculating

१० आत्मनः विगणय्यकारित्व-कारणात् परिवारचिन्ताग्रस्त नरेन्द्र ससारे किंचिदिव मग्नोऽस्ति इति एक-द्व-वार रामकृष्णै उक्तम् । (रामकृष्ण-वचनामृत २.५२५, ५०४)

ध्रुवमेव अह मरिष्यामि'। तदा रामकृष्णा अवोचन् 'अयि वत्स! अन्योऽयं सच्चिदानन्द-सागर । अयं खलु अमृतसागर । नात्र पतित कश्चित् म्रियते, प्रत्युत अमरो भवति। नास्ति कश्चित् भक्ते प्रेम्णश्च अतिरेको नाम । अत सच्चिदानन्द-सागरे गभीरम्[11] अवगाहस्व'[12]।

रामकृष्णाना सहवास नरेन्द्रेण किंचिदूनानि पञ्च वर्षाणि अनुभूत । अस्मिन् काले तस्य हृदयकमल क्रमेण विकासम् अगच्छत्। ब्राह्मसमाज-प्रभावात् क्रमेण निर्मुक्त स हिन्दुधर्मस्य[13] शाश्वत माहात्म्य प्रत्यभिजानात्। सामाजिक-परिवर्तन विषये ब्राह्मसमाजस्य उपयोगित्वे सत्यपि आध्यात्मिकया अनुभूते कृते स अपर्याप्त इति स अबुध्यत। आत्मन पश्चात् स एव नेता भविता इति ज्ञात्वा तस्मिन् नेतृत्वनिर्माणार्थं, अस्य च वस्तुन प्रकाशनार्थं रामकृष्णै प्रयतितम्। अन्यै अलक्षित नरेन्द्रस्य माहात्म्य ते शिष्यसनिधौ प्रकाशयन्ति स्म। एकदा (१५-७-८५) ते एव नरेन्द्र प्राशसन् —

'नरेन्द्र उच्चैस्तरे स्तरे वर्तते। निराकारराज्यगत स । पुरुष-स्वभाववाश्च । अनेके भक्ता अत्र आगच्छन्ति, न तु एकोऽपि तत्सदृश । अन्तरान्तरा सर्वान् मनसा आलोचयामि। तदा दृश्यते, यत् केचित् भक्ता दशदलेन पद्मेन समा, केचित् षोडशदलेन, केचित् शतदलेन, नरेन्द्रस्तु सहस्रदल पद्मम्। इतरे तावत् घट-कलशीतुल्या , नरेन्द्रस्तु महाकुम्भ । अन्ये पल्वलायन्ते, नरेन्द्रस्तु महान् जलाशय', 'यथा 'हालदार'—पुष्करिणी। इतरे क्षुद्रमत्स्या, नरेन्द्रस्तु लोहिताक्ष मत्स्यराजो रोहित । नरेन्द्रस्य पुरुषभाव । अत स याने दक्षिण-पार्श्वम् अध्यास्ते। — तस्मिन् सभाया सति मम बलाधान भवति'।[14]

११ तुल्यता कबीरोक्ति
जिन खोजा तिन पाइया गहरे पानी पैठ ।

१२ श्रीरामकृष्ण-वचनामृत २ २१५, ७१२

१३ रामकृष्णै वर्णव्यवस्थाया उपरि न कदापि आघाता कृता इत्यपि अत्र निर्देशार्हम् ।

१४ श्रीरामकृष्ण-वचनामृत ३ २६४–२६५

रामकृष्णा नरेन्द्रगता शक्ति 'शिवशक्ति' शब्देन निर्दिशन्ति स्म। एकदा नरेन्द्र निर्दिश्य रामकृष्णा उपस्थित भक्तवृन्दम् अवोचन्, 'पश्यत। पश्यत। एष नरेन्द्र। अहो अस्य अन्तर्भेदिनी प्रज्ञा! अपार तेज सागर एव अय कश्चित्। न हि स्वय जगदम्बा, सा महामायापि, दशपदेभ्य अधिक तम् उपगन्तु शक्नोति। स्वयमेव तस्मै प्रदत्तेन ऐश्वर्येण सापि सयतास्ति'। नरेन्द्र कर्मानुकूल विधातु तै अम्बा तस्य तेजस किंचिदिव उपशमनार्थं प्रार्थिता। नरेन्द्र कदाचित् स्वीयया स्वरस प्रवृत्त्या सदैव समाधिमग्नस् तिष्ठेत्, स उच्चैस्तम वैयक्तिकम् आध्यात्मिकशिखरम् अधिरोहत्, जगत्तु तेन वञ्चित स्यात् इति आशङ्कमाने रामकृष्णे 'अयि अम्ब! तव मायाया कश्चिद अश नरेन्द्रे निधेहि' इत्यपि प्रार्थितम्। यथा एकार्धयापि शक्त्या पुरुष जगति विख्यातो भवेत्, तादृश्य अष्टादश अद्भुता शक्तय नरेन्द्रे सन्ति इति ते वदन्ति स्म। रामकृष्णाना दिव्यदृष्टेर् जातप्रत्यया भक्ता तेषा सर्वमपि नरेन्द्रगत वाक्यम् अशङ्कमाना अनन्यकार्यं, यथाकाल च नरेन्द्र नेतृत्वेन स्वीकर्तु ते मनसा सिद्धा अभवन्। यतस्तम् असाधारणबुद्धिशालिन, गौरोन्नतसुबद्ध-शरीरवत, महोत्साहस्य, बालस्येव च निष्कपट स्वभावस्य अस्य यून विषये सर्वेषामेव मनसि कोऽपि प्रेमस्निग्ध आदर आसीत्। वृद्धस्य वनराजस्य समीपे क्रीडारत सिंहशावकमिव, प्रशमस्थितस्य पूर्वपार्थिवस्य रथो पार्श्वे विराजमान नवाभ्युदयम् अजमिव, गुरुदेवाना पार्श्वस्थ 'युवगुरु' नरेन्द्रम् अन्ये शिष्या कौतुकोन्मेषेण ददृशु।

**भूतसेवा, न भूतदया**

रामकृष्णाना माहात्म्यस्य यथा नरेन्द्र याथार्थ्यविद् आसीत्, तथा स एव तेषाम् उपदेशस्य सारग्राही अपि आसीत्। ईदृश एक प्रसङ्ग अत्र सविशेषम् उपवर्ण्यते, यत अन्ततोगत्वा विवेकानन्दाना स्वीये अवतारकार्यनिर्णये स किमपि महत्त्व बिभर्ति। एकदा (१८८४ ख्रिस्ताब्दे) कथाप्रसङ्गेन रामकृष्णै वैष्णवधर्मस्य निरूपण कृतम्। ते अवोचन्, 'एतद्धर्मानुयायिना कर्तव्यत्रय विहितम् अस्ति — एक नाम नामप्रीति, द्वितीय भूतदया, तृतीय च वैष्णवजनसेवा इति।' अस्य गूढार्थं रामकृष्णा एव स्पष्टीचक्रु — 'नास्ति नाम-नामिनोर् भेद।

अत सदैव भगवन्नाम ग्राह्यम्। नास्ति च देवभक्तयो, विष्णु-वैष्णवजनयो अपि कश्चित् भेद। अत सर्वेषा साधुसन्ताना समान कार्य। यतश्च सर्वमपि इद जगत् भगवत कृष्णस्यैव, अत सर्वेषु भूतेषु दया कर्तव्या।' एतेषु शब्देषु उच्चारितमात्रेषु रामकृष्णा समाधिमग्ना अभवन्। ततश्च किंचित्कालोत्तरम अर्धभानावस्थाम् आगतास् ते आत्मानमेव उद्दिश्य ऊचु, 'भूतदया! भूतदया! रे मूर्ख! धरण्या वलवलायमान त्व क्षुद्रकीट, कस्त्व भूतदया कर्तुम्? भूताना न दया, किं तु सेवा। मनुष्यमात्रस्य 'सेवा' कर्तव्याऽस्ति, यत तस्य रूपेण साक्षात् भगवान् आविर्भूतोऽस्ति'। तत्र उपस्थितै सर्वैरेव इद रामकृष्णाना वचन श्रुत स्यात्। किं तु तस्य मर्म यथा नरेन्द्रेण गृहीतम्, तथा क्वचिदेव अन्येन केनापि गृहीत स्यात्। पश्चात् इदम् अन्तरेण नरेन्द्र एवम् अवोचत् —

'अहो गुरुदेवाना अद्भुते वचसि मया दृष्ट स अपूर्व प्रकाश! अहो भक्ति-वेदान्तज्ञानयो तै कृत स मनोज्ञ समन्वय! प्रायेण वेदान्तप्रोक्त ज्ञान कठोरम्, मानुषसुलभाना भावभावनाना च प्रतिकूलम् इति मन्यन्ते। अहो विशालता, स्वाभाविकता, मधुरता च गुरुदेववक्तृताया एकवाक्यताया! भावाविष्टाना श्रीरामकृष्णाना श्रीमुखात् नि सृतेन तेन वचनेन अहम् अधुना जानामि, यत् समाजात् बहि क्वापि विजने यत् वेदान्तोपदिष्ट आदर्शजीवन सन्यासिना जीव्यते, तत् गृहपरिवारेऽपि जीवितु, दैनदिनजीविते च तम् आदर्शं प्रसारयितु शक्यम्। यदि कश्चित् मनुष्यमात्र भगवतो रूपत्वेन दृष्ट्वा सेवेत, तर्हि शीघ्रमेव तस्य साधकस्य चित्तशुद्धिर् भवेत्, आत्मान च स सच्चिदानन्दात् ब्रह्मण अभिन्नत्वेन अनुभवेत्। श्रीरामकृष्णाना तद् वचन भक्तिमार्गस्य किमपि अपूर्व स्वरूपमेव प्रकाशयति। ईश्वरस्य सर्व-व्यापकत्व यावत् नानुभूतम् तावत् यथार्था भक्ति दूरैव। त सर्वभूतेषु अनुभूय, मनुष्यमात्रसेवया च त सेविन्वैव भक्त परा भक्ति लभते। ये कर्मयोगिण, ये वा (ध्यान) योगिन तेऽपि श्रीरामकृष्णानाम् इद वचन लाभदम् उपलभेरन्[१५]।

१५ 'What a strange light have I discovered in those wonderful words of the Master! How beautifully has he recon-

रामकृष्णाना वचनस्य आत्मना दृष्ट गूढार्थम् एव विशदीकृत्य मनसि तत्कालस्फुरित भाविकार्यनिश्चय नरेन्द्र एव प्रकटयति—

'यदि तादृशी ईश्वरेच्छा स्यात, तर्हि शीघ्रमेव स दिवस आगमिष्यति, यदा अहम् इद महासत्य निखिलस्य जगत पुरत उद्घोषयिष्यामि । सज्ञपण्डितानाम आब्राह्मणशूद्राणाम्, सधननिर्धनाना सर्वेषा तत् निजस्व करिष्यामि[५]'।

---

(५९ पृष्ठत)

ciled the ideal of Bhakti with the knowledge of the Vedanta, generally interpreted as hard austere and inimical to human sentiments and emotions ! What a grand natural and sweet synthesis ! from those words of wisdom which Sri Ramakrishna uttered in an ecstatic mood, I have understood that the ideal of Vedanta lived by the recluse outside the pale of society can be practised even from hearth and home and applied to all our daily schemes of life Service of man, knowing him to be the manifestation of God purifies the heart and in no time such an aspirant realises himself as part and parcel of God, Existence-Knowledge Bliss Absolute Those words of Sri Ramakrishna throw an altogether new light upon the path of devotion Real devotion is far off until the aspirant realises the immanence of God By realising Him in and through all beings and by serving Him through humanity, the devotee acquires real devotion Those following the paths of work and Yoga are similarly benefited by those words of the Master . However, if it be the will of God, the day will soon come when I shall proclaim this grand truth before the world at large I shall make it the common property of all, the wise and the fool the rich and the poor, the Brahmin and the Pariah "

(Life of Swami Vivekananda, pp 128–129)

**दिव्यदर्शनानि**

'मया किमपि अनितरसाधारण कर्म कर्तव्यम् इति ईश्वरेच्छा अस्ति, निज जन्म कस्यापि लोकोद्धारकार्यस्य कृते वर्तते इति कापि अन्त-सूचना इव नरेन्द्रेण लब्धु प्रारब्धा। 'यूय तावत् विधिज्ञा वा, वैद्या वा, न्यायाधीशा वा भविष्यथ। मया तु आत्मार्थ निर्मीयमाणा जीवन-सरणिम् अचिरेणैव द्रक्ष्यथ' इति स सकृत् निजान् मित्रान् अवदत्[१६]। गुरुदेवाना शब्द इव अधुना तेन ध्यानाभ्यासवशात् अनुभूयमानानि दर्शनान्यपि तस्य बलाधाने प्रयत्नसातत्ये च कारणानि स्यु। कदाचित् स ध्यानस्य रामकृष्णान् साक्षात् अकरोत्। कदाचित् स्वसदृश क्रियाकारिणम् आत्मन प्रतिरूपम्, 'द्वितीयम्' इव, स पश्यति स्म। एकदा रात्रौ निजगृहे सुप्त स रामकृष्णै आगत्य, उत्थाप्य च, 'एहि। तुभ्य राधा दर्शयामि' इत्युक्त्वा बहिर् नीत। किंचिद् अन्तर गत्वा 'क्व वा अन्यत्र राधा द्रक्ष्यसि' इत्युक्त्वा आत्मानमेव अद्भुतरमणीयेन राधारूपेण परिणमय्य नरेन्द्र राधादर्शन कारित। अनन्तर च प्रतिबुध्य 'स्वप्नोऽयम्' इति नरेन्द्रो ज्ञातवान्। 'अपि ईदृशेषु प्रकारेषु त्व विश्वसिषि?' इति केनचित् पृष्टे 'बाढ विश्वसिमि' इति नरेन्द्र प्रत्यवदत्। सशयशीला तस्य बुद्धि इदानी क्रमेण कथ श्रद्धालुतया परिणता आसीत् इत्यस्य निदर्शनमिव इदम्। अन्ये केचन भक्ता नामोच्चारणमात्रेण काष्ठवत् जडीभूय भूम्या पतन्ति स्म। नरेन्द्रोऽपि ताम् अवस्थाम् अनुभवितुम् ऐच्छत्। रामकृष्णैस्तु 'ननु दौर्बल्यचिह्नम् इदम् आधारस्य अल्पता दर्शयति। त्व तु महाधारोऽसि, अत समर्थोऽसि भावावेश सोढुम्' इति स प्रतिबोधित।[१७]

---

१६ रामकृष्णा वदन्ति स्म, 'यदि नरेन्द्र सुखसवर्धित अभविष्यत्, तर्हि स नयज्ञो वा, विधिज्ञो वा, वाग्मी वा, समाजसुधारको वा अभविष्यत्। तेन अनुभूतस्य दारिद्र्यस्य कारणात् तु तन्मनसि दरिद्रान् अन्तरेण करुणा सजाता अस्ति'।

१७ एतत्कालगता एका घटना आख्यायते, यत्र नरेन्द्रस्य वैराग्यस्य परीक्षेव अभवत्। तस्य कैश्चित् धनिकै मित्रै एकदा उपवन-विहारार्थ नाम स बहिर् नीत। सर्वे किमपि उद्यान प्रविष्टा। अचिरकाल तत्र गायनम्, खादतमोदता च प्रावर्तत। अनन्तर

रामकृष्णाना रोगप्रादुर्भाव

१८८५ ख्रिस्ताब्दस्य मध्यावसरे रामकृष्णाना कण्ठे कश्चिद्

---

(६१ पृष्ठत)
श्रान्तो नरेन्द्र विश्रामहेतो समीपवर्तिन कक्ष गन्तु मित्रै उपदिष्ट। तत्र गत्वा यावत् नरेन्द्र विश्रमितुम् आरभते, तावत् काचित स्त्र्याङ्गना तत्र प्रविष्टा। तस्य 'मित्रै' तस्य मनोविनोदार्थं सा प्रयिता आसीत्। तया आगत्य आदौ तावत स्वीय दु खजीवित निवेदयन्त्या नरेन्द्रमनसि करुणाम् उत्पादयितु प्रयतितम्। स्वभावोत्तानहृदय नरेन्द्र तत्सर्वं सत्यबुद्ध्या अशृणोत्। यदा तु 'एषोऽधुना मम हस्तगत' इति मन्वानया तया निज सत्यस्वरूप प्रकटयितुम् आरब्धम्, तदा नरेन्द्र प्रत्यबुध्यत। स्मृतपरमेश्वर गुरुचरण स झटिति उत्थाय 'दूये अहम् एतेन तव शोचनीयेन जीवितेन। यदि त्वमपि परमार्थत तेन उद्विग्नाऽसि नर्हि शक्ष्यस्यपि प्रयत्नबलात् तत परित्यक्तुम्' इत्युक्त्वा अपयात। सापि निवृत्य 'अहो मौर्ख्यम् एतादृश साधुपुरुष विमोहयितु मा व्यापारयता युष्माकम्!' इति नरेन्द्रस्य मित्रान् निरभर्त्सयत। — अन्योऽपि एतत्पूर्वकालिक एव सदृश परीक्षावसर कैश्चित् चरितकारै निवेद्यते। तदानी नरेन्द्र बी ए कक्षायाम् आसीत्। निर्विघ्नाध्ययनार्थं स मातुलगृह गच्छति स्म। तस्मिन नियतकक्षे स कदाचित् गायति स्मापि। एकदा एवमेव तेन गायन प्रारब्धम्। तस्य दिव्या ध्वनिलहर्य समीपवर्ति गृह प्राप्ता, यत्र नरेन्द्रस्य रूपसपदा तस्मिन् लुब्धमना एका रूपवती बालविधवा वसति स्म। तस्मिन दिने नरेन्द्रस्य गानशब्दै श्रुतमात्र विलुप्तविवेका, आत्मानम् अविभावयन्ती प्रधाविता सा आत्मसमर्पणेच्छया नरेन्द्रस्य कक्ष सहसा प्राविशत्। नरेन्द्रेण तु 'अयि भगिनि!' इति दृढचेतसा सबोध्य प्रणता सा प्रत्यागतभाना, प्राप्तविवेका, लज्जाविलीनेव स्वगृह न्यवर्तत। तस्या गताया नरेन्द्र श्रीरामकृष्णचित्रम् अवरोप्य, प्रणम्य, सर्वाणि पुस्तकानि अन्यच्च तानपूरादिक वस्तुजात सचित्य, द्वार पिधाय, अपुनरागमनाय त कक्ष व्यजहात्। इम प्रसङ्गम् अधिकृत्य मराठीभाषाया कविवर्य श्री गिरीश इत्येन एक काव्य प्रणीतम् अस्ति।

विकारोऽभवत्[१८], य अन्ततो गत्वा घातुक कर्करोग इति निर्णीतोऽभवत्। ऊष्मातिशयस्य उपशमार्थम् उपसेवितस्य अतिरेकिण वर्फाशनस्य अय परिणाम आसीत्। भिषग्वर्येण उपचारा प्रारब्धा । अतिभाषणम्, तथा च समाधिसेवनम इति द्वय प्राधान्येन अपथ्यतया वैद्येन प्रनिषिद्धम्। रामकृष्णे अन्येषु पथ्येषु परिपालितेष्वपि इदम् अपथ्यद्वय न परिहृतम्। तेषा जन्मैव ससारतापतप्ताना जनाना तत्त्वज्ञानोपदेशार्थम्, आध्यात्मिक-साधनायाश्च परिपूर्णादर्शस्य निदर्शनार्थम् आसीत्। कथमिव ते 'कोश'मात्रस्य क्षुद्रदेहस्य कृते स्वभावभूतात् उपदेशनात् ध्यानाभ्यासाच्च विरमेयु । एकदा पानिहाटी (कलिकाताया उपनगर-विशेष) इत्यत्र भजनानन्दोन्मत्तै तै समग्र दिन भजन नर्तनाभ्या समाधिगमनेन च नीतम्। रोगस्य प्रकोपने इदमपि अशेन कारणता ययौ। अन्ते दक्षिणेश्वरे वैद्यकीय-उपचाराणा न तथा सौकर्य यथा कलिकातायाम् इति हतो कचित् काल रामकृष्णे कलिकाताया वस्तव्यम् इति निरणीयत। आदौ कतिपयदिनानि ते बागबाजारे तेषा भक्तोत्तमाना वलराम-वसु इत्येतेषा गृहे अवसन्[१९]। शीघ्रमेव तु ते श्यामपुकूर इत्याख्ये विभाग तेषामर्थे भाटकगृहीते गृहे वस्तु नीता । भगवती माताजी पाकनिष्पादनार्थम् आगता। डॉ महेन्द्रलाल सरकार इत्याख्यस्य विख्यातस्य होमिओपाय-भिषज चिकित्सा प्रारब्धा। उपचाराणा, शारीरिकियाश्च सेवाया भार नरेन्द्रप्रभृतिभि युवभक्तै आनन्देन स्वशिरसि गृहीत, गृहस्थैश्च अर्थभार । ब्रह्मचारिभि श्रमदान कृतम्, गृहस्थैश्च अर्थदानम्। नरेन्द्रनेतृभिर् युवभि अध्ययनमपि परित्यक्तम्। श्रीरामकृष्णा सर्वेषामेव भक्तानाम् असीम्ण प्रम्ण, आदरस्य भक्तेश्च भाजनम् आसन्। सर्वस्वस्यापि प्रदानसिद्धास् ते भक्ता अधुना रामकृष्णानाम् आरामलम्भनार्थम आत्यिन-प्रयत्ना अभवन्। गुरुदेवाना सेवा नाम किंचित् परम तप एव तेन आत्मोद्धारोऽपि शक्य इति तेषा श्रद्धा आसीत्। किं च अधुना कलिकातायामेव निवासेन

१८ अस्या घटनाया प्रथमोल्लेख श्रीरामकृष्ण-वचनामृते १३-६-८५ दिनीये वृत्तान्ते (३ २०४) उपलभ्यते।

१९ दक्षिणेश्वर परित्यज्य निवासार्थं कलिकाता-गमन प्राय ऑक्टोबर-मासस्य प्रारम्भे अभवत्।

जनितसामीप्यहेतो अनेके भक्ता सौकर्येण तान् गन्तुम् अशक्नुवन्।

डॉक्टर-महोदयाः आधुनिक-मतवादिन आसन्। अवतार-कल्पनाया तेषा विश्वासो नासीत्। अस्मिन् विषये गिरीश-प्रभृतिभिर् भक्तै सह तेषाम् अनेकदा विवादो भवति स्म। रामकृष्णान् अन्तरेण तु तेषा मनसि प्रगाढ आदर आसीत्। ते वदन्ति स्म 'As a man I have the highest regard for him'। नरेन्द्रेण रामकृष्णानाम् अद्भुत सामर्थ्यम् अनेकदा साक्षात्कृतम् आसीत्। तेषाम् आध्यात्मिक जीवन परमादर्श मन्यते स्म। एव सत्यपि सोऽपि तान अवतार मन्तु सिद्ध नासीत्। एकदा (२७-१०-८५) रामकृष्णविषयकस्य निजस्य प्रगाढादरस्य प्रतिपादन तेन डॉक्टर-महोदयान् प्रति इत्थ कृतम्। स अवदत्", "वयम् एतान् ईश्वरसदृशान् मन्यामहे। वनस्पतिसृष्टि-जीवसृष्टयोर् मध्ये अस्ति एक अवस्थाविशेष, यो न वनस्पति इति वक्तु शक्यते, न वा जीव इति। जीवेश्वरयोर् मध्येऽपि अस्ति तादृश कश्चित् अवस्थाविशेष, यो न जीव इति वक्तु शक्यते न वा ईश्वर इति। वयम् एतान् न God इति मन्यामहे, किं तु Godlike man इति। . We offer to him worship bordering on Divine worship" एतेन एकेनापि वाक्येन नरेन्द्रस्य रामकृष्णगता तदानीतनी धारणा स्पष्टा भवति।

**ईश्वरज्ञानम् GRANDEST OF ALL SCIENCES**

डॉक्टर-महोदया रामकृष्णान् पुन पुनर भावावेशात् निवारयन्ति स्म। तेन तेषा रोग वर्धेत इति ते अबिभयु। ते स्वय विज्ञानैकनिष्ठा आसन्। प्रयोगशीला आसन्। इदम् उल्लिख्य उपर्युक्त-सभाषणावसरे नरेन्द्र तान् एवम् अवदत्, "इदमेक प्रेक्षता भवान्। scientific discovery निमित्त भवान् life devote कर्तु शक्नोति। न शरीरस्वास्थ्यम् अवधत्त। ईश्वरज्ञान तावत् grandest of all sciences अस्ति। किमिति तर्हि एते (रामकृष्णा) तदर्थं शरीरास्वास्थ्य नावगणयेयु ?' नरेन्द्रस्य मधुरेण गायनेन, तस्य च कुशाग्रीयया बुद्ध्या प्रीता डॉक्टर महोदया तस्मिन

२० श्रीरामकृष्ण-वचनामृत ३ ४७९–४८३
२१ तत्रैव, पृ ४८२

अस्तिघ्नन्त, त च रामकृष्णसनिधौ प्राशसन्।

एषु दिवसेषु नरेन्द्रस्य आर्थिकी दुर्दशा तदवस्था एव आसीत्। कुटुम्बं भरणीयम् आसीत्। तद्गतया चिन्तया नरेन्द्रस्य मनः कदाचित् द्विधा भवति स्म। कुटुम्बस्य काचित् व्यवस्था विधाय सर्वात्मना साधना अनुष्ठातव्या इति तेन चिन्तितम् आसीत्। एतद्-विगणय्यकारित्वार्थं रामकृष्णाः कदाचित् तं सौम्योपहासस्य आस्पदमपि कुर्वन्ति स्म। एकदा (२७-१०-८५) ते अवोचन्– "नरेन्द्रः यथा तावत् एवम् उच्चकोटिगतः, किमिति अद्यापि तस्य न सिध्यति? यदि अशेषं सर्वं मनः ईश्वराय समर्प्यंत, स सर्वं साधयिष्यति। 'आदौ गृहव्यवस्थां विधास्यामि, पश्चात् साधनाम् अनुष्ठास्यामि'– न हि तीव्रे वैराग्ये सति एव मतिर् भवति"। "एवं सत्यपि "दृश्यतां तावत् नरेन्द्रः! अधुना तस्य अशेषं मनः माम् अभ्येति" इति तैः दिनत्रयात् पूर्वं (२४-१०-८५) तद्विषयं उक्तम् आसीत्"। -

सपाद सार्धं वा मासद्वयं रामकृष्णाः श्यामपुकूरे न्यवसन्। न तु तेषां प्रकृतौ कोऽपि विशेष आसीत्। प्रत्युत प्रतिदिनं सा अधिकतरं क्षीयमाणा आसीत्। कलिकातीयं जनबहुल वातावरणं न तेषाम् आरोग्यावहम्, तैः मुक्तवाते कुत्रापि उपनगरे वस्तव्यम् इति वैद्येन उपदिष्टम्। तदनुसारेण अनुकूलस्थानान्वेषणं प्रारब्धम्, अन्ते च काशीपुरे उपनगरे एकम् उद्यानगृहं निश्चित्य भाटकेन गृहीतम्। ११-१२-१८८५ दिने रामकृष्णाः तत्र निवस्तुं गताः। रामकृष्णैः स्वनिवासेन पवित्रितम् इदम् अन्तिमं स्थानम्। अधुना अष्टमासावशेषं तेषां जीवितम् आसीत्।

२२. श्रीरामकृष्ण-वचनामृत ३.४६०–४६१

२३. श्रीरामकृष्ण-वचनामृत ३.४१८

# ८ श्रीरामकृष्ण-निर्वाणम्

रामकृष्णै अधुना अध्युषितम् इदम् उद्यानगृह श्री गोपालचन्द्र-घोष इत्यतेषा स्वभूतम् आसीत्। गृह विशालम् आसीत्। तस्य सर्वत पुष्पवृक्षा फलवृक्षाश्च आसन्। उद्याने द्वौ जलाशयौ आस्ताम्। तत्रत्या मार्गा सुविभक्ता आसन्। नासीत् अत्र नगरसुलभ कोलाहल। उद्यान-पुष्पाणा गन्धहर सुभगो वायु अवात्। रमणीये अस्मिन् स्थाने आदौ तावत रामकृष्णै किंचिदिव आराम अनुभूत।

तै अधुना समीपवर्ती निजदेहान्त ज्ञात। अनेकवर्षेभ्य पूर्वम् आरब्धम् अध्यात्मधनवितरण तै अधुना मुक्तहस्तेन अग्रत सग कृतम्। 'यथा कश्चित् फलविक्रयी पूर्वाह्णे तावत् मूल्यविषये बहु विवदेत, अस्ताभिलाषिणि सूर्ये सति तु यस्मै कस्मै अपि ग्राहकाय येन केनापि मूल्यन विक्रीणीत, तथैव रामकृष्णानाम् अवस्था अभवत्[1]।' तै कृतपूर्वम् 'इतो निर्याणात् प्राक् अह सर्वं प्रकटीकरिष्यामि,' 'यदा बहवो जना आगन्तुम्, अस्य (मम) माहात्म्यम् (अवतारत्वम्) अन्तरेण च वक्तुम् आरप्स्यन्ते तदा अम्बा तत पर नेद शरीरधारणम् अनुमस्यते,' 'अन्तिमेषु दिवसेषु भक्ता अन्तरङ्ग बहिरङ्गलक्षणे विभागद्वय विभक्ता भविष्यन्ति' इत्यादिक भविष्यकथनम् अत्रैव चरितार्थम् अभवत्। नरेन्द्रनायनेतृका केचित् युवभक्तविशेषा यथाकालम् ईश्वर प्राप्त्यर्थं मानवसेवार्थं च सर्वस्वत्याग-पूर्वं सन्यासग्रहण करिष्यन्ति इति सिद्धादेश तै अत्रैव प्रकटीकृत[2]।

पूर्ववत् युवभक्तवर्ग[3] गृह परित्यज्य रामकृष्णशुश्रूषार्थम् अत्र वस्-

---

१ श्रीरामकृष्ण-वचनामृत ३ ५३९

२ तत्रैव।

३ एतावता कालेन नरेन्द्र, राखाल, बाबूराम, निरञ्जन, योगीन्द्र, लाटू, तारक, गोपालौ (ज्येष्ठकनिष्ठौ), काली, शशी तथा च शरद् इत्येते युवान (एतेषा केचित् बालका आसन्) रामकृष्णाना नित्यसनिधौ न्यवसन्। हरि-पूर्ण प्रभृतय केचन अन्तरान्तरा उपागच्छन्।

तुम् आगत । अध्ययनादिकात् नियतकार्यान् तेषा. योऽय प्रमादोऽभवत्, तेन तेषा पालकवर्ग असतुष्ट अभवत्। न तु तै तत् गणितम्। अथ नरेन्द्रादि युवभक्तजन गुरुदेवार्थम् अन्तिमस्य रक्तबिन्दो समर्पणायापि सिद्ध आसीत्। किं तु गुरुदेवाना निर्याणकाल प्रत्यासन्नोऽस्ति इति नरेन्द्रेण ज्ञातमासीत्। अत गुरुदेवाना शुश्रूषया सहैव ध्यानादिकी साधनाम् अनेकगुणिता कर्तुं तेन अन्ये शिष्या प्रचोदिता । न हि सद्गुरु सूर्ये अस्तमिते मार्गदर्शनस्य काचित् आशा आसीत्। अदूरवर्ती चासीत् सूर्यास्त ।

इतो रामकृष्णा अपि अल्पावशिष्ट जीविताधिम् आकलय्य नरेन्द्रादीना भक्तविशेषाणा सस्कारविशेषाधाने दक्षा आसन्। एकदा 'मम गुरुणा अय प्रदत्तोऽस्ति' इत्युक्त्वा तै नरेन्द्राय रामनाममन्त्र प्रदत्त । तेन नरेन्द्र तथा नाम उद्दीपितोऽभवत्, यथा तारस्वरेण रामनाम उच्चारयन् स अविरत गृह प्रदक्षिणीकर्तुं प्रारभत । रामकृष्णानाम् उत्प्रेक्षणानुसार केनचित् कालेन स प्रकृतिम् आपन्नवान्।

१८८६ ख्रिस्ताब्द प्रारब्ध । नरेन्द्र एषु दिनेषु कदाचित् काशीपुरे उद्याने साधनाम् अनुतिष्ठति स्म, कदाचित् च दक्षिणेश्वरमपि गच्छति स्म। प्राय काली तथा च तारक त तत्र अन्वगच्छताम्। ध्यानार्थं पञ्चवटी अनुकूला इति रामकृष्णै प्रशसिता। एकदा (२–१–१८८६) काशीपुरीये उद्याने ध्यानम् अभ्यस्यतस् तस्य वक्षसि सहसा किमपि अपूर्व स्फुरण जातम्। इडापिङ्गलयो स स्पष्टतया अभिन्न अभवत्। 'स्पृश्यता तावत् मम वक्षसि' इति च स समीपवर्तिन हाजरा-महोदयम् उक्तवान्। दिनद्वयानन्तर नरेन्द्रेण अयम् अनुभव श्री महेन्द्रनाथ-गुप्तेभ्य (श्रीरामकृष्ण-वचनामृत-कारेभ्य) निवेदित । 'कुण्डलिनी जागरिता स्यात्' इति तै उक्तम्।

**'समाधितोऽपि उच्चतराम् अवस्था गच्छ!'**

एषु दिनेषु नरेन्द्र निर्विकल्प-समाध्यर्थम् अताम्यत । अस्मिन् विषये ३–१–१८८६ दिने तस्य रामकृष्णै सह यत् सभाषणम् अभूत् तत् उत्तरेद्यु तेन श्री महेन्द्रनाथ-गुप्तेभ्य निवेदितम्[४]। तद् यथा –

---

४ श्रीरामकृष्ण-वचनामृत ३ ५५०–५५१

नरेन्द्रः – पूर्वेद्यु गत्वा मया तेभ्य (रामकृष्णेभ्य) सर्वं कथितम्। मया उक्तम्, 'अन्ये सर्वे कृतार्था सञ्जाता। मय्यपि प्रसीदतु भवान्। सर्वे सिद्धार्था। किम् अहमेव असिद्धार्थ तिष्ठेयम्?

महेन्द्र – ततस्तत?

नरेन्द्रः – ते अवोचन्, 'त्व गृहजनस्य कामपि व्यवस्था तावत् सपादय। सर्वं भविष्यति। किं त्व वाञ्छसि?' मया उक्तम्, 'अहम् अविरत त्रिचतुरान् दिवसान् समाधिमग्नो भवितुम् इच्छामि। किंचिज्जठरपूर्ति विरामवर्जम्।' तदा ते अवोचन्, 'अहो ते क्षुद्रबुद्धित्वम्! ननु त्वमेव तत् गीत गायसि नु—जो कुछ हैं सो तू ही है इति? त्व कामपि गृहजनस्य व्यवस्था सपाद्य आगच्छ। समाधितोऽपि उच्चै अवस्था प्राप्तु शक्या। ता प्राप्नुहि।'

इद समाप्य निवेद्य नरेन्द्र तदनन्तर घटित वृत्तान्तम् एव न्यवेदयत् —

'तदनुसारेण अद्य प्रभाते अह गृहम् अगच्छम्। तत्र प्रत्यासन्नाया विधि-परीक्षायाम् अध्ययनप्रमादार्थं सर्वे मा निरभर्त्सयन्त। ततोऽहं मातुलगृह गत्वा मम परिचित च त कक्ष प्रविश्य अध्येतुम् ऐच्छम्। किं तु मन एव न प्रवर्तते। सहसा केनापि भयेन आविष्ट इव अभवम्। अताम्यत् हृदयम्। अभूतपूर्वम् अरोदिषम्। अन्ते पुस्तकादिकानि दूर क्षिप्तानि, साधु च काशीपुरम् उद्दिश्य प्रधावित् प्रवृत्तोऽहम्[५]। मध्येमार्गं पादत्राणे क्व नष्टे, तदपि न जाने।'

'शान्तिर्नास्ति। ताम्यन्ति प्राणा।'

कञ्चित्काल तूष्णी स्थित्वा नरेन्द्र पुनरपि वक्तुम् आरभत —

'अद्य विवेकचूडामणि पठित्वा मन अधिकतरमेव खिन्नताम् आपद्यत। तथा विचार्यमाणे मया त्रयमपि लब्धम् अस्ति। अनल्पाया तपस्यायाः फलरूपेण मनुष्यत्व मया लब्धम् अस्ति। अनल्पाया तप-

५ एतस्मिन्नेव दिने रामकृष्णं अध्ययनम् अन्तरेण पृष्ट नरेन्द्र प्रत्यवदत 'शोभन भवेत यदि तादृश किंचिद् औषध लभ्येत यत अद्ययावत् यत्किमपि अधीतम् तत्सर्वं विस्मारयेत्।'
(श्रीरामकृष्ण-वचनामृत ३ ५४९)

स्याया फलरूपेण मयि मुमुक्षुत्व वर्तते। अनल्पाया तपस्यायाश्च फलरूपेण महापुरुषसश्रयोऽपि मया प्राप्तोऽस्ति। तथापि शान्तिर्नास्ति। ताम्यन्ति प्राणा । धन्या यूय लब्धशमा ।'

एषु दिनेषु कण्ठगताया वेदनाया कारणात् भाषण रामकृष्णाना क्लेशकरम् आसीत्। तथापि तस्या रात्रौ अशात श्वासभाषितेन[१] अशातश्च सज्ञाभि नरेन्द्रम् अन्तरेण ते अवोचन्, 'अहो नरेन्द्रस्य विस्मयावहा अवस्था! य एवायम् आदौ तावत् साकार न अङ्गीकुरुते स्म, स एवायम् अधुना ईश्वरार्थं ताम्यति। दृष्ट नु?' अरुणोदय जातोऽस्ति, अचिरेणैव नरेन्द्रस्य ज्ञानसूर्य उदेष्यति, इति तै समूचितम्। तस्यामेव रात्रौ किंचित्कालोत्तर नरेन्द्र द्वित्रै गुरुबन्धुभि सह साधनार्थं दक्षिणेश्वरम् अगच्छत्।

तदनन्तर नरेन्द्र नेता भविष्यति इति रामकृष्णै अनेकदा ज्ञापितम् आसीत। एकदा तै नरेन्द्र स्पष्टमेव आदिष्ट, 'नरेन्द्र! एतान् (शिष्यान्) तव हस्ते निक्षिपामि। मयि इतो निर्यातेऽपि यथा ते साधनाम् अनुतिष्ठेयु, न च स्व स्व गृह निवर्तेरन्, तथा कुरु।' एकदा सन्यासिजीवितस्य अभ्यसनार्थं तै युववर्ग भिक्षाटनार्थम् आदिष्ट। तै भिक्षया यद् धान्यम् उपार्जित तद् उद्याने पक्वम्। 'साधु! पवित्रम् इदम् अन्नम्,' रामकृष्णा अवोचन्।

रामकृष्णाना व्याधिना जना दु खिता आसन्। दर्शनाय आगता जना कदाचित् उपचारविशेष सूचयन्ति स्म। एकदा तर्कचूडामणय शशधरशास्त्रिण अवदन्, 'भवत्सदृशा मुक्तात्मान इच्छामात्रेण रोगापनयने समर्था। यदि भवान् रोगग्रस्ते शरीरावयवे चित्तस्य सयम कुर्यात्, झटिति भवान् नीरोगो भवेत्। किमिति एव न क्रियते?' रामकृष्णा तत्क्षणम् अवोचन्, 'पण्डितो भवान्। तथापि एव वक्ति? ननु सकृत् दत्त मया स्वचित्त परमेश्वराय। कथकार तद् अधुना प्रत्यादाय मया अस्मिन् पूतिगन्धौ रक्तास्थिपञ्जरे एकाग्रीकर्तु शक्यम्?' पण्डितमहोदया निरुत्तरा अभवन्। पश्चात् तेषु अपयातेषु 'युष्माभि रोगापनयनार्थं देवो याचितव्या' इति नरेन्द्रप्रभृतिभि शिष्यै रामकृष्णा

१ कुजबुज, a whisper

मुञ्च। त्वयि मार्गे मुक्ते एव मम ब्रह्मज्ञान भविष्यति।'..मायावाद शुष्कोऽस्ति।" ततस्ते नरेन्द्रम् अपृच्छन्, 'किमुक्त मया?' नरेन्द्र. प्रत्यवदत्, 'शुष्क।' तत नरेन्द्रस्य मुख परामृशन्त रामकृष्णा. अवोचन् 'एतानि (नरेन्द्रस्य) सर्वाणि भक्तलक्षणानि। य (केवल) ज्ञानी तस्य मुखवर्ण शुष्कोऽस्ति।'

रामकृष्णाना स्वास्थ्य प्रत्यह क्षीयमाणम् आसीत्। दुःसहा च आसीत् गलवेदना। एकदा (१४ मार्च) ते अवोचन्, 'युष्माक व्यथा मास्तु इति अहम् इद सहे। यदि तु एतस्मात् दुःखात् देहपात एव वरम् इति युष्माक मत स्यात्, तर्हि तथा करिष्ये।' एतेन वचनेन भक्तजनस्य हृदय व्यदीर्यत। किं तु एव तीव्राया वेदनाया सत्यामपि स्वभावभूतात् उपदेशात् ते न प्रामाद्यन्। उत्तरेद्यु (१५ मार्च) ते श्वासभार्पितेन, अशातश्च सज्ञया अवोचन्, 'स (ईश्वर)एव सर्वं जातोऽस्ति। वधकोऽपि स, वध्योऽपि स, वधस्तम्भोऽपि च स एव।' पुनश्च ऊचु, 'यदि (अय) देह काश्चिन् (अधिकान्) दिवसान् अधरिष्यत, तर्हि अन्येषामपि चैतन्यम् अजागरिष्यत्। न तु तादृशी अम्बेच्छा वर्तते।' 'ननु युष्माकम् इच्छा अम्बेच्छया एकीभूताऽस्ति,' इति नरेन्द्रेण उक्ते रामकृष्णा क्षणमात्र तूष्णीं स्थित्वा अवोचन्,'अधुनाऽहं पश्यामि, यत् मम इच्छा तस्या. इच्छाया कात्स्न्येन विलीनाऽस्ति।'

भक्ता तूष्णीम् आसन्। तत स्वहृदये हस्त निधाय पुनरपि रामकृष्णा अवोचन –

'अत्र द्वौ स्त । एक स (ईश्वर)। एकश्च तस्य भक्त। अय द्वितीय एव रुग्णोऽस्ति। अवगतम्?'

पुनरपि रामकृष्णा ऊचु –

'कस्मै कथनीयम्? को वा इदम् अवगमिष्यति? स(ईश्वर) नररूपेण आगच्छति, अवतरति। भक्तै सह अवतरति, तेन सहैव भक्ता अपि निवर्तन्ते।'

---

७ श्रीरामकृष्ण-वचनामृत ३ ५६४–५६५
८ श्रीरामकृष्ण वचनामृत ३ ५६६–५७३

'अत एव युष्माभि वयमपि न पृष्ठतो हातव्या,' राखाल उवाच।

रामकृष्णा अस्मयन्त। 'बाउलाना'[1] दल सहसा आगच्छन्। अनृत्यन्। अगायन्। यथैव आगच्छन् तथैव अकस्मात् न्यवर्तत। आगत निवृत्त न केनापि अभिज्ञातम्।'

किञ्चिद्-इतरभाषणोत्तर रामकृष्णा अधुना नरेन्द्रम् उपदेष्टु प्रवृत्ता।

**विवेक कुरु!**

श्रीरामकृष्ण – चाण्डालेन स्पृष्टा शंकराचार्या अक्रुध्यन्। चाण्डालस्तु शान्तम् उवाच। 'प्रभो! न त्वयाऽहं स्पृष्ट, न वा मया त्वम्। विवेक तावत् कुरु। कस् त्वम्? देह? मन? बुद्धि?' शुद्ध आत्मा त्रिगुणातीत। यथा वायु, सर्वगन्धैर् अलिप्त।

नरेन्द्र – यथा गुरुदेव आह।

श्रीरामकृष्णः – ज्ञानम्, वैराग्यम्, भक्ति – इद सर्व विद्यामायाया ऐश्वर्यम्। विद्यामायासोपानेन ब्रह्मज्ञानस्य प्रासादशिखरम् आरोढु शक्यते। केचित् सकृत् प्रासादशिखरम् आरुह्यापि आरोहावरोहौ कुर्वन्ति। लोकशिक्षणार्थम्। यथा शंकराचार्या।

नरेन्द्र – अह सन्यास प्रतिपादयामि। अत केवल मह्यम् अनुमन्ते।

श्रीरामकृष्ण – सन्यास आवश्यक। अपि उपरितन वस्तु अनपसार्य अधस्तन वस्तु ग्रहीतु शक्यते?

नरेन्द्र – युक्तमाह गुरुदेव।

श्रीरामकृष्ण – यदा तु सर्वमेव तन्मयम् (ईश्वरमय) भवति, तदा दृश्यते वा अन्यत् किमपि?

नरेन्द्र – अपि संसार अवश्य त्याज्य?

श्रीरामकृष्ण – यथा मया उक्तम्, यदा सर्वमेव तन्मय भवति, दृश्यते वा कश्चित् संसार?

**'अह सर्वस्य प्रभव'**

अथ किञ्चिद्-इतरभाषणोत्तर रामकृष्णा पुनर् अवदन् –

---

१ वङ्गीयानां गायकविशेषाणाम्।

'पश्यामि, यच्च यावच्च तत् सर्वम् (आत्मानं निर्दिश्य) अस्मादेव सृष्टमस्ति।' ततस्तैः 'अपि अवगतम्?' इत्यर्थिका नरेन्द्रम् उद्दिश्य संज्ञा कृता।

**नरेन्द्र** — यच्च यावच्च सृष्टमस्ति तत् सर्वं युष्मत्त एव निर्गतम् अस्ति।

**श्रीरामकृष्ण** — (राखाल प्रति, सहर्षम्) — श्रुतम्? (नरेन्द्र अवगच्छति इति भाव।)

ईश्वर, तस्य सत्ता स्वभावश्च, अवतार्रूपेण ईश्वरस्य आविर्भाव अवतारज्ञानेन ईश्वरज्ञानम्, समारम् ईश्वरस्यैव रूप ज्ञात्वा ज्ञानोत्तरमपि अधिकारानुसारेण लोकोपदेशार्थं ससारे स्थिति, रामकृष्णानाम् अवतारत्वम् इत्यादिषु अनेकेषु विषयेषु इद सभाषण किमपि महत्त्व धारयति। नून नरेन्द्रस्य मनसि तत् किमपि पदम् अकरोत्।

**बुद्धगया यात्रा**

एषु दिवसेषु भगवता गौतमबुद्धेन नरेन्द्र आकृष्टचित्त आसीत्। गौतमस्य वैराग्यम्, सन्यास, सत्यप्रियता, दयालुता इत्यादिगुणनिमित्त त प्रति नरेन्द्रस्य मनसि प्रगाढा भक्ति आसीत्। तथागतम् अन्तरेण स अनकदा सोत्साह भाषते स्म। एकदा बुद्धस्य बोधस्थानभूता बुद्धगया प्रति गन्तव्यम् इति सकल्प नरेन्द्रस्य मनसि उदपद्यत। कालीतारकौ तमनुगन्तु सिद्धौ। तारकेण कथचित् प्रवासद्रव्यस्य व्यवस्थायां सपादितायाम् एप्रिलमासस्य प्रारम्भ त्रितय प्रातिष्ठत। न तैः स्वगमनविषये कोऽपि गृहीताय इत आसीत्। अत आश्रमस्था सर्वे चिन्ताकुला बभूवु। रामकृष्णास्तु एते अवश्य निवर्तिष्यन्ते इति बुद्ध्या निश्चिन्ता आसन्।

लोहयानेन गया गत्वा, तत्र च अवतीर्य, नव पद्भ्या सप्त-मैलमितम् अन्तरम् आक्रम्य बुद्धगया प्राप्नुवन्। तत्र गत्वा नीरव-प्रशान्ते रजनीमुख बोधिवृक्षस्य अधस्तात् त्रयोऽपि ध्यानार्थम् उपाविशन्। एव तेषु उपविष्टेषु सहसैव तथागतस्य स्मरणेन पुलकितगात्र, तद्गुणगरिम्णा च अभिभूतहृदय नरेन्द्र आत्मन अप्रभवन् समीपवर्तिन तारकम् अनिर्वचनीयन कोमलिम्ना आलिलिङ्ग। बुद्धगयाया तत्रस्थस्य महन्तस्य अतिथित्वेन त्रिचतुराणि दिनानि न्युष्य, बुद्धमूर्त्यादिक दृष्ट्वा, पुनरपि सजात रामकृष्णदर्शनेच्छा, महन्तेन अदात-सपादित-प्रवासव्ययव्यवस्था

ते प्रस्थाय गया गता । तत्र विश्वनाथबाबुना परिचित उमेशबाबु नाम सज्जन आसीत् । तस्य निमन्त्रणानुसार तस्य गृह गत्वा सायतन्या सगीत-सभाया ते उपातिष्ठन । नरेन्द्रेणापि कतिचित् गीतानि गीत्वा सामाजिकानाम् आनन्द वृद्धि नीत । प्रमुदितेन यजमानेन सानन्दम् अवशिष्ट-प्रवास-व्यवस्थाया कृताया ते अथ पुनरपि काशीपुर न्यवर्तन्त ।

तेषा निवर्तनोत्तरम् एकदा (९-४-१८८८) भगवान् बुद्ध सभाषणस्य विषयीभूत[10] ।

श्रीरामकृष्ण – (नरेन्द्र ) तत्र (बुद्धगया) गत्वा प्रतिनिवृत्तोऽस्ति ।

महेन्द्र – बुद्धदेवाना मत किम् आसीत् ?

नरेन्द्र – तपश्चर्योत्तर यत् तै अधिगतम्, न तत् ते शब्दै वक्तु समर्था आसन् । केवलम् एतावता केचन तान् नास्तिकान् ब्रुवन्ति ।

श्रीरामकृष्ण (सज्ञया) – कुतो नास्तिक ? न वक्तुम् अशक्नोत् इत्येव । ज्ञायते किं नाम बुद्धत्वमिति ? बोधस्वरूपस्य चिन्तनेन तदाकारभाव, स्वयमेव बोधीभवनम् ।

नरेन्द्र – एवम् । तेषा त्रिविधो भेदोऽस्ति – बुद्ध, अर्हन् तथा च बोधिसत्त्व इति ।

श्रीरामकृष्ण – सर्वा तस्यैव (ईश्वरस्यैव) लीला, एका नवीना लीला । कुत ■ नास्तिक स्यात । यत्र स्वरूपावबोधो भवति, सा अस्तिनास्त्योर् मध्यमा अवस्था ।

नरेन्द्र – ससारिणस् तावत् सर्वास्तित्ववादिन । मायावादिनस्तु नास्तिवादिन । बुद्धानाम् अवस्था एतयोर् उभयोरपि परतरा आसीत् ।

श्रीरामकृष्ण – उभौ एतौ प्रकृतिधर्मौ, 'अस्ति' 'नास्ति' इति च । यत्र सत्यज्ञानम्, तत्र न 'अस्ति,' न वा 'नास्ति' ।

कचित्काल भक्ता तूष्णीम् आसन् । रामकृष्णा पुनरपि वक्तुम् आरभन्त ।

श्रीरामकृष्ण –(ईश्वरविषये) तेषा (बुद्धदेवाना) किं मतम् ?

---

१० श्रीरामकृष्ण-वचनामृत ३ ५७७–५८१

नरेन्द्र –ईश्वर अस्ति, नास्ति वा, इति बुद्धदेवा न किमपि अवोचन्। किं तु आमरण परमकारुणिका आसन्। कस्यचित् पक्षिण जीवनत्राणार्थं ते स्वमास श्येनाय दत्तम्। अहो तेषा वैराग्यप्रकर्ष ! लब्धनिर्वाणेस् ते गृहमागते पुनर्दारादयोऽपि सन्यास ग्राहिता। एतद्विपरीत तु व्यासदेवा ! 'वत्स ! ससारे एव स्थित्वा धर्मम् आचर' इत्युक्त्वा ते शुकदेवा सन्यासग्रहणात् निषिद्धा[11]। (रामकृष्णा तूष्णीं शृण्वन्ति।) नासीत् तेषा सिद्धिषु विश्वास। केवल निर्वाणम् अभ्यलष्यन्त। अहो तत् वैराग्यम् ! 'यदि निर्वाणलाभ न स्यात् तर्हि इहैव शुष्यतु मे शरीरम्' इत्युक्त्वा वृक्षस्य अधस्तात् तपस्यार्थम् आसनबन्धधीरा अभवन्।

किंचिद् अनन्तर रामकृष्णैं सज्ञया पृष्टम्–

'अपि (बुद्धदेवाना) शिरसि जटाजूट आसीत्[12] ?'

नरेन्द्र –न। पिण्डीकृता अनेका रुद्राक्षमाला यथा दृश्येरन्, तथा किमपि तेषा शिरसि दृश्यते।

श्रीरामकृष्ण –नेत्रे ?

नरेन्द्र –समाधिस्थस्य इव।

कचित्काल तूष्णी स्थित्वा रामकृष्णा पुनरपि वक्तु प्रचक्रमिरे।

श्रीरामकृष्ण (नरेन्द्र प्रति)– भवतु। अत्र (मयि) सर्वं वर्तते, एव नु[13] ? आतण्डुलचणकम् ?

नरेन्द्र –ता सर्वा अवस्था अनुभूय भवान् इदानीम् अधस्तने स्तरे तिष्ठति।

---

११ न हि निन्दा निन्द्य निन्दितु प्रवर्तते, किं तु स्तव्य स्तोतुम्' इति न्यायेन इद नरेन्द्र भाषित बुद्धस्तुतिफलक स्यात्, न व्यासनिन्दाफलकम्।

१२ मन्ये रामकृष्णैं कदाचित् समाध्यवस्थाया बुद्धदेवस्य दर्शन कृत स्यात्। अनोऽय प्रश्न।

१३ य बुद्धरूपेण अवतीर्ण स एवाहम् इति कदाचित् रामकृष्णा ध्वनयन्ति।

श्रीरामकृष्ण (महेन्द्रहस्तात् व्यजनम् आदाय)—यथा इद व्यजन पश्यामि तथैव, तथैव, (ईश्वरोऽपि) मया दृष्टोऽस्ति। दृष्ट च दृष्ट च यत् स (ईश्वर), यश्च अत्र हृदये वर्तते, उभौ एका एव व्यक्ति।

नरेन्द्र —हू। 'सोऽहम्।'

श्रीरामकृष्ण —तथापि अस्ति सूक्ष्म व्यवधानम्।

नरेन्द्र (महेन्द्र प्रति)—महापुरुषा आत्मोद्धारानन्तरमपि जीवोद्धारार्थं रक्षिताहङ्कारा देहगत सुखदुःख सहन्ते। भारवाहत्वमेव तत्। किं तु प्रीतिकरम्।

तरुणभक्ता सन्यासे दीक्षयितव्या इति रामकृष्णानाम् इच्छा आसीत्। एकदा ज्येष्ठ-गोपालेन सन्यासिषु वितरणार्थं रुद्राक्षमाला-काषायवस्त्राणि च आनीतानि। तदानीम् 'अकामहतान् एनान् बालान् विहाय क्व वा अन्यत्र सुयोग्या सन्यासिन लभ्येरन्?' इत्युक्त्वा तेष्वेव तानि वितरीतु तं गोपाल आदिष्ट। एकदा साय तान् सर्वान् आहूय रामकृष्णा तान् विधिवत् सचस्वरु। रामकृष्णं एव स्वहस्तेन दत्त-सन्यासदीक्षा[१४] ते प्रसन्ना अभवन्।

## 'क्व मे शरीरम्?'

यत प्रभृति नरेन्द्र औपनिषदेन अद्वैतसिद्धान्तेन सह परिचित अभूत्, तदारभ्य स अद्वैतस्य अपरोक्षानुभवार्थं लालसमानस आसीत्। सर्वदा अशान्तमना स निर्विकल्पसमाधे लाभार्थं जलोद्धृत मत्स्य इव अताम्यत्। तदर्थं तेन नैकदा रामकृष्णा प्रार्थिता आसन्। एषु दिवसेषु प्राय प्रत्यह रात्रौ ध्यानार्थं स दक्षिणेश्वरे पञ्चवटीम् अगच्छत्। अन्यदाऽपि च काशीपुरे साधनाम् अन्वतिष्ठत्। किं तु नाद्यापि तस्य साधना फलेग्रहि आसीत्। नाद्यापि स साक्षात् अनुभवम् अधिष्ठाय 'अहं ब्रह्मास्मि' इति वक्तुम् अशक्नत्। किं तु एकदा सहसैव स क्षण आगत। सायाह्ने

---

१४ Eastern and Western Disciples-विरचित The Life of Swami Vivekananda, पृ १७२

काशीपुरे ज्येष्ठ-गोपालेन सह नरेन्द्र ध्यानाभ्यासपर आसीत्। सहसैव गोपाल नरेन्द्रस्य 'गोपालदा! गोपालदा! क्व मे शरीरम्?' इति आर्तवाक्य शुश्राव।

सत् इत्थम् अभूत्। ध्यानम् अभ्यस्यन् नरेन्द्र सहसा स्वशिरस पृष्ठवर्तिन कस्यापि ज्योतिष अभिज्ञ अभवत्, यथा केनचित् प्रदीप इव स्थापित आसीत्। प्रतिक्षणम् आकारेण, तेजसा च वर्धिष्णौ तस्मिन् ज्योतिषि स्फोटोन्मुखे इव सति तत्रैव नरेन्द्रस्य चित्त व्यलीयत। तदानी तेन यद् अनुभूतम्, तद् अर्थादेव शब्दातीत वर्तते[१५]। तस्या अवस्थात व्युत्थाय वृत्तिम आगच्छतो नरेन्द्रस्य शरीरसञ्ज्ञाया लोप तस्मिन्क्षणे तदवस्थ एव आसीत्। अत एव भानागतमात्र स हस्तपादादिकम् अनुपलभमान 'गोपालदा! गोपालदा! क्व मे शरीरम्?' इति उच्चै. आक्रोशत्।

तत् श्रुत्वैव विस्मयोपहत गोपाल 'ननु अत्रैव। ननु इद ते शरीरम्' इत्युक्त्वा सर्वाङ्गस्तब्ध नरेन्द्र वीक्ष्य भयभीत इम वृत्तान्त रामकृष्णान् निवेदयितु प्रधावित। तेषा कक्ष प्राप्य स तान् गम्भीरमुखवर्णान् अपश्यत। समीपकक्षगतो वृत्तान्त तै ज्ञात इव आसीत्। नरेन्द्रस्य साहाय्यार्थं याचनापर गोपाल ते अवोचन्, 'तिष्ठतु कंचित काल स अस्याम अवस्थायाम्। एतदवस्थाधिगमार्थं बहु आयासितोऽस्मि तेन।'

रात्रौ नव-वादनावसरे प्रकृतिम् आगत नरेन्द्र आत्मान चिन्ताकुलै गुरुबन्धुभि परिवृतम् अपश्यत्। लब्धस्मृति स कस्मिन्नपि अनिर्वचनीये आनन्दह्रदे अवगाढमिव आत्मानम् अविन्दत्। कृतार्थं स्वसमीपागत त स्निग्धदृशा निर्वर्णयन्त रामकृष्णा अवोचन्, 'दर्शितोऽसि तर्हि सर्वं त्वम् अम्बया! अधुना अय ते अनुभवनिधि पुनरपि मञ्जूषाबद्धो भविष्यति, तस्य च कुञ्चिका मत्समीपे स्थास्यति। त्वया कार्यम् अनुष्ठेयम् अस्ति। यदा तु त्व मम कार्यं समाप्ति नेष्यसि, तदा अय निधि पुनरपि उद्घाटितो भवेत्। तदानीम् अधुनेव पुनरपि त्व सर्वं ज्ञास्यसि।'

---

१५ पश्चात् नरेन्द्रेण एताम् अवस्थाम् उद्दिश्य एक 'समाधिस्तोत्र' प्रणीतम् यत्र तस्या अवस्थाया शोभन वर्णन कृतमस्ति।

नरेन्द्रस्य निर्विकल्प-समाधेः अनुभवेच्छा एव रामकृष्णेन पूरिता[१६]। न तु ते तत्रैव तस्य स्थितिम् अन्वमन्यन्त। तस्य हि जन्म लोकोद्धाराय आसीत्। कर्मार्थम् आसीत्। न च सर्वे एव रामकृष्णवत् निर्विकल्पसमाधौ स्वेच्छया गमनागमनं कर्तुं शक्नुवन्ति। अतः नरेन्द्रं सकृत् निर्विकल्प-समाधिम् अनुभाव्य रामकृष्णेन स प्रत्याहृतः। पश्चात् नरेन्द्रम् अन्तरेण रामकृष्णः अन्यान् भक्तान् अवोचन्, 'नरेन्द्रः स्वेच्छयैव इतो निर्या-स्यति। स्वरूपज्ञाने जातमात्रे सति स अत्र क्षणमपि न स्थास्यति। स्वबुद्धिविभवेन, आध्यात्मिकेन च सामर्थ्येन स निखिलं जगत् आमूल-चूलं कम्पयिष्यति। नरेन्द्रस्य स्वरूपानुभवः तस्मात् व्यवहितः तिष्ठतु इति मया जगदम्बा प्रार्थिताऽस्ति। किं तु इदं व्यवधानं तथा नाम सूक्ष्मम् अस्ति, यथा यदा कदापि तत् छिद्येतापि।'

'नरेन्द्रः अन्यान् उपदेक्ष्यति'

जुलै मासस्य अन्तिमेषु दिनेषु रामकृष्णानां व्याधिः तथा अति-भूमिम् अगच्छत्, यथा भाषणं सर्वथा अशक्यम् अभवत्। रामकृष्णाः अनेकदा बालशिष्यान् स्वसमीपम् आहूय वात्सल्यभरेण तेषां मुखानि परामृशन्तः निःशब्दं च स्नेहालापं कुर्वन्तः अतिष्ठन्। प्रायः सर्वाभिः तेषां सर्वोऽपि स्वाभिप्रायः आविष्कर्तव्यः आसीत्। यतः प्रभृति सार्ध-वर्षद्वयात् पूर्वं तैः नरेन्द्रः देव्याः अङ्कितः कृतः, तदारभ्य तेषाम् उत्तराधिकारी निश्चित इव आसीत्। तदाप्रभृत्येव तेषां शारीरिकं बलं ह्रीयमानम् आसीत्। यया ऐश्वर्यां शक्त्या एतावत्पर्यन्तं रामकृष्णानां शरीरम् आश्रित्य कार्यम् अनुष्ठितम्, सा अधुना नरेन्द्रशरीरद्वारा कार्यो-न्मुखी आसीत्। स्वशिष्यवर्गं नरेन्द्रहस्ते समर्प्य ते निश्चिन्ताः सञ्जाता आसन्। एकदा 'नरेन्द्रः अन्यान् उपदेक्ष्यति'[१७] इति लिखित्वा तैः स्वनि-

---

१६ अस्याः महत्त्वपूर्णायाः घटनायाः दिनाङ्कस्तु दुर्दैववशात् विवेका-नन्दचरितेषु नोपलभ्यते। श्रीरामकृष्ण-वचनामृतेऽपि नास्ति अस्याः घटनायाः दिनाङ्कस्य उल्लेखः।

१७ न हि (ईश्वरस्य) आदेशं विना कोऽपि धर्मोपदेशं कुर्यात् इति रामकृष्णानां निश्चितं मतम् आसीत्।

र्णय सोपचारमिव उद्घोषित । अभिलषणीयम् इद पद स्वयम् उपनत सदपि स्वीकर्तु नरेन्द्र उत्सुक नासीत् । रामकृष्णैस्तु 'त्वया अवश्य तत् करणीयम्' इति आज्ञप्तम् । 'मयि वर्तमाना सिद्धय कालेन त्वयि आविर्भविष्यन्ति' इति लोकोपदेशार्थम् आवश्यकीना सिद्धीना विषये तै पूर्वमेव नरेन्द्राय प्रतिश्रुतम् आसीत् । इदानी प्रत्यह साय नरेन्द्रम् आहूय तेषु तेषु आध्यात्मिकेषु विषयेषु, शिष्याणा सग्रहे तेषा च मार्गदिशने तम् उपदेष्टु ते आरभन्त ।

आँगस्ट-मास प्रवृत्य तृतीयाशप्राय व्यतीत । रामकृष्णाना महासमाधि त्रिचतुरदिनान्तरित आसीत् । अस्याम् अवस्थायाम् एकदा रामकृष्णै नरेन्द्र आहूत । उपागत तम् अनिमेष प्रेक्षमाणा रामकृष्णा गभीरे समाधौ अमज्जन् । इतो विद्युत्प्रवाहमिव कमपि शक्त्योघम् आत्मनि प्रविशन्त नरेन्द्र अन्वभवत्, सहसा च स वाह्यसज्ञाशून्य अभवत् । यदा नरेन्द्र पुनरपि प्रकृतिम् आपन्न, तदा स रामकृष्णान् रुदत अपश्यत् । तेन च विस्मितेन एतद्गत पृष्टा ते अवोचन्, 'अयि नरेन् ! अद्य मया निज सर्वस्व तुभ्य प्रदत्तम् अस्ति। अधुना अह कश्चित् 'फकीर'[18] सवृत्तोऽस्मि । मया अद्य त्वयि सक्रान्ताया शक्तेर् वशात् त्वया महान्ति कार्याणि अनुष्ठास्यन्ते । तदुत्तरमेव यत आगतोऽसि तत्र निवर्तिष्यसे ।' अनेकानि वर्षाणि अश्रान्त कठोर च परिश्रम्य, तीव्र च तप आस्थाय रामकृष्णै य आध्यात्मिको निधि अधिगत आसीत्, स सर्वस् तै स्वेच्छया नरेन्द्रे सक्रमित । अस्त गच्छता सवित्रा हुताशने इव निज तेज निहितम् । कालिदासेन सदभविशेषे उक्तौ तेजोद्वयस्य युगपद् व्यसनोदयौ अत्रापि अर्थान्तरेण समपद्यताम् । अत्रापि च केनाप्यर्येन वर्धमान-परिहीनतेजसौ देवतावतारौ[19] जनता अपश्यत् ।

---

१८ अकिञ्चनो भिक्षुक ।

१९ आत्मन अवतारत्व रामकृष्णै स्वमुखेन अनेकवारम् उक्तम् आसीत् । तेषा निर्याणात् दिनद्वयपूर्वं शय्यासमीपस्थ नरेन्द्र अचिन्तयत्, "यदि मुमूर्षव वेदनापीडिताश्च एते अद्य 'अहम् ईश्वर. अवतीर्णोऽस्मि' इति प्रतिजानीयु, अह तेषाम् अवता

महासमाधि.

पञ्चदशो दिनाङ्क प्राप्त । रामकृष्णाना वेदना तीव्रतराः अभवन्। प्राप्तोऽपि वैद्य न किमपि कर्तुम् अशक्नोत् । सायंकाले रामकृष्णा. श्वासकृच्छ्रेण पीडिता अभवन् । सहसा ते नमपि अपूर्वं समाधिं प्राविशन्। केचित् भक्ता रोदितुं प्रवृत्ता । मध्यरात्रे अतिक्रान्ते प्रकृतिं प्रत्यापन्ना रामकृष्णा 'क्षुधितोऽस्मि' इत्युक्त्वा किंचिदिव काञ्जिकाम् अभक्षयन् । ततश्च किंचिदिव लब्धारामा ते पञ्चषं उपधानं आत्मानम् अवष्टभ्य उपविष्टा सन्त क्षीणस्वरेण नरेन्द्रम् अन्तिमम् उपदेशं सम्प्रादु । तदनन्तर कालीनाम त्रि उच्चार्य ते शनैं शय्यायाम् अशेरत । ततश्च एकवादनोत्तर मिनिटद्वये जाते (१६-८-१८८६) तेषां रोमोद्गम अभवत् दृष्टि नासाग्र स्थिरा अभवत्, अपुनरागमनाय च रामकृष्णा महासमाधिं प्राविशन् ।

नरेन्द्रप्रभृतिश्च भक्तगण अनाथ संवृत्त. ।

* * *

---

(७९ पृष्ठतः)

करिष्यामि।" एवं चिन्तयत्येव नरेन्द्र रामकृष्णा तदभिमुखीभूय यत्नम आस्थाय स्पष्टम् ऊचु, 'अयि वत्स, नरेन्द्र अद्यापि न प्रत्येषि ? य राम अभूत, यश्च कृष्ण, स एव अधुना अत्र शरीरे रामकृष्ण सजातोऽस्ति–न तु तव वेदान्तमतानुसारेण'। एतत् श्रुत्वा आत्मन सशयात्मत्वनिमित्त नरेन्द्र लज्जाविलीन, पश्चात्तापदग्धश्च अभवत् ।

# १. परिव्राजकस्य भारतभ्रमणम् (पूर्वार्धम्)

अस्तमिते सूर्ये वनान्ते वर्तमानाना पथिकाना या दशा भवति श्रीरामकृष्ण-परमहसेषु निजधाम गतेषु ता दशा तेषा भक्तजन आपन्न । कचित्काल स तमश्छन्नदृष्टि, किंकर्तव्यविमूढश्च अभवत। अपेक्षितमपि रामकृष्णाना निर्याण भक्ताना पुरत 'अत किम् ?' इति महत् प्रश्न-चिह्नम् इव उपास्थापयत्। 'सुहृद सर्वभूताना मातर पितर प्रभुम्' श्रीरामकृष्ण निर्वाणप्राप्तम् अवलोक्य न केवल बालशिष्या, गृहस्थाश्रमिणोऽपि अनाथमिव, नष्ट-सर्वस्वमिव च आत्मानम् अमन्यन्त। क इदानीम् अस्माकम् अश्रूणि प्रमार्क्ष्यति ? क सान्त्वनाहस्तेन स्प्रक्ष्यति ? क अमृतवर्षिभ्या नयनाभ्या द्रक्ष्यति? क स्नेहपूर्णै मुक्तिवचोभि आश्वासयिष्यति ?

कालेन तु विवेक जजागार। व्यक्तिरूपेण प्रभूत्वाऽपि शक्तिरूपेण, सत्यारूपेण, आन्दोलनरूपेण रामकृष्णा चिरस्थायिनो भवितार आसन्। 'किं पार्थिवरूपेण नष्टा अपि रामकृष्णा चिन्मयरूपेण सर्वव्यापिन न सन्ति? अधुना प्राणान् पणीकृत्यापि तेषाम् उपदेशस्य परिपालनम् अस्माक कर्तव्य वम नास्ति किम् ?' इति ते अनुयायिन अचिन्तयन्। 'भगवत्-प्राप्त्यर्थं कामिनीकाञ्चनस्य आत्यन्तिक परित्याग' रामकृष्णानाम् उपदेशस्य सार आसीत्। स तेषा मूलमन्त्र आसीत्। तम् इम मन्त्रम् आचरितुम्, कठोरा तपस्याम् अनुष्ठातु युवशिष्यै व्यवसितम्। किं तु कथ नाम स्वगृह स्थित्वा इद कर्तुं शक्यम् आसीत् ? रामकृष्णाना निर्वाणोत्तर बहवो युवशिष्या अनिच्छया स्व स्व गृह निवृत्ता आसन्। किं तु केषाचित्[1] स्वगृहमेव नासीत्। केचिच्च स्वगृह निवर्तितु नैव सिद्धा अभवन्।

---

१ ज्यष्ठ गोपाल – लाटू-तारकाणाम्।

किं च गृहस्थभक्ता अपि तादृशं किंचित् स्थानम् अपेक्षन्त, यत्र आगत्य कंचित्कालं संसारतापं विस्मृत्य भजनपूजनादिकं कर्तुं शक्येत, मनःशान्तिश्च लभ्येत । अतः श्री सुरेन्द्रनाथ-नेतृत्वे भक्तैः एतदर्थं गृहग्रहणं निश्चित्य वराहनगरे एकं गृहं भाटकेन[२] स्वीकृतम् । श्रीरामकृष्णानां पार्थिवदेहोपरि अन्तिमाः संस्काराः यत्र अभूवन्, तस्मात् श्मशानात् इदं गृहं न बहुदूरम् आसीत् । यैः उदारमनस्कैः सुरेन्द्रनाथैः काशीपुरीयस्य उद्यानगृहस्य भूयिष्ठः अर्थभारः स्वेच्छया सोढः आसीत्, त एव इतः परमपि तथैव कर्तुं सिद्धता प्रादर्शयन्[३] । काशीपुरीयस्य उद्यानगृहस्य भाटक-कालावधौ समाप्ते युवभक्ताः अस्मिन् वराह-नगरीये गृहे निवासार्थम् अगच्छन्[४] । इदमेव गृहं पश्चात्

वराहनगर-मठः[५]

इति नाम्ना प्रख्यातिं जगाम । काशीपुरीयात् उद्यानगृहात् रामकृष्णानां वस्तूनि[६] कनिष्ठ-गोपालेन तत्र आनीय स्थापितानि । अस्य गृहस्य विभूतिः ( ! ) वर्णनीयाऽस्ति । द्विभूमिकम् इदं गृहं पुराणम् आसीत् । तस्य भित्तयः पातोन्मुख्यः आसन् । भूमिः आर्द्रा आसीत् । समन्तप्रदेशः जनशून्यः आसीत् । सर्प-सरटादिभिः गृहम् अशून्यम् आसीत् । तस्य एकस्मिन् पार्श्वे गुल्मघनं गहनवनम् आसीत् । पृष्ठे शैवलेन आकण्ठपूर्णः सदाहरितश्च जलाशयः आसीत्, यत्र दंश-मशकानां काऽपि न्यूनता नासीत् । किं च भूताविष्टम् इदं गृहम् इत्यपि जनानां किंवदन्ती श्रूयते

---

२ भाटकं प्रतिमासम् एकादश रूप्यकाणि आसीत् ।

३ आदौ तावत् सुरेन्द्रनाथमहोदयाः अस्य मठस्य अर्थे प्रतिमासं ३० रूप्यकाणि प्रायच्छन् । मठवासिनां संख्यायां वृद्धायां तु ५०–६० रूप्यकाणि, ततोऽग्रे च १०० रूप्यकाणि अपि ते दातुं प्रवृत्ताः । युक्तमेव एतदौदार्यं निमित्तं श्रीरामकृष्ण-वचनामृतकारैः (३ ६४९) ते भूरि प्रशंसिताः सन्ति ।

४ प्रायः सेप्टम्बर-मासान्ते ।

५ वडानगर इत्यपि (अपभ्रंश)प्रयोगः ।

६ शय्या, वस्त्राणि, पात्राणि इत्यादीनि ।

स्म । एवगुणविशिष्टे स्याने मठस्थापना अभूत् । सर्वत पूर्वं ज्येष्ठगोपाल. तत्र निवस्तुम् आगत । मठस्थापनाकाले लाटू, योगीन्द्र, काली तथा च राखाल इत्येते माताजीभि सह वृन्दावन गता आसन्। तारकोऽपि तत्रैव गत आसीत् । पश्चात् ततो निवृत्तास्ते क्रमेण न्यूनाधिकेन वर्ष-प्रायेण कालेन मठम् आगत्य तन्निवासिन अभूवु । शरद्, शशी, निरञ्जन, बाबूराम तथा च नरेन्द्र इत्येते आदौ तावत् क्षमतानुसारेण आवश्यकतानुसारेण च, मठ तथा च गृहे इत्युभयत्र उषित्वा गतागत कुर्वन्ति स्म । गच्छता कालेन तु तेऽपि यथाक्रम मठवासिन अभवन् । तदनन्तर शारदाप्रसन्न तथा च सुबोध, अन्ते च गङ्गाधर, हरि तथा च तुलसी इत्येते मठम् अध्यवसन् । गृहस्थभक्ता नित्य मठम् आगच्छन्ति स्म । तत्रत्ये च कार्यकलापे सम्मिलन्ति स्म । अथ पश्चात् प्रथितस्य 'रामकृष्ण-सघ'स्य प्रारम्भ ।

### मठजीवनम्

अत्र स्थिता युवान अपरिग्रहा आसन् । मठे ते प्राय कौपीन-मात्रधारिण अभवन। रज्ज्वाम् एका धोती तथा च प्रावारक अतिष्ठत्, य कोऽपि कार्यवशात् नगर गन्तुम् ऐच्छत स इद सभ्य वस्त्रयुगलम् उपायुङ्क्त, प्रतिनिवृत्तश्च पुन कौपीनधर अभवत्। कटमात्रा तेषा शय्या आसीत्, स्वीयो हस्तश्च उपधानम। अन्न सर्वदा अलभ्यतैव इति न। किंतु न ते अन्नोपजीविन इव आसन् । भक्त्युन्मादमत्तास् ते भजन-पूजनोपजीविन इव आसन् । शरीरम् अनवेक्ष्य, रामकृष्णोपदिष्ट जीवितोद्दिष्ट साधनीयमेव इति तेषा कठोरो निर्धार आसीत् । अनेकप्रकारिका साधनाम् आप्रात आसाय तत्र ते अन्वतिष्ठन् । तत्र ध्यानम् आसीत्, केचित् मठे* अकुर्वन्, केचित् गङ्गातीरे केचिच्च श्मशानेऽपि । जप आसीत । सकीर्तनम् आसीत् । शास्त्रचर्चा अभवत्, यत्र पौरस्त्य-पाश्चात्यानि इत्युभयानि मतानि अचर्च्यन्त । गीता उपनिषद् योगवासिष्ठादिकाना वाचनम् अभूत् । सायकाले आरात्रिकम् अभवत्, यत्र वाराणस्या गीयमान –

---

* मठे ध्यानार्थम् एक कक्ष सुरक्षित आसीत् ।

जय शिव ॐकार भज शिव ॐकार
ब्रह्मा विष्णु सदाशिव हर हर हर महादेव

इति आरात्रिकगीतमपि गम्भीरेण रवेण अगीयत।

मठवासिनां नेतृत्वं स्वभावत एव नरेन्द्रे आपतितम्। तस्मिन् काले तस्य बान्धवैः प्रचालितः तस्य गृहविभाजनविषयकः अभियोगः न्यायालये प्रावर्तत। तन्निमित्तं नरेन्द्रस्य कलिकाताबराहनगरयोः गमनागमनं कर्तव्यम् अभूत्। मठवासिनाम् अवेक्षणम्, तेषां शङ्कानिरसनम्, तेषां प्रेरणम्, प्रोत्साहनम्, संक्षेपतः तेषां मार्गदर्शनं तस्य गुरुदेवादिष्टं कार्यम् आसीत्।

स नित्यशः स्तोत्राणि पठति स्म। तस्य मुखात् कदाचित्

बाल्ये दुःखातिरेको मललुलितवपुः स्तन्यपाने पिपासा
नो शक्तश्चेन्द्रियेभ्यो भवगुणजनिता जन्तवो मां तुदन्ति।
नानारोगादिदुःखाद् रुदनपरवशः शंकरं न स्मरामि
क्षन्तव्यो मेऽपराधः शिव शिव शिव भो श्रीमहादेव शंभो॥

इत्यादिकम् 'अपराधभञ्जनस्तोत्रं' वा, कदाचित्

वेदान्तवाक्येषु सदा रमन्तः, भिक्षान्नमात्रेण च तुष्टिमन्तः।
अशोकमन्तःकरणे चरन्तः कौपीनवन्तः खलु भाग्यवन्तः॥

इत्यादिकं 'कौपीनपञ्चकं' वा, कदाचित्

मनोबुद्ध्यहंकारचित्तानि नाहम्, न च श्रोत्रजिह्वे न च घ्राणनेत्रे।
न च व्योम भूमिर्न तेजो न वायुः, चिदानन्दरूपः शिवोऽहं शिवोऽहम्॥

इत्यादिकं 'निर्वाणषट्कं' वा, कदाचिच्च

न गतिर्विद्यते नाथ त्वमेकः शरणं प्रभो।
पापपङ्के निमग्नोऽस्मि त्राहि मां मधुसूदन॥
मोहितो मोहजालेन पुत्रदारगृहादिषु।
तृष्णया पीड्यमानोऽस्मि त्राहि मां मधुसूदन॥

इत्यादिकं मधुसूदनस्तोत्रं वा श्रुत्वा तस्य मधुरेण कण्ठेन, भावेन च आविष्टाः श्रोतारः स्तब्धमूका इव भवन्ति स्म।

क्रमशः मठवासिनां तेषां पाटवं स्वभावत एव स्फुटम् अभवत्।

ते आगत्य बालान् गृहं नेतुं प्रायतन्त। नरेन्द्रः नायकत्वात् तेषां कोपभाजनम् अभवत। तेषां यथाकथमपि समाधानं तेन कर्तव्यम् आसीत्। नरेन्द्रनेतृके तस्मिन् कठोरे मठजीवितेऽपि विनोदः बहिष्कृतो नासीत्। कदाचित् मुखे रसगोलकं धृत्वा नरेन्द्रः समाधिस्थ इव निस्पन्दोऽभवत्, यथा रामकृष्णः। कश्चिच्च अन्यः तम् अधारयत् नाम[८]। कदाचित् कश्चित् मठवासी ईश्वरस्य विरहेण आर्तो नाम भूत्वा आत्महत्यार्थं छुरिकाम् अयाचत। नरेन्द्रः कृतकगाम्भीर्येण अवदत्, 'ननु समीप एव छुरिका वर्तते। किञ्चिदिव प्रसार्य तावत् हस्तम्'।

एवम् आसन् ते दिवसाः[९]।

**अन्तपुरे सन्यासप्रतिज्ञा**

मठस्थापनाद् अनन्तरं द्वित्राः मासाः व्यतीयुः। डिसेम्बर-मासे बाबूरामस्य मात्रा निमन्त्रितास्ते सर्वे अन्तपुराख्यं तस्य ग्रामं गत्वा कानिचित् दिनानि तत्र अवसन्। सोऽयं निवासः तेषां संघवृत्तेः अनल्पाय पोषणाय अभवत्। तत्र ध्यान-भजन-प्रार्थनादिकः नित्यः कार्यकलापः आसीत्। नरेन्द्रः अनेकदा रामकृष्ण-विषयिणीः कथाः अकथयत्। नरेन्द्रस्य स्फूर्तिस्फारैः शब्दैः श्रोतॄणाम् अन्तःकरणानि वैराग्योत्कटानि भवन्ति स्म। एकदा रात्रौ अग्निसमीपे ध्यानोत्तरं नरेन्द्रः ख्रिस्तचरितं न्यवेदयत। निवेदनोत्तरं जगद्धिताय स्वार्थस्य अत्यन्तत्यागरूपं ख्रिस्तत्वम् आत्मनि भावयितुं तेन स्वे गुरुबन्धवः प्रचोदिताः। नरेन्द्रस्य ज्वलद्भिः शब्दैः उद्दीपितास्ते उत्थाय अग्निदीप्तमुखाः ईश्वरम् अन्योन्यं च साक्षीकृत्य सन्यासव्रतं प्रतिज्ञातवन्तः। सा 'ख्रिस्मस ईव्ह' (२४ डिसेम्बर) आसीत् इति पश्चात् तैः अवबुद्धम्। तारकेश्वर-शिवस्य यात्रां कृत्वा ते सर्वे 'सन्यासिनः' वराहनगरं न्यवर्तन्त। वराहनगरे केनचित् कालेन ते विधिवत् विरजेष्टिपूर्वकं सन्यासदीक्षां[१०] गृहीतवन्तः। आमरणं ब्रह्मचर्यपालनम्, अपरिग्रह

८ श्रीरामकृष्ण वचनामृत ३ ६५७

९ श्रीरामकृष्ण वचनामृत ३ ६८२

१० अयं संस्कारः १०–५–१८८७ दिनाङ्कात् अनन्तरं कदाचित् समपद्यत इति भाति। यतः तावत्कालपर्यन्तेषु श्रीरामकृष्ण वचनामृतगतेषु वृत्तान्तेषु अस्याः घटनायाः निर्देशो न विद्यते। 'about 1888 or 1889' इति रोमाँ रोलाँ।

च प्रतिज्ञाय तैः स्वजीवितम् ईश्वरसाक्षात्काराय समर्पितम्। पूर्वाश्रम-जीवितं कार्त्स्न्येन विस्मर्तुमिव अन्यैः सर्वैः पूर्वं स्वं नाम परित्यज्य नवीनं गृहीतम्", तच्च आमृत्यु धृतम्। नरेन्द्रेण तु स्वीयासु भारत-यात्रासु अज्ञाततानिमित्तं नैकानि नामानि (स्वामी विविदिषानन्द, सच्चिदानन्द इत्यादीनि) स्वीकृतानि। यत्तु 'विवेकानन्द' इति तस्य नाम पश्चात् सर्वत्र रूढम् अभवत, तत् तेन अमेरिका-गमनावसरे खेत्रीनरेशाना प्रार्थनाम् अङ्गीकृत्य स्वीकृतम।

नरेन्द्रस्य मनसि द्वयोः विचारप्रवृत्त्योः परस्परसंघर्षं सदा अविद्यत। एकतः तस्य मनः निर्विकल्पसमाधिं प्रति, स्वानन्दसुखं प्रति अधावत्। सा तस्य स्वरसप्रवृत्तिः आसीत्। अन्यतश्च तस्य जगत्सेवाऽपि कर्तव्या आसीत्, न केवलं गुर्वाज्ञया, किं तु स्वरसप्रवृत्त्यैव। जनतारूपेण आविर्भूतस्य जनार्दनस्य सेवैव ईश्वरसेवा इति तेन गुरूपदेशस्य सारः गृहीतः आसीत्। एताभ्यां प्रवृत्तिनिवृत्तिभ्याम् उभयथा आकृष्यमाणो नरेन्द्रः अनेकदा अस्वस्थचित्तः आसीत्। प्रतिबद्धः सकृदनुभूतनिर्विकल्पसमाधिः स अशान्तः आसीत्। एकदा (७–५–१८८७) स महेन्द्रनाथ-गुप्तान् अवदत्, 'एवं भाति, नास्ति ईश्वरो नाम कश्चित्। कतिवारं नु प्रार्थितम्, किं तु नास्ति उत्तरम्। कियन्ति नु दर्शनानि अनुभूतानि! कियन्तो नु देदीप्यमाना सुवर्णाक्षरा मन्त्रा दृष्टाः! कियन्ति नु कालीरूपाणि अन्यानि च रूपाणि साक्षात्कृतानि! तथापि शान्तिर् नास्ति"!' ईश्वरप्राप्त्यर्थं

११ नवीनानि नामानि एवम् आसन्।

| | | | |
|---|---|---|---|
| राखाल | = स्वामी ब्रह्मानन्द | योगीन्द्र | = स्वामी योगानन्द |
| बाबूराम | = „ प्रेमानन्द | निरञ्जन | = „ निरञ्जनानन्द |
| शशी | = „ रामकृष्णानन्द | हरि | = „ तुरीयानन्द |
| लाटू | = „ अद्भुतानन्द | शारदाप्रसन्न | = „ त्रिगुणातीतानन्द |
| तारक | = „ शिवानन्द | काली | = „ अभेदानन्द |
| शरद् | = „ शारदानन्द | गङ्गाधर | = „ अखण्डानन्द |
| ज्येष्ठ-गोपाल | = „ अद्वैतानन्द | सुबोध | = „ सुबोधानन्द |
| तुल्सी | = „ निर्मलानन्द | हरि-प्रसन्न | = „ विज्ञानानन्द |

१२ श्री रामकृष्ण-वचनामृत ३ ६७९

प्रायोपवेशन-विचारोऽपि अन्तरान्तरा तस्य मनसि उत्पद्यते स्म[13]। रामकृष्णे अन्येषां गुरुबन्धूनां भारः नरेन्द्रे निक्षिप्त आसीत्। 'इयमपि मम बन्धनकारिणी काचित् सुवर्णशृङ्खला' इति कदाचित् सखेदं स अमन्यत।

### परिव्रजन-परंपरा

अस्याम् अवस्थायां तीर्थयात्रा कर्तव्या, भारतं साक्षात्कर्तव्यं इति विचारः तस्य मनसि उदैत्। तीर्थयात्रा भारतीयानां रक्तगता अस्ति। भारतीये इतिहासे क्वचिदेव स कालः स्यात्, यदा परिव्राजकाः, यायावराः, बहूदकाः वा नासन्। 'चरैव' इत्यादेशं परिपालयन्त एते परिव्राजकाः यत्रसायंगृहाः, यत्रक्वचनशायिनः, यदृच्छालाभसंतुष्टाश्च आसन्। तेषां 'शय्या भूमितलं दिशोऽपि वसनम्' आसीत्। एकस्थाननिवासजनितां तद्गताम् आसक्तिं ते परिहर्तुम् ऐच्छन्। श्रीशंकराचार्यैः वेदान्तमतप्रसारार्थं समग्रो भारतः पादाक्रान्तः कृतः। श्रीरामदासस्वामिभिरपि पद्भ्यां सचर्यं भारतीयो जनः साक्षाद् अवलोकितः। वराहनगर-मठवासिनां संन्यासिनां मनस्यपि तीर्थयात्रेच्छा उदैत्। श्रीरामकृष्णानां निर्याणोत्तरं केचन शिष्याः माताजीभिः सह प्रागेव वृन्दावनं गता आसन्। ततो निवृत्तः अभेदानन्दः (काली) प्रेमानन्द शारदानन्दाभ्यां (बाबूराम शरद्भ्याम्) सह पुरीं गतः। त्रिगुणातीतानन्दः (शारदाप्रसन्न) पद्भ्यां वृन्दावनं प्रस्थितः, कंचिद् अन्तरं गत्वा तु वराहनगरं प्रतिनिवृत्तः। अखण्डानन्दः (गङ्गाधर) हिमालयम् अतिक्रम्य त्रिविष्टपं गतः। ब्रह्मानन्दः (राखाल) नर्मदां गन्तुकाम आसीत्। (एकः रामकृष्णानन्दस्तु (शशी) क्वापि अगत्वा मठे एव अतिष्ठत्। सद्गुरुपादुकाद्वयमेव तस्य सर्वस्वम् आसीत्।) नरेन्द्रोऽपि निर्गन्तुम् ऐच्छत्। तेन स्वबलपरीक्षा भवेत्, स्वातन्त्र्यं लभ्येत, निर्भयत्वम् अधिगम्येत, नवानुभवाः प्राप्येरन्, गुरुबन्धवश्च स्वावलम्बनं शिक्षेरन् इति सोऽचिन्तयत्।

### भ्रमणारम्भ

एवं चिन्तयित्वा प्रस्थाय स वाराणसीम् अगच्छत्[14]। प्रेमानन्द

---

१३ श्रीरामकृष्ण वचनामृत ३ ६५१, ६७८

१४ ततः पूर्वं स वैद्यनाथम्, सिमूलतलम्, अन्तपुरं च गत्वा निवृत्त आसीत्।

तथा च फकीरबाबु तेन सह अगच्छताम्। तत्र स सदाध्यानरत त्रैलिङ्ग-स्वामिनम् अपश्यत्। विख्यात पण्डिततापस भास्करानन्दमपि द्रष्टु सः अगच्छत्। सम्भाषणप्रसङ्गेन कामिनीकाञ्चनस्य आत्यन्तिक त्याग. शक्यो वा न वा इति विषये नरेन्द्रस्य तेन सह वाद अभूत्। 'न' इति भास्करानन्दस्य मति आसीत्। देवालयबहुले साधुप्रचुरे श्रीविश्वनाथ-सन्निधि पवित्रिते गौतमबुद्ध-शङ्कराचार्ययो उपदेशपूते तस्मिन् तीर्थे सप्ताह रमित्वा नरेन्द्र वराहनगर प्रतिन्यवर्तत[१५]।

कंचित् काल वराहनगर-मठे उषित्वा नरेन्द्र पुनरपि प्रातिष्ठत। प्रथम स वाराणसीम अगच्छत्। तत्र प्रमदादास मित्र इत्याख्येन पण्डि-तेन सह तस्य मैत्री अभवत्। तत्र तत्र तीर्थानि अटन् नरेन्द्र शास्त्रार्थम् अन्तरेण तस्मै पत्राणि प्रेषयामास। वाराणसीत स लखनौ ययौ यत्र प्रासादोद्यानादीना दर्शने तस्य मन अरमत। लखनौत स आग्राम् अग-च्छत्। तत्रस्य दुर्ग (fort) मोगलविभवस्य उपस्थापनेन तस्य इतिहासे कुतूहलम् अजागरयत्। तत्रस्य हस्तकौशल्य त व्यस्मापयत्। ताजमहाल दृष्ट्वा अस्य यथोचित-निरीक्षणार्थं न्यूनतोन्यून षण्मासा आवश्यका इति सोऽवदत्।

आग्रात प्रस्थित स वृन्दावनम् अगच्छत् (ऑगस्ट १८८७)। अन्तिमा ५० किलोमीटरा एक-द्व्युपुस्तकमात्रपरिग्रहेण दण्डकमण्डलुधरेण तेन पद्भ्यामेव आक्रान्ता। किलोमीटर-त्रयावशिष्टे वृन्दावने स कंचित् पुरुष 'चिलम्'त धूम्रपान कुर्वाणम् अपश्यत्। अध्वश्रमखिन्नो नरेन्द्र धूम्रपानेन आत्मान नवीकर्तुम् इच्छन् तस्मात् 'चिलम्'त द्वित्रान् फूत्कारान् कर्तुम् ऐच्छत्। तस्य प्रार्थना श्रुत्वा तु 'ननु अह मलवाहो[१६]'-

---

१५ वाराणस्याम् एकदा वानरै अनुसृत नरेन्द्र 'तिष्ठ! सदैव पशून् अभिमुखीभव' इति कस्यचित् वृद्धस्य सन्यासिन शब्दान् श्रुत्वा धैर्यम् आहार्य अतिष्ठत्, त च निर्भयस्थित दृष्ट्वा वानरा अपा-क्रामन्। पश्चात् न्यूयॉर्के इम प्रसङ्गम् आख्याय विवेकानन्द-स्वामिन एव तस्य तात्पर्यम् ऊचु, 'So face Nature! Face ignorance! Face illusion! Never fly!'

१६ भङ्गी, a sweeper

ऽस्मि,' इति भयचकितेन तेन पुरुषेण उक्ते नरेन्द्र पुनरपि मार्गम् आक्रमितु प्रवृत्त । कचिद् अन्तर गत्वा तु 'धिक् ! गृहीतसन्यासव्रतोऽपि नाहम् अद्यापि वर्णाश्रमादिकृतान् सस्कारान् अतीत,' इति विचिन्त्य पश्चात्तप्त पुनरागत्य, अनिच्छन्त त पुरुषम् अनादृत्य, तस्य 'चिलम्' त. धूम्रपानम् अकरोत् । एत प्रसङ्गम् आख्याय एकदा नरेन्द्र अवोचत, 'सकृद्-गृहीतसन्यासेन पुरुषेण प्रतिक्षणम् अह वर्णाश्रमादिकृतेभ्य. सस्कारेभ्यो मुक्तो वा न वा इति जागरूकेण परीक्षितव्यम्" । न कोऽपि अवज्ञया द्रष्टव्य, यत सर्वेऽपि ईश्वरस्य सतानभूता इत्यह तदा अशिक्षे ।'

कौपीनवन्त खलु भाग्यवन्त !

वृन्दावन प्राप्तस्य नरेन्द्रस्य तत्र सवृत्ताना गोपालकृष्णस्य बाललीलाना स्मरणेन कोऽपि भक्तिपूर उल्ललास । गोवर्धनपर्वत प्रदक्षिणीकुर्वन् स 'अयाचितोपनतम् अन्नमेव भोक्ष्ये' इति प्रतिजज्ञे । प्रथम एव दिने तु माध्याह्नावसरे स क्षुधार्दितो बभूव । क्षते क्षार क्षिपन्निव पर्जन्योऽपि वृष्टया तम् आर्द्रीचकार । तथैव अग्रतो गच्छन्त व्याकुल त पश्चात् कोऽपि पुरुष आहूय स्थातु प्रार्थयाचक्रे । अधिकजिज्ञासया पलायितु प्रवृत्त नरेन्द्र क्रोशार्धम् अनुधाव्य स पुरुष तम् आसादयत्, स्वानीत च अन्न स्वीकर्तु साग्रह प्रार्थयाचक्रे । अन्ते नरेन्द्रेण अन्नस्वीकारे कृते स पुरुष शब्दमपि अनुक्त्वा न्यवर्तत । ईश्वरस्य भक्तवात्सल्येन भिन्नाश्रु नरेन्द्र ततो राधाकुण्ड जगाम । तत्र एकमात्र कौपीन क्षालयित्वा, शोषणार्थं च स्थापयित्वा स्नानार्थं स जलम् अवततार । यदा तु स्नातोत्थित प्रत्याजगाम, तदा वृक्षस्थितेन केनचित् वानरेण अपहृत कौपीन ददर्श । बहुकाल प्रतीक्ष्यापि कौपीनस्य प्रत्यर्पणपराङ्मुख वानर दृष्ट्वा स्थानदेवतायै राधायै क्रुद्ध सन् प्रायोपवेशनमतिर् भूत्वा नरेन्द्र

१७ पठ्यता 'न मे मृत्युशङ्का न मे जातिभेद, पिता नैव मे नैव माता न जन्म' (आत्मषट्कम्), 'नाह मनुष्यो न च देवयक्षौ, न ब्राह्मणक्षत्रियवैश्यशूद्रा । न ब्रह्मचारी न गृही वनस्थो, भिक्षुर्न चाह निजबोधरूप' (हस्तामलकस्तोत्रम्), 'जातिनीतिकुलगोत्रदूरग ब्रह्म तत् त्वमसि भावयात्मनि' (विवेकचूडामणि)।

अरण्य प्राविशत्। वनान्त प्रविष्ट तु त नवशाटिकाहस्त कश्चित् पुरुष उपगम्य तस्मै ता शाटिका किंचिद् अन्न च समार्पयत्। तत् स्वीकृत्य पूर्व-स्थान निवृत्त नरेन्द्र पुनरपि तस्मिन्नेव स्थाने स्थित कौपीन ददर्श, यत्र तेन तत् स्थापितम् आसीत्।

वृन्दावनात् हरद्वार प्रस्थितो नरेन्द्र मध्येमार्ग हाथरसे अतिष्ठत्, यत्र स प्रथमशिष्याणाम् अन्यतमम् अलभत । नरेन्द्र स्थानके भूम्याम् उपविष्ट आसीत्। त दृष्ट्वा शरच्चन्द्र-गुप्तो नाम तत्रत्य स्थानकाधिकारी उपगम्य नरेन्द्रस्य आध्यात्मिकेन तेजोवलयेन आकृष्ट त स्वगृह निनाय, तस्य च यथोचितम् आतिथ्य चक्रे । तत्र शरच्चन्द्रद्वारा अनेके तत्रस्था वङ्गीयजना[१८] नरेन्द्रस्य परिचिता अभवन्। अथैकदा 'किमिति भवान् एव सचिन्त इव दृश्यते ?' इति शरच्चन्द्रेण पृष्ट नरेन्द्र प्रत्यवदत्, 'अयि वत्स! मम गुरुणा एक महत् कार्यं मयि निक्षिप्तमस्ति। निखिलाया मातृभूमे पुनर्जन्म प्रदातव्यमस्ति। एकत अध्यात्म नितरा परिक्षीणमस्ति, अन्यतश्च दारिद्र्य सर्वत्र नरीनृत्यते । भारतेन निजेन आध्यात्मिकेन बलेन जगद्विजेत्रा भवितव्यम्। न जाने अल्पबलोऽह कथ मयि निक्षिप्त कार्यभारम् अनुष्ठातु पारयेयम।' एतच्छ्रुत्वा 'स्वामिन्! एष मया आत्मा तुभ्य समर्पित । किं करवाणि?' इति तत्क्षण शरच्चन्द्र अवदत्। 'अपि त्व भिक्षापात्रम आदाय गृहात् गृह भिक्षितुम उद्यतोऽसि ?' इति नरेन्द्रेण पृष्टे 'बाढम्' इत्युक्त्वा भिक्षापात्र गृहीत्वा निर्गत्य शरच्चन्द्र भारवाहानाम् आवास भिक्षार्थम् अगच्छत्।

अथ कतिपयदिवसेषु व्यतीतेषु 'अनुचितम् अस्मादृशाना सन्यासि-नाम् एकत्र स्थाने निवस्तुम्। तत् अनुजानीहि मा गमनाय,' इत्युक्त्वा नरेन्द्र प्रस्थातुम् उद्यत अभवत्। दुखादिन शरच्चन्द्र आत्मान शिष्य-त्वेन स्वीकृत्य सह नेतु प्रार्थयत। प्रथमम् अनुत्सुकोऽपि नरेन्द्र तस्य

१८ नटकृष्ण प्रभृतय । एतद्दिनविषये पश्चात् नटकृष्णेन लिखितम्, 'तेन (स्वामिना) सह आध्यात्मिकान् विषयान अधिकृत्य सतत समापमाणे अस्माभि आयुष शिवनमानि दिनानि नीतानि। तस्य पुण्येन सनिधिना अस्माक क्षुद्रा साम्प्रदायिका अन्ये च कलहा शान्ति नीता ।'

तीव्रेच्छा दृष्ट्वा तस्मै सन्यासदीक्षा दत्त्वा शिष्यत्वेन अङ्गीचकार। तत-उभौ गुरुशिष्यौ हिमालयाय प्रातिष्ठताम्।

सुखोचित शरच्चन्द्र सन्यासिजीवन न सुकरम् इति शीघ्रमेव अजानात्। हिमालययात्रा क्लेशकरी आसीत्। कदाचित् क्षुधातृष्णाभ्या पीडित शरच्चन्द्र नरेन्द्रेण स्वीयेन स्कन्धेन ऊढ। कदाचित् सपादत्राण तस्य उपकरणमपि। कदाचित् स्वप्राणभयमपि निरस्कृत्य तेन शरच्चन्द्र-प्राणा रक्षिता। 'अयि सुहृद! प्रेम-प्रेम प्रेमेति एक शब्द विहाय कथ वा स्वामिन वर्णयितुम् अह समर्थ स्याम,' इति एकदा पश्चात् नरेन्द्रम् अन्त-रेण शरच्चन्द्र अब्रवीत्। एकदा अरण्ये चरन्तौ तौ कानिचिन् अस्थीनि काषायवस्त्रखण्डानि च अपश्यताम्। तानि प्रदर्श्य नरेन्द्र अवोचत, 'पश्य! एष कश्चित् व्याघ्रभक्षित सन्यासी अत्र शेते। अपि भीतोऽसि?' 'न त्वयि सति,' शिष्य झटिति अवादीत्।

हृषीकेशे पापतापहारिण्या मन्दाकिन्या मर्मरश्रवणेन, हिमाच्छादितानां च दूरस्थाना हिमालयशिखराणा दर्शनेन प्रमुदितमानसौ उभौ कानिचित् दिनानि ध्यानप्रार्थनादिभि अनयताम्। नरेन्द्र तत्र कानिचित् अधिकानि दिनानि उषित्वा ततश्च केदारनाथ-बदरीनारायणौ गन्तुम् ऐच्छत्। किन्तु आकस्मिकोपनतया शरच्चन्द्रस्य रुग्णतया स विचार परित्यक्तव्य आसीत्। उभौ पुनरपि हाथरस न्यवर्तताम्। तत्रागतस्तु नरेन्द्र स्वयमेव मलेरिया-रोगेण आक्रान्त अभवत्। ताम् इमा वार्ता श्रुत्वा वराहनगर मठस्था तस्य गुरुबान्धव मठ निवर्तितु साग्रह प्रार्थयाचक्रिरे। तदनुसारेण 'नीरोगमात्रस् त्व वराहनगर-मठम् आगच्छ,' इति शरच्चन्द्रम् आदिश्य नरेन्द्र वराहनगरम् १८८८ खिस्ताब्दस्य अन्ता-वसरे प्राप्नोत्। तत कैश्चिन् मासै नीरोगता प्राप्य शरच्चन्द्र[१९] सेवावृत्ति परित्यज्य वराहनगर-मठम् आगच्छत्। तत्रत्यैश्च मठवासिभि महता आनन्देन स्वागत व्याहृत्य आत्मन अन्यतमत्वेन स अङ्गीकृत-अभवत्। सदानन्द इति च तस्य नाम कृतम्"।

१९ विवेकानन्द-चरितकारा (Eastern and Western Disciples) सदानन्दस्य स्वभाव sweetness, sincerity and manliness इति

वराहनगर-मठे वेदाभ्यास

नरेन्द्रस्य पुनरागमनेन मठवासिन प्रमुदिता अभवन्। नरेन्द्रेण तेभ्य प्रवासवृत्तान्त निवेदित। प्रवासे यत् तेन दृष्टम्, तेन भारतस्य इतिहास तस्य मनश्चक्षुप पुरत साकारीभूत आसीत्। भारतस्य आध्यात्मिकी एकता तेन प्रतीता आसीत्। सर्वम् इद तेन गुरुबन्धुभ्यो निवेदितम्। अत्र मठे नरेन्द्र वर्षप्राय कालम् उवास। अस्मिन् काले तेन गुरुबन्धूना प्रशिक्षणार्थं यतितम्। स्वीय जीवितध्येय तेषु सक्रामयितु प्रयत्ना कृता। हिन्दुधर्मस्य सिद्धान्तान् सम्यग् ज्ञात्वा यथा ते तस्य समर्था समर्थका भवेयु तथा स प्रयत्नशीलो बभूव। वेदानाम् अभ्यास तेन प्रोत्साहित। वेदाभ्यासार्थं पाणिनीय-व्याकरणस्य ज्ञानम् आवश्यकम् इति मत्वा वाराणसीनिवासिभ्य प्रमदादास-बाबुभ्य पत्र लिखित्वा तेन अष्टाध्यायी प्रेषयितु ते प्रार्थिता[२०]। अस्मिन्नेव काले नरेन्द्र हिन्दूना सामाजिकसस्थाना निरीक्षणपरोऽपि आसीत्। जातिसस्थया स असतुष्ट आसीत्। शास्त्रकृत शूद्राणा वेदाभ्यासनिषेध न तस्य समत आसीत्। न हि वेद-

(९१ पृष्ठत)
त्रिभि शब्दै सूत्रयन्ति(पृ २११)। — विवेकानन्द-स्वामिन [illegible] the child of my spirit इति वर्णयन्ति स्म। तेन कुष्ठरोगिणा सेवा कृता, एकदा च देवी रोगण (smallpox) पीडितम् एक पुरुषम् आश्वासयितु स सर्वां रात्रि तम् आश्लिष्य अशेत। (Romain Rolland, 'The Life of Vivekananda,' P 16, note 1)

२० 'So believing that a full measure of proficiency in the Vedic language is impossible without first mastering Panini's grammar, which is the best available for the purpose, a copy of the latter [illegible] felt to be a [illegible] cessity This Math is not wanting [illegible] men of perseverance, talent and penetrative intellect I can hope that by the grace of our Master, they will acquire in a short time Panini's system and thus succeed in restoring the Vedas to Bengal' (Eastern and Western Disciples, 'The Life of Vivekananda,' p 216)

वेदान्त-प्रोक्तानाम् अमरसत्यानाम् आ शूद्रेभ्यो वितरण विना भारतस्य पुनर्जन्म शक्यम् इति तस्य निश्चिता मति आसीत्।

किं तु प्राचीनेषु हिन्दुशास्त्रेषु अनपष्टश्रद्धस्यापि तस्य मनसि शान्तिर् नासीत्। स लिखति,[21] 'भाग्यवशात् मया आदर्शशास्त्र प्राप्तमस्ति। आदर्शपुरुष दृष्टोऽस्ति। तथापि नाह किमपि साधयितु शक्नोमि। इद मे प्रगाढ दु खम्।' तात्त्विका इव तस्य व्यावहारिका अपि दु खहेतव आसन्। समीपे कलिकाताया स्थिताया मातु, भ्रातृ-भगिनीना च आर्थिकी दुरवस्था न स दृष्टामपि अदृष्टा कर्तुम् अशक्नोत्। एकत गुरुदेवनिक्षिप्त गुरुबन्धुभार, अन्यतश्च स्वकुटुम्बभार, उभाभ्याम् एताभ्या शृङ्खलाभ्या बद्धपादद्वय स आत्मानम् अमन्यत। प्रतिदिन कलिकाताजीवन तस्य अधिकाधिकम् असह्यम् अभवत्। भ्रमणाभिलाष[22] पुनरपि त जग्राह। अनेके मठवासिन प्रागेव हिमालय गता आसन्। अखण्डानन्दस्य पत्रगतै तिबेटीयवर्णनै आकृष्टचेता नरेन्द्र तत्र गन्तुम् अकामयत्। वाराणस्या पुनरपि कञ्चित्काल वस्तव्यम् इत्यपि तस्य इच्छा आसीत्। अन्ते १८८९ ख्रिस्ताब्दस्य डिसेम्बर-मासे औदीच्यतीर्थयात्रा कर्तु वराहनगर विहाय स वैद्यनाथम् अगच्छत्। तत स वाराणसी गन्तुमना आसीत्। 'वाराणस्या स्थित्वा द्रक्ष्यामि तावत्, किम् अन्नपूर्णा-विश्वेश्वरौ मम भाग्यलिखित निर्धारयत। इदानी कार्यं वा साधयिष्यामि, देह वा पातयिष्यामि। प्रसीदतु मयि श्रीकाशीश्वर' इति स वैद्यनाथात् लिखति।

किं तु विधिनियतम् अन्यदेव आसीत्। वैद्यनाथे वसन् स प्रयागे योगानन्द रोगाक्रान्तम् अशृणोत्। तच्छ्रुत्वा सपदि प्रस्थाय नरेन्द्र प्रयाग गत। तेन शुश्रूषितो योगानन्द कैश्चिदेव दिनै रोगमुक्त अभवत्। तत्रस्थै यदृगीयै जनै सह नरेन्द्रस्य अनेकदा चर्चा अभवत्, यत्र नरेन्द्रेण

२१ प्रमदानन्द-वावुभ्यो लिखिते पत्रे।

२२ शार्मण्यभाषायाम् अय Wanderlust शब्देन प्रसिद्ध। नरेन्द्रस्य इमा परिव्राजकावस्था वर्णयितु रोमाँ रोलाँ Wanderjahre इति शब्द प्रयुङ्क्ते (पृ ११)। 'भ्रमणवर्षाणि' इति वाच्यार्थकोऽय शब्द Goethe इत्यस्य ग्रन्थविशेषस्य नामत उपात्तोऽस्ति।

सामाजिकानाम् अन्यायानां वैषम्यस्य च तीव्रा निन्दा कृता। नरेन्द्रस्य पाण्डित्येन व्यक्तिमहात्मतया च ते विस्मिता अभवन्। अत्रैव स गाज़ी-पुरस्थस्य

पवहारी-बाबा

इत्याख्यस्य सत्पुरुषस्य नाम अशृणोत्, तद्दर्शनेच्छया च स नूतनवर्षस्य (१८९०) जानुअरी-मासे (तृतीयसप्ताहे) गाज़ीपुरम् अगच्छत्। बाबामु भक्ति पाण्डित्ययो विरलः सगमः आसीत्। ते न्यायव्याकरणयो तथा च रामानुजीय वेदान्ते अधीतिनः आसन्। गिरिनार-पर्वते तैः योगदीक्षा लब्धा आसीत्। बाबानाम् आहारः अतीव अल्पः, कदाचित् कतिपय-निम्बपत्रमात्रः आसीत्। तेन जनाः तान् 'पवनाहारी' (= वायुभक्ष) इत्यपि वदन्ति स्म। बाबानां 'यद्यत् कर्म करोमि तत्तदखिलं शम्भो तवाराधनम्' इति वृत्तिः आसीत्। सर्वस्मिन्नपि प्राणिनि ते ईश्वरस्य आविष्कारं पश्यन्ति स्म। एकदा तीव्रविषेण नागराजेन दष्टास्ते 'प्रियतमात् दूतः आगतः आसीत्' इति वर्णयामासु। तीर्थयात्रां कृत्वा अन्ते ते स्वीयं गाज़ीपुर स्थानम् आगत्य तत्रैव एकां गर्तां गृहीकृत्य तत्र कृतवसतय अभवन्।

गाज़ीपुरगत नरेन्द्र राय-गगनचन्द्र रायबहादुराणां गृहं वसतिम् अकरोत्। तत्र स्थितः स अनेकदा बाबान् द्रष्टुम् अगच्छत्। किन्तु तेषां दर्शनं सुकरं नासीत्। यदा यदा तु दर्शनम् अभूत्, तदा तदा 'अज्ञोऽयं जन[23] किं जानाति?' इति, 'पुनः कदाचित आगच्छ' इत्युक्त्वा वा तैः स मृदुतया प्रतिप्रेषितः। एतेषु दिवसेषु नरेन्द्रस्य मानसिकसंघर्षः तीव्रतरः सञ्जात आसीत्। तस्य असमाधानम् अतिभूमिं गतमासीत्। 'पश्यामि तावत् यदि नाम राजयोगस्य अनुष्ठानेन मनःशान्तिं लभेय' इति तेन चिन्तितम् आसीत्। पवहारी-बाबानाम् उपासत्तौ अयमेव तस्य उद्देश आसीत्। तेषां सकाशात् राजयोगस्य अधिगमः शक्यः स्यात् इति आदौ लब्धाशः नरेन्द्रः बाबानां व्यवहारेण क्रमेण तद्विषये निराशीभवितुं प्रवृत्तः। अन्ते तु राजयोगस्य प्राप्तौ दृढलग्नमना नरेन्द्रः यदि एतदर्थं बाबानां

२३ = अहम्

दीक्षापूर्वकं शिष्यत्वम् अङ्गीकर्तुम् आवश्यक भवेत् तर्हि तदपि कर्तुं सिद्ध अभवन्। यदा तु नरेन्द्र एव निश्चयम् अकरोत्, तस्मिन्नेव क्षणे श्रीरामकृष्ण-परमहंसा तस्य पुरत आविर्भूय नि शब्द तम् अनिमेष निर्वर्णयन्त तस्थु। अशब्दप्रकटितमपि तेषाम् अभिप्राय ज्ञात्वा नरेन्द्र विलज्जित, पश्चात्तप्तश्च अभवत्। किन्तु तथा नाम तस्य योगाभिलाष दृढ आसीत् यथा एतदुत्तरमपि अनेकवार स बाबाना शिष्यत्वस्वीकारे मतिम् अकरोत्। कतिपय दिनस्थिते अस्मिन् संघर्षे तु यदा यदा नरेन्द्रस्य मनसि एव विचार उत्पन्न तदा तदा रामकृष्णा तस्य पुरत आविर्बभूवु"। अन्ते रामकृष्णाना निश्चित मत ज्ञात्वा स स्वविचार पर्यत्यजत्"।

२४ 'एकविंशति-दिनानि इत्थम् अघटत इति रोमाँ रोलाँ लिखति - 'Naren was for twenty-one days within an ace of yielding But for twenty one nights the vision of Ramakrishna came to draw him back' (The Life of Vivekananda p 15, note)

२५ पवहारी-बाबाभि स्वसमीपे पूजार्थं स्थापित रामकृष्णचित्र दर्शयित्वा नरेन्द्र स्वविचारात् परावर्तित, रामकृष्ण-शिष्यत्वे च एव दृढीकृत इत्यपि आख्यायते। इद चेत् सत्य स्यात, नात्र किमपि चित्रम्। क कस्य गुरो शिष्यभावम् अर्हति, इति सन्त एव जानन्ति। प्रसिद्धमेव इद यत् सन्तवर्येण तुकारामेण शिष्यत्वेन प्राप्त शिवनृप 'रामदासस्वामी तव गुरु' इत्युक्त्वा त गन्तुम् आदिष्ट। — पवहारी-बाबाभि स्वसनिधौ स्थापितस्य रामकृष्णाना चित्रस्य निर्देश **श्रीरामकृष्ण वचनामृते**ऽपि लभ्यते। (अत्र एक दैवयोग निर्दिश्यते। यस्मिन् दिने अय वृत्तान्त मया लिखित, तस्मिन् सायकाले यदृच्छया नागपुरात् आगते मम मित्रे डॉ म श्य सहस्रबुद्ध इत्येतं प्रकृतप्रसङ्गगता एका आख्यायिका मह्य निवेदिता। पवहारीबाबा — रामकृष्णयोर् मध्ये दोलायमानेन नरेन्द्रेण 'यद्यद्य ग्वालियर-नरेशस्य सकाशात् य कोऽपि संदेश आगच्छेत्, तर्हि रामकृष्णान् विहाय न क्वापि गमिष्यामि' इति सकल्पितमात्र सत्यमेव त प्रति ग्वालियर-नरेशस्य दूत केनापि कार्येण प्राप्त। नरेन्द्रस् तावत् आश्चर्येण जडीकृत इव अभवत्। नेयम् आख्यायिका मया श्रुतपूर्वा पठितपूर्वा वा। (ग. बा प)

**नास्ति रामकृष्णसमः अन्यः**

प्रमदादासबाबुम्य लिखिते पत्रे नरेन्द्र एव भणति, 'नाहम् इतःपरं कमपि अन्य साधुपुरुषम् उपसीदेयम्। नास्ति कश्चित् अन्यः रामकृष्णे समो नाम'[२६]। अत्रान्तरे नरेन्द्र पवहारी-बाबान् प्रति गुरूपदेशार्थं गतोऽस्ति इति वार्ता अन्यान् गुरुबन्धून् प्रास्यन्दत। न तत् केचित् अन्वमन्यन्त। ते इमं गुरुद्रोहम् अमन्यन्त। प्रेमानन्द नरेन्द्रस्य मन परिवर्तयितु गाझीपुरम् आगत। नरेन्द्रेण स कठोरम् उक्त्वा प्रतिप्रेषित। अखण्डानन्दाय लिखिते पत्रे नरेन्द्र स्वमुद्देशम् एव विवृणोति– 'भक्तिज्ञानयो कुलभवनभूतायाम् अस्या वङ्गभूमौ योगस्य नामापि न श्रूयते। . . अतोऽहम् अस्मिन् राजयोगिनि वसामि। अस्ति तेन मह्यम् आशा प्रदर्शिता। यत्र कुत्रापि किंचित् श्रीमदूर्जित भवतु, प्रकृत्याऽहं तद्ग्रहणप्रवणोऽस्मि। केचित् सुहृद अत्र गुरुदेवविषये भक्तिहानिम् आशङ्कन्ते। उन्मत्तकेषु आग्रहैकबुद्धिषु च पुरुषेषु इत्थ मति उपपद्यते। सर्वे गुरव अभिन्ना, एकभूताश्च, यत सर्वेऽपि ते परमगुरो ईश्वरस्य अशभूता।'

पवहारी-बाबा-प्रकरणे समाप्ते नरेन्द्र गाझीपुर परित्यज्य गुरुबन्धुभ्य किमपि अनिवेद्य कुत्रापि एकान्ते ध्यानधारणार्थम् अगच्छत्। तत्रस्थस्तु स कैश्चिद्दिनै अभेदानन्दस्य रोगवार्ता श्राव श्राव वाराणसीम् अगच्छत्। यावच्च तत्र अभेदानन्दस्य शुश्रूषाव्यवस्था सपादयति, तावत् कलिकातात बलराम-वसूना निधनवार्ता आगता। ते हि रामकृष्णाना परमभक्ता आसन्। सन्यासिन सतोऽपि नरेन्द्रस्य तया वार्तया यो दुःखाभिपद्ग सजात, त दृष्ट्वा प्रमदादास-महोदया विस्मिता बभूवु। तान् आमन्त्र्य सपदि बलराम-बावूना गृहजनस्य सान्त्वनार्थं नरेन्द्र कलिकाताम् उद्दिश्य प्रस्थित।

---

२६ 'To no great one am I going again. So, now, the great conclusion is that Ramakrishna has no peer ,' अस्मिन्नेव पत्रे रामकृष्णानाम् अद्वितीया पूर्णता, दयालुता, सानुक्रोशता इत्यादीन् गुणान् प्रशस्य आत्मनि तेषा स्नेहातिशय नरेन्द्रेण वर्णितोऽस्ति।

कलिकाता प्राप्तस्य तस्य यथापूर्वं मठजीवन प्रारब्धम्। मठस्य आधारभूताना सुरेशबाबूना मृत्युकारणात् (२५-५-१८९०) मठ कष्टा दशाम् आपन्न आसीत्। नरेन्द्रेण तत्र अवधान दत्तम्। मठवासिना प्रदिक्षणम् अनुवर्तनीयम् आसीत्। नरेन्द्रेण तत् प्रारब्धम्। एऽवेव दिनेषु रामकृष्णाना स्मारक निर्माणव्यम् इति विचार तस्य मनसि उदेत्। तदर्थं स बाबु प्रमदादास प्रभृतिभि पत्रव्यवहारमपि प्रारभत। एव प्रवृत्तिपर तु त मानसिकी अशान्तता पुनरपि जग्राह। स्वातन्त्र्याप-हारिणि सामाजिक कार्यभार स अद्वट्। कुत्रापि एकान्ते स वा आत्मन, स्वदेशस्य च समस्यानाम् उपरि प्रगाढ चिन्तनम् अनुष्ठातव्यम् इति विचार बलवान् अभवत्। भ्रमणलालसा उल्ललास। द्वौ मासौ एव स मठे स्थित आसीत्। अखण्डानन्द गृहीत्वा जुलै मासे स हिमालयाय प्रतस्थे। 'स्पर्शमात्रेण जनाना परिवर्तनक्षमम् आध्यात्मिक सामर्थ्यं यावत् नासादितम्, न तावत् अहं निवर्तिष्ये[२७],' इति स प्रस्थानसमये गुरुबन्धून् अवोचत्।

प्रयाणात् पूर्वं स घुसुरी गत्वा, माताजीम् उपगम्य, 'नाह ज्ञानस्य परा काष्ठाम् अनासाद्य निवर्तिष्ये' इत्युक्त्वा स भगवतीम् आशिषम् अयाचत। साऽपि रामकृष्णाना प्रतिनिधीभूय तस्मिन् आशिष प्रयुयोज। 'वत्स, किं न त्वा मातरम् आप्रक्ष्यसे?' इत्युक्तवती माताजी 'अम्ब! त्वमेव मे माता' इत्युक्त्वा नरेन्द्र प्रातिष्ठत।

---

२७ 'I shall not return until I acquire such realisation that my very touch will transform a man' (Eastern and Western Disciples, 'The Life of Swami Vivekananda,' p 231) वाराणस्या प्रस्थानसमये स प्रमदादास-बाबून् अवदत्, 'When I shall return here next time I shall burst on society like a bomb shell and it will follow me like a dog' (ibid p 236) रोमाँ रोलाँ (पृ १८) तु किंचित्-पाठान्तर युक्तम् इद वचनम् उद्धृत्य '. . speech over which his pious disciples have drawn a veil' इति कुतो वदति, न ज्ञायते।

## १०. परिव्राजकस्य भारतभ्रमणम् (उत्तरार्धम्)

इदानी प्रस्थित नरेन्द्रस्वामी अक्षरश आसेतुहिमाचल भारत बभ्राम। अशत गुरुबन्धुभि अनुगतोऽपि भूयिष्ठम् एकाकी। विस्तीर्णस्य अस्य देशस्य अनल्पो भाग तेन पद्भ्याम् आक्रान्त। कपर्दिकाया अपि असग्रहरूप सन्यासिसाधारणम् आकिञ्चन्यव्रत परिपालितम्। क्वचित् राजमहाराजानाम् आतिथ्यसत्कार अनुभूत, क्वचित् कुटीस्थस्य भिक्षुकस्य। कदाचित् राजप्रासादे उषितम्, कदाचित् श्वापदाकीर्णे वने। कदाचित् साधुसज्जनाना सगति अनुभूता, कदाचित् चोरदुर्जनादीनाम्। तत्तत् जनविशिष्ट, तत्तत्-वातावरण-विचित्रित, तत्तद्-आचार-विभिन्न, तत्तत्-भूविशेष-भूषित भारतदेश तेन स्वाभ्या विशालाभ्या नेत्राभ्याम् ईक्षित[1]।

---

१ तत्तत्-जन-प्रदेशादीना निरीक्षणपरस्य भ्रमत परिव्राजकस्य वर्णनार्थं पठ्यता शकरभगवत्पादाना जीवन्मुक्तानन्दलहरी —

पुरे पौरान् पश्यन् नर-युवति-नामाकृति-मयान्
सुवेषान् स्वर्णालकरण-कलितान् चित्र-सदृशान्।
स्वय साक्षी द्रष्टेत्यपि च कलयस्तै सह रमन्
मुनिर् न व्यामोह भजति गुरुदीक्षा-क्षत-तमा॥
वने वृक्षान् पश्यन् दलभरभरान् नम्र-सुशिखान्
घनच्छाया-च्छन्नान् बहुल-कलकूजद्-द्विजगणान्।
भजन् घस्रे रात्रौ अवनितल-तल्पैकशयनो
मुनिर् न व्यामोह भजति गुरुदीक्षा-क्षत-तमा॥
कदाचित् प्रासादे क्वचिदपि च सौधे च धवले
कदाकाले शैले क्वचिदपि च कूलेषु सरिताम्।

यच्च तेन पूर्वस्मिन् अल्पीयसि भ्रमणे अवलोकितम् आसीत्, तत् अस्मिन् भारतभ्रमणे मनसि दृढीभूतम्। सत्सु अपि नैकेषु संप्रदायेषु, सत्यपि देवतानां बहुत्वे, सत्यपि उपासनाना भेदे भारतस्य सांस्कृतिक्याः एकतायाः विषये स दृढमतिः बभूव। द्वितीयं तेन अवलोकितं वस्तु नाम अध्यात्मनिष्ठायाः अभावः। वैराग्यं दुर्लभम् आसीत्। 'पाश्चात्यः जडवादः जयति स्म। आसुरी-संपदः पूजाराप्रदाय' वर्धमान आसीत्। तृतीयं नाम सर्वव्यापि दारिद्र्यम्। हृदयद्रावकस्य अस्य भारतीयदारिद्र्यस्य दर्शनेन स अनेकदा मुक्तकण्ठम् अरोदीत्'। भारतीयजीवनस्य यदि धर्मनिष्ठं पुनरुज्जीवनं कर्तव्यं स्यात् तर्हि प्रथमः कर्तव्यांशो नाम दारिद्र्यापसारणम् इति तस्य बुद्धिनिश्चयः भवितु प्रारभत। सामाजिकी विषमता, तथा च सामाजिकः अन्यायः इत्येतावपि तं विचारपरम् अकुरुताम्।

---

(९८ पृष्ठत.)

कुटीरे शान्तानां मुनिजन-वराणामपि वसन्
मुनिर् न व्यामोहं भजति गुरुदीक्षा-क्षत-तमाः॥
कदाचित् मौनस्थः क्वचिदपि च वाग्वाद-निरत
कदाचित् स्वानन्दे हसति रभसा त्यक्त-वचसा।
कदाचित् लोकानां व्यवहृति-समालोकन-परो
मुनिर् न व्यामोहं भजति गुरुदीक्षा-क्षत-तमाः॥
क्वचित् शैवैः सार्धं क्वचिदपि च शाक्तैः सह रमन्
कदा विष्णोर् भक्तैः क्वचिदपि च सौरैः सह वसन्।
कदाचित् गाणेशैर् गत-सकलभेदोऽद्वयनया
मुनिर् न व्यामोहं भजति गुरुदीक्षा-क्षत-तमाः॥

शंकराचार्यकृतस्य अस्य वर्णनस्य साक्षाद् उदाहरणमेव नरेन्द्रस्वामि-भ्रमणम्।

२. कलिकातायां क्षुत्पीडया कश्चित् पञ्चत्वम् अगच्छत् इति श्रुत्वा स. सोरस्ताडम् आत्मानम् अपृच्छत्, 'What have we done, so-called men of God, the Sannyasins, what have we done for the masses?'

यत्र यत्र स अगच्छत्, तत्र तत्र तस्य पाण्डित्येन, वेदवेदान्तादिप्रभुत्वेन, विचाराणां प्रौढत्वेन, स्वभावस्य च ऋजुत्वेन जना प्रभाविताः अभवन्। तस्य मधुरेण गायनेन तृप्ता अभवन्। तस्य भ्रमणपरस्य सहवासप्राप्तानाम् अनेकेषां जनानां पत्राणि अत्र साक्षीणि सन्ति। यद् यत् स्थानं विहाय स अग्रतोऽगच्छत्, तत्र तत्र स्वीयं प्रभावविशेषं पृष्ठत अवाशेषयत्। तस्य नाम अजानाना अपि जना अमेरिकाविजयोत्तरं तस्य वृत्तपत्रे छायाचित्रं दृष्ट्वा 'ननु अयमेव सन्यासी अस्माकं ग्रामम् आगत आसीत्,' इति वदन्ति स्म। यत्र यत्र स अगच्छत्, तत्र तत्र अधिकारानुसारेण स मूर्तिपूजाम् उपादिशत्, शास्त्राभ्यासम् उपादिशत्, ध्यानप्रार्थनादिकम् उपादिशत्, सर्वानेव तु स मातृ-भू-प्रेम उपादिशत्। न केवलं स अन्यान् उपादिशत्, स्वयम् अध्यैत अपि, कुत्रचित् व्याकरणम्, कुत्रचित् जैनादिमतम्, कुत्रचित् 'फ्रेञ्च' भाषाम्, कुत्रचित अन्यत् किमपि। कुत्रचित् स्वभावपरिवर्तनमपि। आग्रहैकशीलता परित्यज्य स सहिष्णुतां भावयामास*। केचित् पूर्वग्रहा व्यलीयन्त।

### हिमालय-यात्रा

परिव्राजकमनः सदैव हिमालयेन आकृष्टम् अस्ति। हिमालयस्य आह्वानं सदैव तस्य कर्णपथं प्राप्नोति। १८९० खिस्ताब्दस्य जुलै मासे अखण्डानन्देन सह प्रस्थिता स्वामिनः¹ हिमालयम् उद्दिश्य प्रययुः। भागल-

---

* हिमालयीन-यात्रायाम् एकदा नरेन्द्रस्य निवासः तिब्बेटीय-जनानां गृहे आसीत्। तेषां षण्णां भ्रातृणाम् एकैव भार्या आसीत्। एतेन विस्मितः नरेन्द्रः किंचित्-परिचयोत्तरम् स्वीयं बहुपतित्वविरोधं तीव्रैः शब्दैः प्रकटीचकार। तदानीं क्षुब्धास्ते यजमानाः 'कुतो नाम साधो सत भवतः इदं स्वार्थपरायणत्वम्? ननु यथा अन्यत् धनं भ्रातृभिः विभजनीयम्, तथैव भार्याऽपि' इत्यूचुः। नरेन्द्रः तूष्णीभूतः। सः सामाजिकीनां रीतीनां सापेक्षताम् अबुध्यत। 'And, the Swami thought, one may argue for or against almost anything.'

१ =नरेन्द्रस्वामिनः। इतःपरं नरेन्द्रः 'स्वामि'संज्ञया व्यपदेष्टुं युक्तम्।

पुर-वैद्यनाथ-वाराणसी-अयोध्यादीनि स्थानानि दृष्ट्वा ते नैनीतालं प्राप्नुवन्। अत्र स्वामिन अत उत्तर कपर्दिकापि समीपे न स्थापनीया इति निरणयन्। नैनीताले पञ्चदश दिनानि उषित्वा ते बदरिकाश्रममार्गस्थम् अल्मोरा-ग्रामम् उद्दिश्य प्रतस्थिरे। मध्येमार्गं कचित् पिप्पलवृक्ष दृष्ट्वा स्वामिन तस्य अधस्तात् होरामात्र ध्यानम् अन्वतिष्ठन्। ध्यानोत्थिताश्च 'अद्य अस्य पिप्पलवृक्षस्य अध मया एका गहनतमा समस्या समाहिता' इति ते अखण्डानन्दम् अब्रुवन्। अल्मोरा प्राप्ताभ्या ताभ्या तत्र पूर्वमेव वर्तमानौ शारदानन्द-वैकुण्ठनाथौ मिलितौ। अत्रैव स्थितै स्वामिभि स्वीयाया अन्यतमाया भगिन्या आत्महत्यावार्ता तन्त्रीद्वारा प्राप्ता। एतेन निमित्तेन भारतीयस्य स्त्रीसमाजस्य दयनीया अवस्था तान् अव्यथयत्। आरमदु स निगिलय त्रिभि गुरुबन्धुभि सह स्वामिन कर्णप्रयागम् अगच्छन। तत्र दिनत्रयम् उषितानां तेषां बदरिकेदारमार्ग अकालनिमित्त शासनेन रुद्धोऽस्ति इति श्रुत्वा तत्रगमनविचार परित्यक्तव्य अभूत्। कर्णप्रयागात् ते रुद्रप्रयाग गता, ततश्च श्रीनगरम्। श्रीनगरे कश्चित् अचिरस्वीकृत-ख्रिस्तधर्म अध्यापक आसीत्। स्वामिभि युक्तिवचोभि तस्य मन परिवर्तन कृत्वा स पुन हिन्दुधर्मं प्रापित। अत्र ते सर्वे भारवाहान् विसृज्य माधुकरी वृत्तिम् उपाजीवन्। श्रीनगरात् ते टेहरीं गता, यत्र अखण्डानन्द पुनरपि रोगाक्रान्त अभवत्। त गृहीत्वा स्वामिन उपचारार्थं डेहराडूनम् अगच्छन्। तत्र 'मम गुरुबन्धु रुग्णोऽस्ति, अपि कश्चित् दयालु तस्य निवासस्य पथ्याशनस्य च व्यवस्था विधास्यति?' इति पृच्छन्त स्वामिन गृहात् गृहम् आटन्। न तु कश्चित् अशृणोत्। अन्ते पण्डित-आनन्दनारायणो नाम सज्जन इद कार्यम् अङ्गीचकार। सप्ताह-

४ "जीवात्म शरीरयो परमात्म-ब्रह्माण्डयोश्च य अन्योन्यसबन्धः स वागर्थयो सबन्धसदृश। वागर्थौ वस्तुत सपृक्तौ—केवलम् अपोद्धारबुद्ध्या पृथक्क्रियेते। नास्ति हि अशब्द अर्थो नाम। एवमेव जीवात्म-शरीरे (microcosm) परमात्म—ब्रह्माण्डे (macrocosm) च। बायबले वर्तमानम् 'In the beginning was the Word' इत्यादिक वचनम् एवं विज्ञातव्यम्" इत्यर्थिका टिप्पणी तस्मिन् दिने स्वामिभि लिखिता...

मये अतीते प्रवृत्तिम्यप्रायम् अखण्डानन्द प्रयाग गन्तुम् आदिदेश स्वामिन गुरुबन्धुभि सह हृषीकेश जग्मु । तस्मिन् निसर्गरमणीये साधुजननिवास-परिवृते च स्थाने उषित्वा स्वामिन तीव्रा तपस्याम् आस्वादुरामा आसन् । किं तु एव चिन्तयन्त एव ते तीव्रज्वरेण सोन्मादेन आक्रान्ता अभवन् । प्रतिदिन क्षीयमाणावस्थान् तान् दृष्ट्वा गुरुबन्धव चिन्तातुरा, किंकर्तव्यविमूढाश्च अभवन् । किमिदानीं कर्तव्यम् ? क पारलौकिकरणीय ? क उपचार करिष्यति ? नासीत् वैद्यकीया व्यवस्था समीपस्था । एव दु खाभिहतेषु तेषु कश्चित् पर्वतीय पुरुष यदृच्छयेव तत्र आगत्य किंचित् पानस्परयम् औषध निष्पादितवान् । मधुमिश्रे तस्मिन् औषधे स्वामिनो गलबिले बलात् अवतारिते शनै शनै स्वामिन किंचिदिव आरामम् अलभन्त । अनेन निमित्तेन ते गुरुबन्धव स्वामिनाम् अत्यन्तावश्यकताम् अन्वभवन् । अस्मिन् अवसरे ब्रह्मानन्दोऽपि वनगलात् तत्र प्राप्त, मिलिताश्च ते सर्वे मीरतम् अगच्छन् ।

अत्रान्तरे अखण्डानन्दोऽपि मीरतम् आगत आसीत् । रोगक्षीणान् छायामात्रावशिष्टान् स्वामिनो दृष्ट्वा स दुःख विस्मयाभ्याम् आहत अभूत् । अनुवृत्तोपचारा स्वामिन क्रमेण भूयिष्ठप्रत्यागतबला समपद्यन्त । तेषा निवासभूतम् इदम् उद्यान [५] कश्चित् मठ एव अभवत् । अधुना अद्वैता-नन्दोऽपि अत्र प्राप्त । प्रत्यह माध्याह्नभोजनोत्तर स्वामिन शाकुन्तल-कुमारसम्भव-मृच्छकटिक-विष्णुपुराणादीन् ग्रन्थान् व्याचख्यु । ध्यानभज-नादिकमपि अत्र ते सन्यासिन पूर्ववत् अन्वतिष्ठन । तेषाम आयुषि इद कालखण्ड कमपि अमन्दानन्दम् आभरत् । एव पञ्च मासा व्यतीयु । पुनरपि स्वामिन अशान्तमनस्का अभूवन । सर्वसङ्गमुक्ताना योगिनाम् ईश्वरमात्रद्वितीयम् एकाकिजीवन तान् न्यमन्त्रयत । अन्ते एकदा ते गुरुबन्धून् अवोचन्, 'लब्धोऽस्ति मया भाविकार्यविषयक ऐश्वर आदेश । अत परम अहम् एकाकी अटितास्मि ।' एवमुक्त्वा, गुरुबन्धून् विसृज्य, सर्वमायापाशपरिजिहीर्षया एकाकिन एव भूत्वा स्वामिन दिल्लीम् उद्दिश्य प्रतस्थिरे (जानुअरी-उत्तरार्धे १८९१) ।

---

५ Setji s garden

दिल्ल्या स्वामिन श्यामलदासमहोदयाना गृहे न्यवसन् । तत्रत्यानि दर्शनीयानि स्थानानि तै दृष्टानि। भग्नावशेषाणा प्राचीनाना प्रासादाना कबरस्थानाना च दर्शनेन मानवकर्तृत्वस्य क्षणभङ्गुरत्व तेषा मनसि दृढ पद चकार। दिल्ल्या निवसता तेषाम् एकदा सहसा गुरुबन्धुभि मेलनम् अभवत्। 'दिल्ली द्रष्टुम् अत्रागतै अस्माभि विविदिषानन्दो नाम कश्चित् सन्यासी आङ्ग्लभाषया प्रवक्ति इति श्रुतम्। तस्य दर्शनार्थं वयमत्र आगता । नास्माभि इद विदित यत् भवानेव विविदिषानन्द इति। न तु अस्माभि भवान् अत्रागत इति ज्ञातमासीत्,' इति ते अवदन्। दिल्लीम् आगतै स्वामिभि विविदिषानन्द इति नाम गृहीतमासीत्। गुरुबन्धून् दृष्ट्वा मुदितैरपि तै 'ननु अहम् एकाकी सञ्चरितुम् इच्छामि। न युष्माभि एव पुनरपि अहम् अनुसर्तव्य । अनुतिष्ठत इमा मम आज्ञाम्।' इति कठोरम् उक्त्वा ते गन्तुम् आदिष्टा । गाजीपावाद तेषु प्रस्थितेषु स्वामिन राजस्थानम्[६] उद्दिश्य प्रस्थिता[७]।

## मौलविगृहे भोजनम्

मायापाशम् अपसार्य निर्भयेण मनसा अग्रतो गच्छन्त, स्वजीवितकार्यं प्रत्यासन्नम् इति मनसैव विजानन्त, धम्मपद-वचनेन प्रोत्साहितमनस्का स्वामिन १८९१ खिस्ताब्दस्य फेब्रुअरी मासारम्भे एकस्मिन् सुप्रभाते अलवार प्रापु । तत्र आपणे लब्धस्थानान् तान् द्रष्टु कश्चित् मौलवि आगत । मौलविना सह सञ्जाते सभाषण स्वामिना कुराणज्ञान स्पष्टम् अभूत्। 'कुराणस्य अय विशेष यत नास्ति तत्र कश्चित प्रक्षपो नाम। एकादश वर्षशतकानि तत् अनुपहतेन शुद्धस्वरूपेण परपराप्राप्तम् अस्ति,' इति स्वामिन अवोचन्। शीघ्रमेव महाविदुष कस्यचित् सन्यासिन आगमनवार्ता नगरे प्रसृता, जनवृन्दानि च स्वामिन द्रष्टु सम-मिलन्। कैश्चित दिनै स्वामिना नित्रासव्यवस्था प शम्भुनाथजी इत्या-

६ तदानीतन राजपुताना।

७ दिल्ल्या डॉ हेमचन्द्रसेन इत्याख्येन वैद्येन समेलितया प्राध्यापक मण्डल्या सह स्वामिना चर्चा सञ्जाता आसीत, स्वामिना च पाण्डित्येन प्राध्यापका प्रभाविता आसन् ।

ह्याना सेवानिवृत्त-स्थपतीना गृहे अक्रियत । अत्र स्वामिन पूर्वाह्णे ध्यानजपादिना, अपराह्ण-सायकालौ च समिलितजनै सह चर्चया, उपदेशप्रदानेन च निन्यु । एकदा केनचित् पुरुषेण 'युष्मद्-देहस्य. का जाति ?' इति पृष्टे आत्मनः अब्राह्मणत्वम् अनिह्नोतुकामा स्वामिन निज कायस्थत्वम् अकथयन् । 'किमिति भवान् काषायाणि वस्ते ?' इति केनचित् पृष्टे 'अय भिक्षुवेष । त पश्यन् न कोऽपि अपर. भिक्षु. मा भिक्षितु चिन्तयतु इति,' इति स्वामिनः परिहासेन इव प्रत्यवदन् । *नैकदा प्रदोषा ध्यरसिषु, न तु भक्तिगीतानि। अत्र मन्त्रप्रदानेन स्वामिभिः* केचन शिष्यत्वेन स्वीकृता । प्रथमपरिचितेन स्वामिषु च जातानुरागेण मौलविना एकदा स्वामिभि आत्मगृहे भोजनपरिग्रह कर्तव्य इति निजा तीव्रेच्छा प्रकटीकृता । जाति-धर्म-भेदातीतै स्वामिभि तस्य भक्तिभावम् आलोच्य तस्य कामना पूरिता ।

अथ गच्छता कालेन मेजर रामचन्द्रजी इत्याख्य अलवार नरेशाना दिवाणमहोदय' स्वामिभि- परिचित अभवत् । तत्रस्थ नरेश आङ्गलै आचारविचारै अभिभूत आसीत् । तस्य मनःपरिवर्तन चिकीर्षता दिवाणेन स्वगृहे स्वामिभि सह तस्य मेलन विहितम् । सभाषणप्रसङ्गेन राज्ञा पृष्टम, 'स्वामिन् ! किमिति विद्वान् सन्नपि भवान् एव भिक्षाटन करोति ?' 'किमिति भवान् राजकार्याणि परिहृत्य पाश्चात्यै सह मृगयादिभि कालयापन करोति?' स्वामिभि प्रतिवन्दीरूपेण पृष्टम् । एतत् श्रुत्वा, 'अहो स्वामिन धृष्टता !' इति चिन्तयन्त सभ्या विस्मयचकिता अभवन्, नरेशस्तु अक्षुब्ध किंचित्-विचारोत्तर प्रत्युवाच, 'नाह वेद्मि। केवल रोचते इत्येव तथा करोमि।' 'स एव ममापि भिक्षाटने हेतु,' स्वामिन अवोचन् ।

'राजचित्रे थूत्क्रियताम् !'

अथ महाराज द्वितीय प्रश्नम् अपृच्छन्, 'स्वामिन् ! नाह मूर्तिपूजाया विश्वसिमि। का मे जन्मान्तरे गति स्यात् ? न मे अश्म-धातु-मृत्तिकादीना पूजने विश्वासोऽस्ति। अपि अह मरणोत्तरम् अधोगति

८ दिवाण सचिवविशेष ।

गच्छेयम् ?' तस्मै प्रतीतिकरम् उत्तरं दित्सता स्वामिना दृष्टिः भित्त्य-वलम्बिते नरेशस्य चित्रे पतिता। तद् गृहीत्वा स्वामिभिः 'अस्मिंश्चित्रे थूत्क्रियताम्' इति दिवाण आदिष्टः। एतच्छ्रुत्वा सदिवाणाः सर्वेऽपि भयकम्पितगात्राः तस्थुः। स्वामिनस्तु 'अस्मिंश्चित्रे थूत्क्रियताम्,' इति वदन्त अतिष्ठन्। सर्वे सभ्याः भयभीताः, किमिदानीं भविष्यति इति रुद्धश्वासाः प्रतीक्षापराः अभवन्। अन्ते स्वामिनः अवोचन्, 'अन्यो महा-राजः, अन्यत् च तच्चित्रम्। उभयोः कः सबन्धः ? तथापि न कोऽपि अस्मिंश्चित्रे थूत्कर्तुम् उत्सहते। कुतः ? यतः सर्वोऽपि इदं चित्रं न केवलं वर्णजत्वेन पश्यति, किं तु महाराजत्वेन। एवमेव भक्तोऽपि अश्म-धातु-मृत्तिकादीन् न अश्म-धातु-मृत्तिकात्वेन पूजयति, किं तु देवत्वेन।' नरेशेन मूर्तिपूजारहस्यम् अवगतम्।

'पाश्चात्यानि शास्त्राणि अधीध्वम्'

एकं युवानं शिष्यं स्वामिनः एवम् उपादिशन्, 'शक्तिमन्तो भवत। पौरुषवन्तो भवत। दुर्जनः सन्नपि बलवान् जनो मम समतः, यतः तस्य सामर्थ्यवशात् दौर्जन्यत्यागपुरःसरं सत्यसाक्षात्कारस्य संभवोऽस्ति[१]'। स्वामिनाम् उपदेशम् अनुसृत्य अनेकैः युवभिः संस्कृतस्य अभ्यासः आरब्धः। कदाचित् स्वयं स्वामिनः एव अध्यापयन्ति स्म, किं तु केवलेन संस्कृता-ध्ययनेन स्वामिनः संतुष्टाः नासन्। 'संस्कृतम् अधीध्वम्, किं तु तेन सह पाश्चात्यानि शास्त्राणि अपि अधीध्वम्। सूक्ष्मताम् अभ्यस्यत, पुत्रकाः ! अध्ययनम् अभ्यस्यत। परिश्रमम् अभ्यस्यत। पाश्चात्यैः लिखितः भारते-तिहासः दोषपूर्णः पूर्वग्रहदूषितश्च अस्ति। कथं नाम अस्माकं धर्मतत्त्व-ज्ञानयोः आचारप्रचाराणां च अनभिज्ञाः पाश्चात्याः भारतस्य यथास्थितं वस्तुनिष्ठं च इतिहासं लिखितुं प्रभवेयुः ? तथापि ऐतिहासिक-गवेषणस्य

१ 'Be strong ! Be manly ! I have respect even for a wicked person so long as he is manly and strong for his strength will make him some day give up his wickedness and even renounce all work for selfish ends, and will thus eventually bring him to the Truth.'

रीतिः पुरोपीयैः अस्मभ्यं प्रदर्शितास्ति। अधुना स्वतन्त्रेण मार्गेण गत्वा वेदपुराणादीनि अधीत्य भारतस्य इतिहासः भारतीयैरेव लेखनीयः,' इति ते उपादिशन्।

सप्तसु सप्ताहेषु अतीतेषु स्वामिस्थः परिव्राजकः जागरितः। तेषां वियोगविचारेण दुःखितान् भक्तजनान् आमन्त्र्य तैः अनुगताः स्वामिनः संवृतेन बलीवर्दयानेन पाण्डुकोलम् अगच्छन्। टहूला नाम ग्रामं गत्वा ते नीलकण्ठमन्दिरे रात्रिम् अनयन्। अपरेद्युः अनुयायिभिः सह स्वामिनः नवक्रोशान्तरितं नारायणी नाम ग्रामं नारायण्याधिष्ठितं पद्भ्याम् अगच्छन्। अत्र सर्वान् अनुयायिनः विसृज्य स्वामिनः एकाकिनः जयपुरमार्गस्थाः[10] अभवन्।

जयपुरे स्वामिनः सप्ताहद्वयं न्यवसन्। तत्र तैः कस्यचित् पण्डितस्य समीपे व्याकरणाध्ययनं प्रारब्धम्, स्वीयेन च भाष्यग्रहण-सामर्थ्येन स पण्डितः विस्मापितः। एतम् अनुभवम् अन्तरेण ते पश्चात् अब्रुवन्, 'उत्कटेन मनसा यत् किमपि कर्तुं शक्यम्। पर्वतोऽपि विमृद्य परमाणुगतं शक्यते।' अत्रापि स्वामिभिः मूर्तिपूजायाः महत्त्वं विशदीकृतम्। एकदा कस्याञ्चित् देवतामात्रायां प्रचलितायां मूर्तिपूजायाम् अश्रद्दधानं हरिसिंहं नाम सेनाधिकारिणं सहसा स्पृष्ट्वा स्वामिनः अवोचन्, 'पश्य! जीवन्तीं देवतां पश्य!' हरिसिंहेन दृष्टम्। जनैः स्कन्धेन उह्यमाना कृष्णमूर्तिः स जीवन्ती प्रत्यभात्! जयपुरे सूर्यनारायणो नाम पण्डितः आसीत्। एकदा कथाप्रसङ्गेन सः अवदत्, 'स्वामिन्! अहं वेदान्ती अस्मि। नाहम् अवतारेषु विश्वसिमि। सर्वे वयं ब्रह्मैव। को वा मत्तः अवताराणां भेदः?' 'सत्यमाह भवान्,' स्वामिनः ऊचुः, 'तथापि इदम् उच्यताम्। हिन्दवः मत्स्य-कूर्म-वराहान् अपि अवतारान् मन्यन्ते। एतेषु कतमो भवान्?' स्वामिनाम् एतेन भेदकेन प्रत्युत्तरेण उपहसिताः जनाः पार्श्वोपविष्टाः अहसन्, पण्डितश्च निरुत्तरः अभवत्।

जयपुरात् स्वामिनः अजमीरं गत्वा, ततश्च ग्रीष्मर्तौ अर्बुद-पर्वतम् अगच्छन्। अस्मिन् निसर्गरमणीये शैलस्थाने स्थिताः ते अनेकैः

१०. परिव्राजकावस्थायां स्वामिनां प्रथमं छायाचित्रं जयपुरे गृहीतम्।

अधिकारिभिः परिचिता अभवन्, येषु मुन्शी जगमोहनलाल नाम खेत्रीनरेशस्य सचिवोऽपि अन्यतम आसीत्। स राजदर्शनार्थं स्वामिनं अनयत्। खेत्रीनरेशेन स्वामिना हार्दं स्वागतं विहितम्। कुशलप्रश्नोत्तरं तयोः एवं प्रश्नोत्तरम् अभवत्।

नरेश. – स्वामिन्! किं नाम जीवितम्?

स्वामिन – प्रतिकूलपरिस्थितौ जीवस्य नैसर्गिकी विकसनोन्मुखी प्रवृत्तिः, आत्माविष्कारश्च।

नरेश – किं नाम शिक्षणम्?

स्वामिन – विशिष्टकल्पनानां रक्तगतं साहचर्यम्[११]।

एतदुत्तरं स्वामिनः नरेशाय श्रीरामकृष्णचरितम् अकथयन्। एवं च अनेकान् दिवसान् नरेशः स्वामिनां मुखात् निर्गतान् उपदेशान् शृण्वन् तस्थौ। तत्रत्यायाम् अवस्थितौ समाप्तायां नरेशेन प्रार्थिता स्वामिनः तेन सह खेत्रीम् अगच्छन्। कतिपयै दिवसैः विनयेन शिबिरनिर्मितः नरेशः स्वामिनं शिष्यत्वेन अङ्गीचक्रुः। उभयोः सहृद् सदा वर्धमानम् अन्तं यावत् अतिष्ठन्।

स्वामिनः खेत्र्यां कानिचित् सप्ताहानि अयापयन्। अत्र निवसता तेषां च नारायणदासो नाम विख्यातो वैयाकरणं सह परिचय अभवत्। 'एषोऽवसरः' इति मत्वा स्वामिभिः तेषां सकाशादपि व्याकरणमहाभाष्यम् अधीतम्। गतेषु कतिपयदिवसेषु पण्डितः अवदत्, 'स्वामिन्! दुर्लभा युष्मादृशः शिष्यप्राप्तिः। मत्सविधे वर्तमानं सर्वं ज्ञानं मया युष्मभ्यं प्रदत्तमस्ति।'

खेत्रीनरेशस्य स्वामिषु कोऽपि अकल्पनीयः आसीत्। स तेषां पादसंवाहनमपि करोति स्म। स्वामिभिस्तु सर्वजनप्रकाशं तथा कर्तुं

११ कतिपय दिवसानन्तरं नरेशेन अयमेव प्रश्नः पृष्टः – 'स्वामिन्, को नाम नियमः (Law)?' स्वामिनः ऊचुः, 'इन्द्रियद्वारा प्राप्तानां बाह्यवस्तुसंस्काराणां मनसा विहितः व्यवस्थाविशेषः। नियमो नाम न किंचित् बाह्यं वस्तु किं तु आभ्यन्तरः बुद्धिगतः कार्यविशेषः।'

स प्रतिषिद्ध । नरेश अपुत्र आसीत् । एकदा तेन 'दीयतां मह्यम् आशी, येन मे पुत्रो जायेत, ' इति स्वामिन प्रार्थिता । भक्तवत्सलै स्वामिभि तदनुकूला आशी प्रयुक्ता । कैश्चित दिवसै सजात-भ्रमणेच्छा स्वामिन खेत्री विहाय कर्णावतीम्[12] उद्दिश्य प्रातिष्ठन्त ।

शाक्तै बन्दीकृताना स्वामिना प्रसङ्गावधानम्

कर्णावत्या जैनमन्दिरै तृप्तनत्रा स्वामिन कानिचित् दिवसान् भिक्षोपजीवितया यत्र तत्र अटित्वा अन्ते श्री लालशकर उमाशकराणा गृहे अतिथित्वेन अवसन् । अत्र तै जैनदर्शनस्य पूर्वाभ्यास दृढीकृत । तत ते वढवान मार्गेण लिम्बडीम अगच्छन् । अत्र तै एका अकल्पिता आपद् अनुभूता । धर्मशालायां कृतवसतय ते कैश्चित वामाचारै शाक्तै एकस्मिन् कक्ष बन्दीकृता स्वसाधनासिद्ध्यर्थं च स्वामिना बलात् ब्रह्मचर्यभङ्ग सकल्पित । स्वामिन क्षण भयग्रस्ता अभवन् । प्रत्युत्पन्नमतिभिस्तु तै तेषु उपस्थितवते कस्यचित् बालस्य हस्ताभ्या सर्वं वृत्तान्त निवेदयितु एक पत्र गूढ तत्रस्थाय ठाकुरमहोदयाय प्रेषितम्[13], आत्ममोचनार्थं च प्रार्थना कृता । विदितवृत्तान्त ठाकुरमहोदय सपदि स्वसैनिकान् प्रेषयित्वा स्वामिन अमोचयत् । तांश्च स्वगृह निवासार्थम् अनाययत । लिम्बड्या स्थानिकै पण्डितै सह अनेकदा स्वामिना चर्चा अभवत् । तदानी पुरीस्थ-गोवर्धनपीठाधीशा श्रीशकराचार्या तत्र उपस्थिता आसन् । स्वामिना पाण्डित्येन सहिष्णुतया च ते विस्मिता अभवन् । इत उत्तरम् आवासस्य सहप्रवासिना च स्वीकारविषये स्वामिन जागरूका अभवन् ।

लिम्बडीत स्वामिन भावनगरद्वारा जूनागढम् अगच्छन् । तत्र ते बाबू हरिदास विहारीदास इत्याख्यस्य दिवाणस्य गृहे अवसन् । अत्र स्वामिभि कथाप्रसङ्गेन यशु-ख्रिस्तस्य धर्ममतानि प्रतिपादितानि तेषा च हिन्दुधर्मेण प्रभावितत्व विशदीकृतम् । भूतकाले मध्याशियाया, पश्चिमाशियायां च सवृत्त विचारसङ्गमोऽपि तै स्पष्टीकृत । स्वामिना मुखात् श्रुत्वा रामकृष्णपरमहस चरितमपि तत्रत्याना जनाना परिचितम्

---

१२ अहमदावाद ।

१३ जलकुम्भे कृष्णाङ्गारेण अयं सदेश लिखित आसीत् इत्याहु ।

अभवत्। समीपस्थं गिरनार-पर्वतमपि स्वामिन आरोहन्। तत्र एकान्ते कस्याचिन् गुहाया स्थित्वा स्वामिन कतिचित् दिनानि साधनाम अनुतिष्ठन्त अवसन्। प्राचीन-स्मारकेषु आस्थावद्भि तै तत्रस्थानि मन्दिरादिकानि निरीक्षितानि। ततो पुनरपि जुनागड निवृत्तास् ते भ्रमणेच्छाप्रणोदिता भुज प्रपयु। तत्रत्येन प्रधानामात्येन सह कृषि-उद्योगादिकम् आर्थिकविषयम् अन्तरेण स्वामिभि चर्चा कृता। शिक्षणप्रसारस्य आवश्यकताऽपि तै प्रतिपादिता। तत पुनरपि जुनागडम् आगत्य ते सोमनाथं (प्रभासपट्टनम्) अगच्छन्। तत्र तै सूर्यमन्दिरम् अहल्याराज्ञ्या नवीकृत सोमनाथमन्दिर च दृष्टम्, त्रिवेणीसगमे च स्नातम्। तदानी मिलित कच्छ-नरेश अवदत्, 'स्वामिन, भवता भाषण श्रुत्वा मस्तक घूर्णति। कथ भवान् इद बुद्धिविभवम् उपयोक्ष्यते? न हि अद्भुतानि अननुष्ठाय भवान् स्थास्यति।'

### वेदानुवादे साहाय्यम्

तत स्वामिन पोरबन्दर (सुदामपुरीम्) अगच्छन्। तदानी शकर पाण्डुरङ्ग पण्डित इत्याख्या सुप्रसिद्धा वेदाभ्यासका तत्र दिवाणपदम् अलचक्रु। तै वेदानाम् अनुवाद प्रारब्ध आसीत। स्वामिना वेदविषये प्रभुत्वेन प्रभावितैस् तै वेदानुवादकार्ये आत्मन साहाय्यार्थं तत्रैव वस्तु स्वामिन प्रार्थिता। तदनुसारेण स्वामिन तत्र एकादश मासान् ऊषु। अत्रैव व्याकरणमहाभाष्यस्य अध्ययन समाप्य, पण्डितमहोदयाना वचनम् अनुसृत्य तै फ्रेञ्चभाषाया अध्ययन प्रारब्धम्।

अथैकदा स्वामिना बुद्धिविभवेन, ज्ञानस्य वैशाल्येन, कल्पनाना च अभिनवत्वेन हृदि कृतपदा पण्डित-महोदया अब्रुवन्, 'स्वामिन्! विरला अत्र भवन्माहात्म्यविज्ञा। पश्चिमा गच्छतु भवान्। पाश्चात्या भवन्त सुष्ठु ज्ञास्यन्ति। तेषु सनातनधर्मस्य प्रसार भवता कर्तव्य[१४]।'

---

१४ इम प्रसङ्ग वर्णयन रोमाँ रोलाँ (The life of Vivekananda p 27) 'At Porebander a pandit advised him to go to the West' इति लिखति। अत्र पण्डितशब्दस्य व्यक्तिविशेषवाचकत्वम् अजानान रोमाँ रोलाँ भ्रान्त्या न शब्द विद्वत्पर्यायम् अवगच्छति।

यत्सत्यं स्वयं स्वामिनामेव मनसि एतादृशी अस्पष्टरूपा इच्छा किंचित्पूर्वम् उदिताऽऽसीत् । श्री. पण्ड्या-महोदय तैः इदम् उक्तोऽप्यासीत् । इदानीं तस्या एव इच्छाया. प्रतिध्वनिमिव पण्डितमुखेन उत्पन्न श्रुत्वा ते प्रमुदिताः अभवन् ।

पोरबन्दरात् स्वामिन द्वारकां गता । द्वारकानाशेन व्यथितहृदयाः स्वामिन भाविकालम् अन्विष्यन्त इव कंचित् कालं नि.शब्द तीरे उपाविशन् । ततश्च उत्थाय श्रीशंकराचार्याणा शारदामठम् अगच्छन् । ततश्च प्रस्थाय माण्डवी-नारायणसरोवर-पलिताना प्रभृतीनि स्थानानि दृष्ट्वा स्वामिन बडोदरं (बडोदा) जग्मुः । अल्पं काल बटोदरे उषित्वा ते खाण्डवाम् अगच्छन् । तत्र ते बाबु हरिदास चट्टोपाध्यायाना गृहे न्यवसन्[१५] । अत्र स्वामिन. त्रीणि सप्ताहानि अनयन् । 'स्वामिना भाषणे दम्भस्य लेशोऽपि नासीत् । तेषाम् उन्नता विचारा. उदात्ताश्च भावा' उदारवक्षोरूपेण सहजतया मुखात् न्यस्यन्दन्त' इति स्वामिन अन्तरेण पश्चात् हरिदासबाबु अवदत् । अत्र बङ्गीयाना संमिलने स्वामिनः उपनिषदा विवरणम् अकुर्वन् ।

**सर्वधर्मपरिषद्-गमनसंकल्पः**

अमेरिकाया शिकागो इत्यत्र सपत्स्यमानायाः सर्वधर्मपरिषदः वार्ता पूर्वमेव—जुनागढे वा पोरबन्दरे वा—स्वामिना कर्णपथम् आगता आसीत् । तत्र स्वीया उपस्थितीच्छा अधुना अत्र खाण्डवाया स्वामिभि प्रथममेव स्पष्ट प्रकटीकृता । 'यदि कश्चित् मम प्रवासव्ययस्य व्यवस्थां विदध्यात्, तर्हि तत् शोभन भवेत्,' स्वामिन. हरिदासबाबूसमीपे अवदन् ।

**'लोकमान्य'-सहवासः**

जुलै मासस्य (१८९२) तृतीयसप्ताहे खाण्डवा विहाय स्वामिनः मुम्बापुरीम् अगच्छन् । तत्र ते श्री छबिलदासमहोदयस्य गृहे कानिचित्

---

१५. एतत्स्थानप्राप्ते पूर्वं तु स्वामिनां बह्वी अटाटचा कर्तव्या आसीत् । प्रायः अस्मिन्नेव अवसरे तेषा मलवाह-गृहे निवास कर्तव्य आसीत् इति भाति ।

सप्ताहानि न्यवसन्। मुम्बापुरीत स्वामिन पुण्यपत्तनम् गन्तु प्रस्थिता। दैवयोगात् ते रेलयानस्य तस्मिन्नेव कक्ष आसन्, यत्र लोकमान्यतिलका अपि आसन्। आदौ तावत् 'स्यात् अय कश्चित् सामान्यो भिक्षु,' इति बुद्ध्या लोकमान्यै न तेषु किमपि विशेषम् अवधान प्रदत्तम्। पश्चात् स्वामिना किंचिद् भाषण श्रुत्वा तेषा पाण्डित्यम् अवगत्य लोकमान्या तान् पुण्यपत्तने स्वीये निवासे निवासार्थम् आनयन्। अत्र स्वामिन दश दिनानि अवात्सु। एतान् दिवसान् अविरतप्रचलिते तयो चर्चाकाण्डे गीतोक्त कर्मयोगोऽपि लब्धावकाश स्यात् इति अवधितमपि तर्कयितु शक्यम्। एव दश दिनानि स्वगृहे उपितस्यापि अस्य अतिथिसन्यासिन नामधेय लोकमान्यै अविदितमासीत्। पश्चात् सर्वधर्मपरिषद समेलनावसरे वृत्तपत्रेषु प्रकाशित स्वामिना चित्रम् अवलोक्य लोकमान्या साश्चर्यम् ऊचु, 'अय तावद् गतवर्षे अस्मद् गृहे उपित सन्यासी!'

पुण्यपत्तनात् महाबलेश्वर गत्वा तत्र कानिचित् दिनानि उषित्वा तस्मात् स्थानात् ते कोल्हापूरम् अगच्छन्। तत्र राज्ञ्या भक्ति भावेन समर्पित शाटिकाद्वय स्वीकृत्य बेलग्रामम् (बेळगाव) अगच्छन्[१६]। कोल्हापुरीयै कार्यभारिभि बेलग्रामस्थाना श्री भाटे इत्याख्याना कृते एक परिचयपत्र दत्तमासीत्। तद् गृहीत्वा ते भाटेमहोदयाना गृहम् अगच्छन्, तेषा च गृहे अतिथित्वेन कानिचित् दिनानि अवसन्। स्वामिनाम् उष्णीष, तेषा ताम्बूलभक्षण, तमाखुसेवन च दृष्ट्वा आदौ तावत् तेषा विषये भाटेगृहजनस्य मनसि न कोऽपि विशेष आदर समजनि। गच्छता कालेन तु स्वामिना पाण्डित्य - ऋजुत्व - वक्तृत्व - सौजन्यप्रभृतीन् गुणान् अवलोक्य 'नूनम् अय कश्चित् महापुरुष' इति तेषा मति अजायत। अत्रैव बेलग्रामे स्वामिना बाबू हरिपाद मित्र इत्याख्यै वनाधिकारिभि सह परिचय सजात। स्वयम् अनिच्छन्तोऽपि स्वामिन तेषाम् आग्रहवशात् तेषाम् अतिथित्व जग्मु।

---

१६ प्रवासे अय स्वामी नाम कश्चित् dangerous patriot इति मन्यमानस्य तदानीतनस्य आङ्ग्लशासनस्य गुप्तचरा स्वामिन अन्वसरन्। 'इयमपि प्रेममूर्ते ईश्वरस्य लीलैव,' इति मन्वाना स्वामिन तान् अवाजानन्।

स्मरणशक्ति रहस्यम्

अथैकदा न केवलं धार्मिकाणां ग्रन्थानां किं तु 'पिक्विक पेपर्स' सदृशग्रन्थस्यापि भूयांसं भागं स्वामिना कण्ठस्थं दृष्ट्वा 'कतिवारम् अयम् ग्रन्थः (पिक्विक पेपर्स) भवता पठितः?' इति पृष्टाः स्वामिनः 'द्विवारम्' इति प्रत्यवोचन्। तदानीं द्विवारपठनमात्रेण एतावतो ग्रन्थस्य कण्ठस्थीकरण-निमित्तम् मित्रमहोदयं आश्चर्यं प्रकटीकृते स्वामिनः अवोचन्, 'शारीरिकशक्तीनां सचयेन मनःशक्तिः वर्धते। जनास्तु स्वैरेण विषयोपभोगेन स्वशक्तिम् अपव्ययीकुर्वन्ति।' मित्रमहोदयाः सदैव अस्वस्थशरीराः अत एव गर्हणाशीलाः आसन्। तान् स्वामिनः एवम् उपादिशन्—'आनन्दी भव। सात्त्विको भव। उदात्तान् विचारान् चिन्तय। येन च पश्चात्तापो भवेत्, तादृशेषु उपभोगेषु मा मतिं कृथाः। एवं सर्वं कल्याणोदर्कं भविष्यति। यच्च इदं मृत्युभयं नाम, त्वयि मयि वा मृते का वा जगतो हानिर्भविष्यति?' इत्येवमादिभिः वचोभिः स्वामीनः तेषां बलाधानम् अकुर्वन्।

स्वामिना न केवलं वेदवेदान्तादीनाम्, भौतिकशास्त्राणाम् अपि ज्ञानेन बेलग्रामस्था जनाः विस्मिता अभवन्। उभयोः अपि धर्मविज्ञानयोः सत्यं नाम एकमेव साधारणम् उद्दिष्टम्, सत्यं च सर्वत्र एकमेव इति स्वामिनः प्रत्यपादयन्। अथैकदा स्वामिनां मुखात् सर्वधर्मपरिषदर्थम् - अमेरिकागमनसंकल्पं श्रुत्वा मित्रमहोदयाः प्रमुदिताः उत्साहपूर्णाश्च भूत्वा तदर्थं स्थानिकेभ्यः जनेभ्यः निधिं सचेतुम् ऐच्छन्। स्वामिभिस्तु कुतोऽपि निमित्तात् ते प्रतिषिद्धाः। बेलग्रामात् प्रस्थानात् पूर्वं स्वामिभिः स्वयजमानः तस्य पत्नी च तयोः प्रार्थनां गृहीत्वा शिष्यत्वेन अनुगृहीतौ

मैसूरे

बेलग्रामात् गोमन्तकमार्गेण स्वामिनः बङ्गलूरम् अगच्छन्। आदौ तावत् कतिचित् अहानि ते अज्ञाताः अवसन्। ततस्तु ते मैसूर-राज्यस्य दिवाणः सर के शेषाद्रि अय्यरमहोदयः परिचिताः अभवत्। कति-पयमात्रेण सभाषणेन 'नूनम् एतेन प्रसभाकर्षिणा व्यक्तित्वेन, ऐश्वरेण च सामर्थ्येन सपन्नोऽयं सन्यासी स्वदेशस्य इतिहासोपरि स्वनाममुद्राम् अनङ्कयित्वा न विश्राम्येत्,' इति दिवाण-महोदयानां दृढा मतिः अभवत्। ते ततस्तो नरेशः सर चामराजेन्द्र वाडियार महोदयोऽपि अनेन 'युवा-

चार्येण' सह परिचायित । स्वामिना 'स्वच्छविचारतया, प्रसन्नेन व्यक्तिमत्त्वेन, पाण्डित्यस्य वैशाल्येन, धर्मबुद्धेश्च तीक्ष्णत्वेन' विस्मित नरेश तान् शासकीयातिथित्वेन सभावयामास । अथैकदा स्वीयेन दिवाणगतेन नरेशगतेन च स्पष्टभाषणेन स्वामिभि निजम् अभयत्वलक्षण सन्यासित्व प्रकटीकृतम् । तदा तेषु समुपजातभक्त्यादर नरेश राजसभीयजगता सुपरिचित सन् स्वामिगतप्रेम्णा तान् सावधानभाषणार्थं प्रार्थयामास । स्वामिषु मैसूरे निवसत्सु एका पण्डितपरिषत् समिलिता । तत्र स्वामिभि आविष्कृतेन शास्त्रपाण्डित्येन जनता यथा विस्मिता अभवत्, तथैव तेषा पाश्चात्यसगीतविज्ञानेन, विद्युत्तन्त्रज्ञत्वेन च ।

अथैकदा स्वामिषु परमप्रीत दिवाण तेभ्य सहस्ररूप्यकमूल्य किमपि उपायन दित्साचकार । तदनुसारेण दिवाणस्य सचिवेन सह विपणि गता स्वामिन आपणात् आपण भ्राम भ्रामम् अन्ततो महार्घतमम् एक 'सिगारम्' (तदानीतन-शिलिङ्गमूल्यकम्) आदाय आपणात् निश्चक्रमु । 'प्रीतोऽस्मि अनेन उपायनेन' निचतुर-फूत्कारोत्तर ते प्रीत्या अवदन् । एकदा महाराजेनापि आहूय, 'स्वामिन् ! किं ते प्रिय करवाणि ?' इति ते पृष्टा । तदा स्वामिभि स आत्मन जीवितकार्यस्य, वेदान्तप्रसाराय च अमेरिकागमन सकल्पस्य गृहीतार्थं कृत । महाराजेन तत्क्षण प्रवासव्ययस्य प्रदानेच्छा प्रकटीकृता। स्वामिभिस्तु कुतोऽपि कारणात् तदानी धनग्रहण प्रत्याख्यातम् । प्रस्थानसमये प्रत्यासन्ने तु लविकलवस्य नरेशस्य प्रार्थनाम् अङ्गीकृत्य स्वामिभि स्मरणीयम् इति कृत्वा आत्मन शब्दाना ध्वनिमुद्रणम् अनुमतम् । सा ध्वनिमुद्रिका नरेशस्य समीपे अतिष्ठत्। अन्ते नरेशेन प्रदत्तम् उपायनभार प्रत्याख्याय, तत्समाश्वासनार्थम् एका 'हुक्काम्' स्वीकृत्य, पादपूजनोत्सुक नरेश निवार्य स्वामिन प्रातिष्ठन्त ।

ततश्च कदली-नारिकेल-ललितस्य, निसर्ग-सुन्दरस्य, शकर-भगवन्-पादाना जन्मभूमिभूतस्य केरलस्य दर्शनेन चक्षुषी निर्वापयन्त स्वामिन त्रिचूर-तिरु-अनन्तपुर[१७] (Trivandrum) मार्गेण मदुराम् अगच्छन् । तत्र

१७. तिरु-अनन्तपुरे स्वामिन प्रा सुन्दरराम-ऐयर इत्येतेषा गृहे नव दिनानि अवसन् ।

मिलित भास्कर-सेतुपति इत्यास्य रामनाड-नरेश तेषा शिष्यत्व गत । तेन सह स्वामिभि देशस्य समस्या अन्तरेण चर्चा कृता। 'स्वामिभि सर्वधर्मपरिषदि सम्मिलितुम् अमेरिकाम् अवश्य गन्तव्यम,' इति प्रोत्साहिता स्वामिन 'पश्यामि तावत्, यथावकाश मम निर्णय निवेदयिष्यामि' इत्याश्वास्य रामेश्वरदर्शने त्वरमाणहृदया प्रतस्थिरे। रामेश्वर प्राप्य उत्तुङ्गगोपुर सुविशालपथ च मन्दिर प्रविश्य, श्रीरामचन्द्र-प्रतिष्ठापित [18] तत् शिवलिङ्ग पूजयित्वा स्वामिन आत्मान कृतार्थम् अमन्यन्त। रामेश्वरात् स्वामिन कन्याकुमारीम् अगच्छन्।

कन्याकुमार्यां जीवितकार्यनिश्चय

कन्याकुमारी गत्वा स्वामिन देवीमन्दिर प्राविशन्। देवीपुरत दण्डवत प्रणम्य ते ता पूजयामासु । पूजनोत्तर निर्गत्य ते समुद्रतीरम अगच्छन्। समुद्र तै एका महती शिला दृष्टा। तत् देव्या तप स्थानमिति श्रुत्वा ते तत्र गन्तुम् एच्छन्। किन्तु नाविकेभ्यो दातु तेषा समीपे कपर्दिकाऽपि नासीत्। स्वामिन सागरे उत्प्लुत्य तरीतु प्रवृत्ता । समन्तात् वात्यागृहीत सागर प्रक्षुब्ध आसीत्। स्वामिना मनसि तु ततोऽपि प्रक्षुब्धतर प्रभञ्जन बभ्राम। अन्ते शिलाम् आसाद्य ते आरुह्य ताम् अध्यासत।

भारतस्य दाक्षिणात्यतम-अवयवभूता शिला स्वामिन अध्यासन। तै पादाक्रान्त समग्रोऽपि भारत देश तेषा मनश्चक्षुष पुरत आगत । न केवल वर्तमान किन्तु वर्षाणा सहस्रसहस्रकाणि व्याप्त भूतकालोऽपि। न कोऽपि प्रदेशविशेष किन्तु आसेतुहिमालय समग्रो भारत । तत्र तै दृष्ट यत् भारतस्यात्मा धर्मोऽस्ति इति। भारत पुनरपि उत्थाय जगत मार्गदर्शन करिष्यति इति तेषा दृढा मति अभवत्। तै इदमपि दृष्ट यत्

१८ अस्मिन् विषये श्रुता एका कथा अत्र प्रसङ्गोचितत्वेन निर्दिश्यते। श्रीरामकृष्णाना निर्वाणोत्तर तीर्थयात्राप्रसङ्गेन भगवती माताजी रामेश्वर गता। तत्र गत्वा शिवलिङ्ग पूजयित्वा कचित् काल तस्य पुरत माताजी उपविष्टा। कतिपयक्षणोत्तर 'यथा तदानी त्व (आवाभ्या) प्रतिष्ठापित, तथैव अद्यापि असि,' इति शब्दा भगवत्या मुखात् निर्गता ।

भारतस्य य साम्प्रतिक अध पातो दृश्यते, तस्य कारण नाम तस्य स्वत्वनाश., आत्मविस्मृति । तैं इदमपि दृष्ट यत् आध्यात्मिकताया पुन प्रतिष्ठापना इव दारिद्रयस्य अपसारणमपि परमम् आवश्यकम् । न हि समाजस्य एकम् अवयव दैन्य-दारिद्रययो निरुध्य अपरोऽवयव यथार्थत उत्थातु शक्नोति । न बुभुक्षित प्रति धर्मो भाति इति रामकृष्णवचन सत्यम् आसीत् । एव चिन्तयता स्वामिना मनसि सहसा एक विचार अस्फुरत् । कुत सन्यासिभि ग्राम ग्राम गत्वा जना न अध्यापनीया ? स्वच्छता न प्रतिपादनीया ? क्षुधिता न भोजनीया ? जनाना दारिद्रयादि-दुखाऽपनोदार्थं प्रयत्ना न कर्तव्या [१९] ? स्वामिना निश्चय अभूत् । धर्मो नाम न केवल जपजाप्यम्, ध्यानधारणा, मूर्तिपूजा वा, किं तु मनुष्यरूपेण आविर्भूतस्य नारायणस्य सेवापि । इत पर क्षुधितनारायणस्य, पतितनारायणस्य, रुग्णनारायणस्य सेवैव मे धर्म ।

एतदर्थम् आवश्यक धन तु कुत आनेतव्यम् ? भारते वाचिवीरा बहव आसन, विरलास्तु दानशूरा । ध्यानमग्नाना स्वामिना दृष्टि समुद्रम् उत्तीर्य पाश्चात्यदेशोपरि अपतत् । पश्चिमाया समीपे धनम् आसीत् , सा अध्यात्मम् अपेक्षत । भारतस्य समीपे अध्यात्मनिधि आसीत्, स द्रव्यम् अपेक्षत । "अहम अमेरिका गत्वा पाश्चात्यापेक्षितम् अध्यात्म वितीर्य तत भारतीय-जनाना दैन्यनिवारणार्थम् आवश्यक द्रव्यम् अत्र आनेष्यामि," स्वामिन अचिन्तयत् ।

---

१९ पश्चात् प्रेषिते एकस्मिन् पत्रे स्वामिन एव लिखन्ति – "At Cape Comorin, sitting in Mother Kumari's temple, sitting on the last bit of Indian rock I hit upon a plan We are so many Sannyasins wandering about and teaching the people metaphysics — it is all madness Did not our Gurudeva use to say, 'An empty stomach is no good for religion?' Suppose some disinterested Sannyasins, bent on doing good to others go from village to village, disseminating education and seeking in various ways to better the conditions of all down to the Chandala will not that bring forth good in time ?... '

# ११. अमेरिका-प्रयाणम्

१८९२ खिस्ताब्द समाप्तप्रायः आसीत्। स्वामिना कन्याकुमारीत प्रस्थाय रामनाडद्वारा पॉण्डिचरीं पद्भ्यामेव अगच्छन्। तत्र एकेन पण्डितेन सह स्वामिना परदेशगमन-विषये दलितोद्धारविषये च तीव्र विवाद अभवत्। पॉण्डिचर्यां कानिचित् दिनानि विश्रम्य श्री. मन्मथनाथ-भट्टाचार्येण सह ते मद्रासम् अगच्छन्। तत्र उपदशाः युवान स्वामिना स्वागतार्थं स्थानक समुपागताः आसन्। अत्रैव मद्रासे प्रथमे निष्ठावन्त अनुयायिन स्वामिभिः लब्धा, विदेशगमनार्थं च द्रव्य लब्धम्। पश्चात् स्वामिना सघटनात्मक कार्यमपि अत्रव प्रारभत।

**मद्रासे**

अत्र स्थितै स्वामिभि सह चर्चार्थम आगताना जनाना समर्दः सदा सनिहित आसीत्। एकदा चर्चाप्रसङ्गेन 'कथ नाम वेदान्तप्रवणा. हिन्दव मूर्तिपूजका ?' इति केनचित् पृष्टे झटिति 'यतो हिमालय. अस्माक वर्तते,' इति स्वामिन अवोचन्। हिमालयसदृशीषु भगवद्विभूतिषु समन्तात् सतीषु कथमिव हिन्दव मूर्तिपूजका न भवेयु इति स्वामिनाम् आशय आसीत्। अविचार्य यत् किमपि पृच्छत, पूर्वजान् ऋषीन् वा निन्दत जनान् ते विदितस्वाधिकारा तीव्रै शब्दै निर्भर्त्सयन्ते स्म। तेषा हृदय नु अनुकम्पामृदु आसीत्। एकदा समुद्रतीरे पादचारार्थं गतास् ते काश्चित क्षुत्क्षामकण्ठान् धीवरबालान् ऊरुदघ्ने समुद्रजले मातृभि सह कर्मण्यापृतान् दृष्ट्वा अश्रुपूर्णनेत्रा आक्रोशन्, 'हे भगवन्! कुतस्त्वम् एतान् दीनजनान् निर्मासि[१]!'

१ 'O Lord! why dost Thou create these miserable creatures! I cannot bear the sight of them How long, O Lord how long !'

**'मया ब्रह्म साक्षात्कृतम् अस्ति'**

एकदा विद्वत्समाजे ब्रह्म साक्षात्कारविषये केनापि सोपहासं तस्य अशक्यत्वे प्रतिपादिते 'मया ब्रह्म साक्षात्कृतमस्ति,' इति स्वामिनः आत्मविश्वासपूर्वकम् अवोचन्। 'किं नाम ईश्वरत्वम्? लक्षणं क्रियताम्' इति केनचित् उक्ते 'किं नाम एनर्जी? ब्रूहि तल्लक्षणम्,' इत्युक्त्वा स्वामिभिः स निरुत्तरीकृतः। एको नास्तिकः आगत्य स्वामिसहवासेन आस्तिकः अभवत्। 'किडी' इति स्वामिभिः कृतनामधेयः अयं विज्ञान-प्राध्यापकः स्वामिनां कार्येषु सहायकः अभवत्। स्वामिनां सार्वजनिक-सभासु भाषणाभ्यासः प्रथमं मद्रासे एव अभवत्[1]।

अत्र परिचयप्राप्तानां जनानां पुरतः स्वीयः अमेरिकागमनसंकल्पः स्वामिभिः प्रकटीकृतः। तम् अनुमोदमानाः तत्रत्याः तेषाम् अनुयायिनः द्रव्यं संचेतुं प्रारभन्त। स्वामिनस्तु दोलायमानचित्ताः आसन्। 'अपि अहं स्वेच्छयैव गच्छामि, उत ईश्वरेच्छया?' ते मनस्येव विचारयितुं प्रारभन्त। ते अम्बां प्रार्थयन्त, 'अयि अम्ब! त्वमेव कर्त्री असि। अहं निमित्तमात्रं भवितुम् इच्छामि। ज्ञापय मां तव इच्छाम्।' एवं जगदम्बां प्रार्थ्य स्वामिनः स्वशिष्यान् ऊचुः, 'अम्बाया इच्छां ज्ञात्वैव अहं गमिष्यामि। यदि सा मम गमनम् अनुमन्यते, तर्हि धनं स्वयमेव अत्र उपनतं भवेत्। अतः गृह्यताम् इदं धनम्, वितीर्यतां च तत् निर्धनेषु,' इत्युक्त्वा प्रवासव्ययार्थं शिष्यैः संचितं रूप्यकाणां पञ्चशतं ते शिष्येभ्यः प्रत्यर्पयन्।

**भागानगरे**

अत्रान्तरे भागानगर(हैद्राबाद)स्थैः कैश्चित् जनैः प्रार्थिताः स्वामिनः भागानगरं ययुः (१०-२-१८९३)। पञ्चशतप्रायाः जनाः स्वागतार्थं स्थानकम् आगताः आसन्। तेषु अनेके महामात्राः, पण्डिताश्च आसन्। स्वामिनः पुष्पमालाभिः भाराक्नताः अभवन्। न हि तत्र तत्पूर्वं

[1] पूर्वं खाण्डवायां स्थिताः स्वामिनः सार्वजनिकसभायां भाषणार्थं पृष्टाः आसन्। अनभ्यस्तसभाभाषणैः स्वामिभिः तदानीम् अर्धाङ्गीकारः प्रदत्तः आसीत्। किं तु कुतश्चित् कारणात् सभैव न समपद्यत।

कस्यापि सन्यासिन स्वागतार्थम् एतावान् जनसमूह समिलित आसीत्। अत्र निवसद्भि स्वामिभि विख्याततरला मोलकोण्डा दृष्टा। एकदा नवाबबहादुरेण सह स्वामिना धर्मचर्चा अभूत्। मुसल्मानेन सतापि अनेन सहिष्णुना नवाबेन आसेतुहिमाचल तीर्थयात्रा कृता आसीत्। तस्मै स्वामिभि सगुणसाकारस्य ईश्वरस्य पूजा प्रतिपादिता। स्वामिना विदेशगमनसकल्प विदित्वा स प्रवासव्ययार्थं द्रव्य दातुम् एच्छत्। स्वामिभिस्तु 'इदानी माऽस्तु। पश्चात् द्रक्ष्यामि,' इत्युक्तम्। अन्यैरपि तत्रत्यै महामात्यप्रभृतिभि सह स्वामिना दर्शनभाषणानि अभवन्। १३–२–९३ दिने महबूब महाविद्यालये 'मम विदेशगमनम्' इति विषयम् अधिकृत्य सहस्रमितस्य जनसमूहस्य पुरत स्वामिना भाषणम् अभवत्।

**विदेशगमनार्थम आदेश**

१७ फेब्रुअरी दिने भागानगर विहाय स्वामिन पुनरपि मद्रासम् अगच्छन्। 'स्वामिना धर्मनिष्ठेन सारल्येन, अव्यभिचारिणा आत्मसयमेन, प्रगाढया च ध्यानसम्पदा भागानगरस्था जना प्रभाविता अभवन्,' इति कालीचरणबाबु लिखति। मद्रास निवृत्ताना स्वामिना चर्चाभाषणादिक दैनिक कार्यक्रम प्रवृत्त। प्रतिदिन शिष्याणाम् अनुयायिना च सख्या अवधत। किं तु स्वामिन अस्वस्थमनस्का आसन्। एकत ते अमेरिका गन्तुम् उत्सुका आसन्। श्री अलसिंह पेरुमाल प्रभृतय स्वामिना शिष्या स्वामिना प्रवासार्थं द्रव्यसचयपरा आसन्। अन्यतस्तु अद्यापि स्वामिभि आदेश लब्ध नासीत्। अत साक्षात आदेशम् अधिगन्तु तै दर्शन प्रार्थ्यत। अस्याम् अवस्थायाम् एकदा अर्धनिद्रितै तै प्रतीकरूपेण आदेश लब्ध। तै समुद्रतीरात् प्रस्थाय समुद्रजल प्रविशन्त श्रीराम-कृष्ण परमहसा दृष्टा। रामकृष्णै स्वामिन आत्मानम् अनुसर्तुं सज्ञया आदिष्टा। एतत् दृष्टवा स्वामिन जागरिता। अधुना तै स्वास्थ्य लब्धम्। अधुना शङ्का विलीना। अधुना तै 'गच्छ' इति आदेश लब्ध आसीत्। स्वामिन पूर्ववत् भगवत्या शारदादेव्या अपि आशिषम् इच्छन्त भगवत्यै पत्र विलिख्य स्वीय गमनसकल्प निवेदयाञ्चक्रु। भगवत्या आशिष च प्रार्थयाञ्चक्रु। मातृवात्सल्येन सद् गमन निरोद्धकामाऽपि रामकृष्णानाम् अभिप्रायज्ञा भगवती तेषां गमनम् अन्वजानात्।

एवं सर्वसन्देहनिरासोत्तरं प्रस्थानोद्यतेषु स्वामिषु सत्सु सहसा खेत्रीतः मुन्शी जगमोहनलालः स्वामिनं खेत्रीं नेतुं मद्रासम् आगतः। खेत्रीनरेशस्य पुत्रः सञ्जातः आसीत्। अस्मिन् आनन्दोत्सवे स्वामिनां सन्निधिम् इच्छता नरेशेन तान् निमन्त्रयितुम् अयं सचिवः प्रेषितः आसीत्। तस्य मुखात् आगमनप्रयोजनं श्रुत्वा 'ननु एकेनैव मासेन अमेरिकां गन्तुम् अहं प्रस्थास्ये। कथमिदानीं महाराजं द्रष्टुं मम तत्र आगमनं शक्यम् ?' इति स्वामिभिः असमर्थता प्रकटिता। जगमोहनलालस्तु 'मा युष्माकम् एतन्निमित्तं कापि चिन्ता अस्तु। महाराज एव सर्वमिदं सम्पादयिष्यति,' इत्युक्त्वा, सनिर्बन्धं प्रार्थ्य, स्वामिनम् आदाय खेत्रीम् अगच्छत्।

सर्वाऽपि खेत्रीनगरी उत्सवमयी आसीत्। स्वामिनं दृष्ट्वा महाराजः साष्टाङ्गं प्रणिपपात। महाराजः स्वामिनम् उपस्थितायां सभ्याम् परिचाय्य स्वामिनाम् आशीर्वचननिमित्तं मम पुत्रलाभः इत्यवदत्। नवजातं राजपुत्रम् आशिषा अभिनन्द्य कानिचिच्च दिनानि तत्र उषित्वा प्रवासव्यवस्थां विधातुं स्वामिनः मुम्बापुरीं प्रस्थिताः।

नर्तकीतः अध्यात्मपाठः

ससचिवः महाराजः जयपुरं यावत् स्वामिनम् अन्वगच्छत्। तत्र घटिते एकस्मिन् प्रसङ्गे विस्मृतमिव ब्रह्मामैक्यं स्वामिनः कस्याश्चित् नर्तक्याः सकाशात् अशिक्षन्त। एकदा सायंकाले नर्तक्याः नृत्यदर्शनार्थं महाराजः स्वामिनम् आह्वयत्। अनुचितं सन्यासिना नृत्यदर्शनम् इति कृत्वा स्वामिनः प्रत्याचख्युः। दूतो गत्वा स्वामिसंदेशं कथयामास। तं श्रुत्वा नर्तकी भग्नचित्ता अभवत्। बुद्ध्या अबुद्ध्या वा सा सूरदासस्य

हमारे प्रभु औगुन चित न धरो।
समदरसी है नाम तुम्हारो, सोई पार करो।
इक लोहा पूजामें राखत, इक घर बधिक परो।
सो दुबिधा पारस नहीं जानत, कंचन करत खरो।
इक नदिया इक नार कहावत मैलो नीर भरो।
जब मिलि गए तब एक बरन ह्वै गंगानाम परो।

इति पद्यं गातु प्रारभत। स्वामिन स्वकक्षस्थिता तद् गीतम् अशृण्वन्। ते अबुध्यन्त। चिन्तयामासुश्च–'मया अवज्ञाता इय नर्तकी अपि ब्रह्मण एव रूपम्। धिक् माम्! सन्यासी सपन्नोऽपि नाहम् अद्यापि भेदातीतोऽस्मि।' इति चिन्तयित्वा, उत्थाय, ते प्रेक्षागार गत्वा समाजे समिलिता अभवन्।

नरेन्द्र· विवेकानन्द अभवत्

मुम्बापुरी प्रस्थिनाना स्वामिना शुभाशसन दु खअडेन मनसा कृत्वा खेत्री–महाराजेन स्वामिन प्रार्थिता, 'स्वामिन्! इत पर गुरुचरणै. विवेकानन्द इति नाम ग्रहीतव्यम्।' स्वामिभि महाराजस्य प्रार्थना अङ्गीकृता। नरेन्द्र विवेकानन्द अभवत्'।

मध्येमार्गम् अबू-रोड स्थानके यदृच्छया मिलित. तुरीयानन्द स्वामिन मुम्बापुरी यावत् अन्वगच्छत्। (तदानी तुरीयानन्देन सह ब्रह्मानन्दोऽपि तत्र तपस्यापर· आसीत।) अबू-रोड स्थानके घटितः

---

३ गीतस्य भावार्थ – हे प्रभो! मा मम दोषान् अवेक्षस्व। समदर्शीति तव नाम अस्ति। एक लोहखण्ड देवालये मूर्तीभवति, अपर व्याधस्य क्षुरिका भवति, उभे अपि तु स्पर्शमणे स्पर्शेन समान स्वर्णत्व प्राप्नुत। अतो हे प्रभो! मा मम दोषान् अवेक्षस्व। एको जलबिन्दु यमुनाजले पतति, अपर मलिने रथ्योदके, उभौ अपि तु गङ्गोदकमिलितौ समान पूतौ भवत। अत हे प्रभो! मा मम दोषान् अवेक्षस्व।

अत्र शङ्करभगवत्पादानाम्

अय· स्पर्शो लग्न सपदि लभते हेमपदवीम्
यथा रथ्यापायः शुचि भवति गङ्गौघमिलितम्।

इति पङ्क्तिस्मरणम् अपरिहार्यम्।

४ विवेकानन्द इति नामसूचने खेत्री-नरेशस्य हेतु य कोऽपि भवतु। वाचकास्तु पुरा नरेन्द्रेण दारिद्र्यनिवारण प्रार्थयितु देवीमन्दिर गतेन तत्स्थाने विवेक एव प्रार्थित (पृ ४९), रामकृष्णैरपि नरेन्द्र. विवेक कर्तुं सदा उपदिष्ट· (पृ· ७२) इवि अनेन प्रसङ्गेन अवश्य स्मरेयुः।

एको वृत्तान्तः तुरीयानन्देन पश्चात् निवेदितः, यः स्वामिना दीनोद्धार-परमं धर्मं तेषां च आर्ततां पर्याप्तं विद्योतयति। स्वीयम् अमेरिकागमन-सङ्कल्पं निवेद्य धर्मकथाप्रसङ्गेन स्वामिनः भावार्तां भूत्वा सहसा तुरीयानन्दम् अवोचन, 'हरिभाई! युष्माभिः धर्मः धर्मः इति य उच्यते, नाहं तम् अद्यापि अवगन्तुं समर्थः।' ततः गभीरेण दुःखेन आक्रान्तवदना, तीव्रेण भावातिरेकेण च वेपमानशरीरास् ते स्व-वक्षसि हस्तं निधाय पुनरपि अवोचन्, 'किं तु मम हृदयं विस्तीर्णता प्राप्तमस्ति, सवेत्तुं च अधुना जानामि। श्रद्धत्स्व। उत्कटं सवेद्मि।' भावावेशेन रुद्धकण्ठा, विगलित-अश्रुप्रवाहाश्च स्वामिनः कञ्चित्कालं तूष्णीम् अतिष्ठन्। इमं वृत्तान्तं निवेद्य स्वयं गद्गदितकण्ठः, अश्रुबिन्दुभिः तारकितपक्ष्माग्रः तुरीयानन्दः दीर्घं निश्वस्य पुनरवोचत्, 'इदं श्रुत्वा मदीया या अवस्था सञ्जाता, अपि युष्माभिः सा उत्प्रेक्षितुं शक्यते? किं नैते साक्षात् बुद्धस्य शब्दाः, तस्यैव च भावाः?' अहम् अचिन्तयम्*। मया स्पष्टं दृष्टं यत् अखिलायां मनुष्यजातौ दुःखानुभूतिः स्वामिनां हृदये स्पन्दमानाऽस्ति'५।"

---

* पुरा बुद्धगया गतेन नरेन्द्रेण ध्यानाविष्टेन सता अनुभूतं बुद्धदर्शनम्, बुद्धस्य च तच्छरीरप्रवेशः अस्मिन् समये तुरीयानन्दस्य स्मृतिमागतः।

५ (Turiyananda said) "I vividly remember some remarks made by Swamiji at that time The exact words and accents and the deep pathos with which they were uttered still ring in my ears He said, 'Haribhai, I am still unable to understand anything of your so-called religion' Then with an expression of deep sorrow in his countenance and an intense emotion shaking his body, he placed his hand on his heart and added 'But my heart has expanded very much, and I have learnt to feel Believe me I feel intensely indeed' His voice was choked with feeling, he could say no more For a time profound silence reigned and tears rolled down his cheeks ' In telling of this incident Swami Turiyananda was also overcome He sat silent for a while, his eyelids heavy with tears With a deep

**प्रस्थानम्**

स्वामिन मुम्बापुरीम् अगच्छन्। महाराजस्य आज्ञानुसारेण तं सह मुम्बापुरीम् आगत जगमोहनलाल तेषा प्रथमश्रेणिका प्रवासदर्शिका सपादयामास। मद्रासत अलसिंह-पेरुमालोऽपि आगत आसीत्। अवशिष्टान् कतिचित् दिवसान् मित्रदर्शने धर्मचर्चया ध्यानप्रार्थनादिभिश्च नीत्वा उष्णीष काषायकञ्चुक च परिधाय, कथ नु वराहनगरस्था गुरुबन्धव स्यु किं च अविदितमत्प्रयाणा ते वदिष्यन्ति इति चिन्तयन्त, भारतस्य भूतगौरव ध्यात्वा स्वीयेन अमेरिकागमनेन तस्य पुनरुत्थान-स्वप्नान् दर्शयन्तोऽपि 'नून तपोभूमे भोगभूमि प्रस्थितोऽस्मि' इति मन्वाना, जगदम्बा-रामकृष्णयो स्मरणपूर्वक नामोच्चारण कुर्वन्त विवेकानन्द स्वामिन ३१-५ १८९३ दिने अमेरिकागमनार्थं 'पेनिन्शुलर' नौकाम् आरोहन्।

स्वामिना सवम अननुभूतपूर्वम् आसीत्। अभ्यस्त-अपरिग्रहाणा तेषाम् इदानी उपकरणभार अवेक्षणीय आसीत्। तेषा वेषविशेषेण कुतूहलपूर्णाना सहप्रवासिनत्राणा ते विषयताम् अगच्छन्। तथापि बालस्येव कुतूहलपूर्णेन मनसा स्वामिन प्रेक्षमाणा आसन्। दूरन्तविस्तीर्णं सागर यथा ते कौतूहलेन अपश्यन् तथैव नौकाया यन्त्राण्यपि। सजातपरिचय नौ-कप्तान सर्वाणि यन्त्रकार्याणि स्वामिभ्य स्पष्टीकृत्य व्याख्यातवान्। स्वामिनाम अनन्यसाधारणेन व्यक्तित्वविशेषेण अन्ये प्रवासिन क्रमेण तान् प्रति आकृष्टा बभूवु।

---

(१२२ पृष्ठत)

sigh he said, "Can you imagine what passed through my mind on hearing the Swami speak thus? 'Are not these,' I thought 'the very words and feelings of Buddha?'

I could clearly perceive that the sufferings of humanity were pulsating in the heart of Swamiji ('The *Life of Swami Vivekananda*' by his Eastern and Western Disciples, p 342).

बृहद्भारतदर्शनम्

मध्येमार्गं नौका कोलम्बो इत्यत्र अतिष्ठत् । स्वामिभि अवतीर्य नगरे सचर्यं, बौद्धमन्दिर गत्वा, निर्वाणोन्मुखस्य बुद्धस्य प्रतिमा दृष्टा। ततश्च पेनाङ्ग-सिङ्गापुर-मार्गेण नौका हॉङ्गकॉङ्गम् अगच्छन् । तत्र प्रथमदृष्ट चीनजीवित स्वामिभि योकोहामात लिखिते पत्रे वर्णितम् अस्ति । 'चीन-भारतयो आत्यन्तिक-दारिद्र्य-कारणात् तयो सस्कृति निर्जीव 'ममी'भूय स्थितास्ति,' इति ते वदन्ति। दिनत्रयात्मके हॉङ्गकॉङ्ग-निवासे स्वामिन कॅण्टन-नगर द्रष्टु गता । तत्रत्येन उद्यमशीलेन जीवितेन ते आकृष्टा अभवन् । तत्रत्य प्रख्यात बौद्धमन्दिर दृष्ट्वा ते चीन-भिक्षूणा मठ द्रष्टुम् अगच्छन् । धर्मान्तरीयाणा कृते तत्र प्रवेश निषिद्ध आसीत् । स्वामिन प्रविष्टान् दृष्ट्वा द्वित्रा पुरुषा उद्गूरितदण्डा तान् अभ्यधावन् । अन्ये दर्शनार्थिन पलायिता । भाषाद्वयज्ञः मध्यस्थोऽपि पलायनोद्यत आसीत् । प्रत्युत्पन्नमतिभि स्वामिभिस्तु त हस्तेग्राह गृहीत्वा चीनभाषीय योगि पर्याय च पृष्ट्वा, 'योगी, योगी' इति उच्चै उक्तम् । तच्छ्रवणमात्रेण ते चीन-महन्ता साष्टाङ्ग प्रणिपातम् अकुर्वन् । ते स्वामिन प्रति भूतनिवारणार्थं रक्षाकरण्डक प्रार्थयन्त । इदानी किं कार्यम् ? किंचित् चिन्तयित्वा स्वामिभि वस्त्रकोशात् एक कर्गज निष्कासित, त च अनेकेषु खण्डेषु विपाट्य एकैकस्मिन् 'ॐकार' लिखित्वा तत्सर्व महन्तेभ्य प्रदत्तम् । महन्तै तत शिरसा धारयित्वा, स्वामिन अन्त प्रवेश्य सर्व मन्दिर प्रदर्शितम् । अस्मिन्नेव मठ वङ्गीयाक्षरै लिखिता अनेके सस्कृतभाषामया हस्तलेखा स्वामिभि दृष्टा, तेन च वङ्गद्वारा चीनोपरि पतित भूतकालिक भारतीय प्रभाव तै ऊहित । ततो नागासकी गत्वा जापानीयाना स्वच्छतया उद्यमशीलतया च स्वामिन प्रभाविता अभवन् । तत कोबे नौकाशय अवतीर्य भूमिमार्गेण स्वामिन योकोहामाम् अगच्छन् । अन्यान्यपि कानिचित् नगराणि गत्वा तै जापानीयाना मन्दिराणा तथा च तेषा सामाजिकरीतीनाम् अवलोकन कृतम् । तत्रापि तै वङ्गीयाक्षरै लिखिता सस्कृतमन्त्रा दृष्टा । ज्ञानविज्ञानयो तासु तासु शाखासु उन्मत्तवेगेन क्रियमाणा जापानीयाना प्रगति विलोक्य ते विस्मिता अभवन् । अन्यदेशीयानाम् अपेक्षया भारतीयाना पृष्ठस्थिति

तान् अध्ययन्। योकोहामात मद्रासीयान् स्वशिष्यान् प्रति लिखिते पत्रे ते लिखन्ति—'न्यूनतोन्यूनम् एव सहस्रसख्याना तरुणानाम् आत्यन्तिक स्वार्थ-त्याग भारत अपेक्षते। नूतन-समाजरचना-निर्माणार्थम्, दरिद्रोद्धारार्थम्, बुभुक्षिताना मुखेषु अन्नदानार्थम्, सामान्यजनस्य शिक्षणार्थं च करणीये मरणान्त-सग्रामे आवश्यकान् कियतो निःस्वार्थान् दृढव्रताश्च युवकान् मद्रास प्रदास्यति ? '

**प्राचीनजगत. नवीन प्रति**

योकोहामात नौका व्हॅंडकूव्हरम् अगच्छत्। स्वामिन प्राचीन-जगत नवीन जगत् प्राप्ता। तत्र अवतीर्य रेल-यानेन त्रीणि दिनानि प्रोष्य स्वामिन अन्तत शिकागो-नगर प्राप्नुवन्। अनुत्प्रेक्षित-शैत्यार्ता स्वामिन स्थानकम् अवातरन्। अनभ्यस्तव्यवहारम् एत सन्यासिन भार-वाहादय द्रव्ये प्रातारयन्*। उन्मार्गा डिम्भवाला अपीडयन्। तस्य विचित्र वेष वीक्ष्य जना उपाहसन्। सभ्रान्ता स्वामिन यथाकथचित् एक पथिकाश्रम प्राप्नुवन्, उपकरणानि अस्थापयन्, मुक्तनिश्वास च अश्वसन्।

**प्रथमो निराशाघात.**

उत्तरेद्यु स्वामिन तत्र प्रारब्ध 'विश्वप्रदर्शनम्' द्रष्टुम् अगच्छन्। द्वादश दिनानि ते प्रेक्षमाणा अपि अतृप्ता अतिष्ठन्। तत्र पाश्चात्यानाम् अद्भुतेन कर्तृत्वेन, जीवनोत्साहेन च स्वामिन नि शब्दाः अभवन्। समन्तात् जनसागर प्रसृत आसीत्। तथापि स्वामिन आत्मानम् एकाकिनम् अन्वभवन्। ते पर्युत्सुका अभवन्। तथापि आत्मनिर्णयस्य औचित्य-विषये तेषा मनसि कोऽपि सदेहो नासीत्। यदा तु ते परिषद कार्यालयम् अगच्छन्, तदा तेषाम् उपरि वज्रपात इव अभवत्। एक तावत्, परिषत्-प्रारम्भस्य अद्यापि मासद्वयात्मक अवधि आसीत्। तदानी जुलै-मासस्य मध्यावधि आसीत्, न च परिषत् सेप्टेम्बर-मासस्य द्वितीयसप्ताहात्

* 'The whole way was strewn with his feathers, for he was a marked prey for the fleecer he cou d be seen from afar ! ' ( Romain Rolland )

प्राक् प्रारप्स्यमाणा आसीत्। द्वितीयम्, स्वामिन स्वयमेव आगता आसन्। न ते कस्या अपि संस्थाया प्रतिनिधिभूता आसन्। नासीत् तेषां समीपे किमपि परिचयपत्रम्, प्रशस्तिपत्रं वा[६]। किं च परिचयपत्रधना प्रतिनिधीनामपि प्रवेशकाल अतिक्रान्तोऽस्ति इत्यपि पृच्छागारे अधिकृतैः स्वामिन निवेदिता। परिषत् कदा प्रारभते, प्रतिनिधीना विषये के नियमा, का अधिकारसपत् अपेक्ष्यते, के अन्ये उपचारा, इत्यादिविषये स्वामिप्रस्थानात् पूर्वं तेषाम् उत्साहवद्भि शिष्यै मौख्येन जिज्ञासित नासीत्। केवल स्वामिभि अमेरिका प्रति गन्तव्यम्, परिषदि उपस्थाय 'अहं विवेकानन्दोऽस्मि' इति वक्तव्यम्, भाषित् च आरब्धव्यम् इतीन तेषा बालसुलभा कल्पना आसीत्[७]।

एतेन अनपेक्षितेन आघातेन दिङ्मूढा इव स्वामिन बहिर् आगता। अमेरिकीया जीवनसरणि व्ययबहुला आसीत्। हिन्दचिन्नकैः तेभ्य प्रदत्त द्रव्यनिधि प्रतिदिनं क्षीयमाण आसीत्। तेषा समीपं न कोऽपि ऊष्मा आसीत्, न द्रव्यस्य न वा सौहार्दस्य। अस्याम् अवस्थायां बोस्टन किंचिद्न्नेन व्ययेन स्यात् शक्यते इति श्रुत्वा स्वामिन तत् नगर गन्तु प्रस्थिता। इत पूर्वम् अनुभूताया ईश्वरीयकृपाया 'अनुभव ते पुनरपि प्राप्त। रेलयाने

६ भारते अमेरिकाप्रस्थानात् पूर्वं सच्चिदानन्द इति नामधेयेन नरेन्द्रेण थिओसफिस्ट सोसायट्या अध्यक्ष कर्नल ऑलकॉट् इत्याख्यम् उपगम्य परिचयपत्र प्रार्थितम् आसीत्। तेन तु अमेरिकास्थान् स्वान् मित्रान् पत्र विलिख्य स्वामिना प्रशस्तिस्थाने तद्विषये सावधान स्यात् ते प्रबोधिता। (Romain Rolland, 'The Life of Vivekananda,' p 8)

७ 'Nothing could have been more typical of the unorganised ness of Hinduism itself' (Sister Nivedita)

८ अस्य कानिचित् उदाहरणानि पूर्वयो प्रकरणयो लभ्येरन्। तत्र अनिर्दिष्टम् इदमेकम् अत्र उल्लिख्यते—एकदा उत्तरप्रदेश प्रवसन्त स्वामिन ताडी घाट इत्याख्ये स्थानके अवातरन्। क्षुधा ते अत्यन्तपीडिता आसन्। भूम्याम् उपविष्टाना स्वामिना पुरत किंचिद्दूरम् स्वाद्वन्नभक्षणपरः, निष्क्रियतायै च तान् उपहासास्पद कुर्वाण

तेषामेव वक्षे श्रीमती सन्वर्न नाम पुरन्ध्री आसीत्। स्वामिनः तेजःपुञ्जेन मुखमण्डलेन आकृष्टा सा तैः सह भाषितुं प्रारभत। स्वामिनः भारतात् वेदान्तप्रसाराय आगताः सन्ति इति ज्ञात्वा 'स्वामिन्! भवता अस्माकं गृहे अस्मदतिथित्वेन स्थातव्यम्। को नु वेद, भवेदपि किंचित् युष्मदनुकूलम्' इति च सा तान् विज्ञापयामास। तस्याः प्रार्थनाम् अभ्युपगम्य स्वामिनः तया सह तस्याः 'ब्रीझी मेडोज्' संज्ञके प्रासादे वस्तुं गताः।

अत्र स्वामिभिः शारीरं स्वास्थ्यम् उपलब्धम्। द्रव्यचिन्ताऽपि नासीत्। तथाऽपि नूतनः उपद्रवः प्रारब्धः। दर्शनाय आगताः जनाः नानाविधान् सबद्धान् असबद्धान् वा प्रश्नान् पृष्ट्वा एतं 'पागनम्' पीडयन्ति स्म। रथ्यायां तस्य वेषं जनाः उपाहसन्। तथापि इदमपि एकम् अवश्यदेयं मूल्यम् इति मत्वा स्वामिनः तत् तितिक्षया असहन्त। अत्र निवसन्तः ते स्त्रीकारागारस्य बन्दिपाल्या परिचिता अभवन्, तस्याश्च निमन्त्रणानुसारेण ते कारागारं द्रष्टुम् अगच्छन्। तद्दर्शनेन तेषां मनसि ये विचारकल्लोलाः उत्थिताः ते तैः एकस्मै शिष्याय लिखिते पत्रे अक्षरीकृताः सन्ति। स्वामिनां स्वकार्यनिर्णयः, तेषाम् दुर्दम्यः उत्साहः, तस्य उत्साहस्य तेषां अन्यान् प्रति संक्रमणक्षमता, दृढनिश्चयः इत्यादयः स्वामिनां विशेषाः अत्र पर्याप्तं प्रकटीभूताः सन्ति। भावनोत्कटस्य अस्य पत्रस्य अयं साराशः —'अत्र अमेरिकायां कारागारं सुधारणागृहम् इति शब्देन व्यवहरन्ति। क्व अत्रत्यः बन्दिनः प्रति प्रदर्श्यमानं दयालुत्वम्, सन्मार्गं प्रापय्य तथा पुनःप्रेषणम्, क्व च अस्माकं भारतीयानां तेषु व्यवहारः। तस्य स्मरणमात्रेण मम मनः दोद्रूयते। भारते पतितानां नास्ति कोऽपि परिवर्तनावसरः। नात्र विषये धर्मः अपराध्यति, किं तु धर्मध्वजिनः दाम्भिकाः इति प्रदर्शितमस्ति मह्यं भगवता। ∙ उत्तिष्ठत, पुत्रकाः! बद्धपरिकराः

(१२६ पृष्ठतः)

कश्चित् सहप्रवासी वणिक् उपविष्टः आसीत्। परमतितिक्षया तस्य उपहासं सहमानेषु स्वामिषु सहसा कश्चित् मिष्टान्नविक्रयी आगत्य 'स्वामिन्, रात्रौ रामचन्द्रप्रभुणा द्विवारं स्वप्ने आगत्य यूयं दर्शिताः, युष्मभ्यं च अन्नदानम् आदिष्टम्। तद् इदं मिष्टान्नं गृहीत्वा अनुगृह्णन्तु मां स्वामिनः' इति प्रार्थयामास।

भवत। एतदर्थम् अह भगवता आहूतोऽस्मि। मम बन्धव. क्षुधायाः वलीभूता मया एताभ्या अक्षिभ्या दृष्टा. सन्ति। अधुना यूयमेव आश्वासस्थानम्, ये निम्नाः सन्तोऽपि निष्ठावन्त स्थ। साहाय्यम् अवश्यं लप्स्यते। द्वादश वर्षाणि गृहात् गृहम् अटित्वा भाराक्रान्तेन मया साहाय्यार्थं प्रयतितम्। ईश्वर महान् अस्ति, स च मम साहाय्य करिष्यति इत्यस्ति मे विश्वास.। कदाचित् शैत्येन क्षुधया वा मम देहपातोऽपि अत्र भवेत्। युष्मदर्थं तु, हे युवानः¹ इम दीनदलितार्थं सघर्षम्, इमाम् आत्मीयता, रिक्थत्वेन पृष्ठतो जहामि। शतश. अस्मिन् सग्रामे मरिष्यन्ति। शतशस्तु नवीना तेषा कार्यम् अग्रत सर करिष्यन्ति। स्वयं भगवान् अस्माक सेनानी अस्ति। जीविते असक्ता मरणाच्च अभीता. भूत्वा अग्रे चलत'।"

---

१ "They do not call it prison but reformatory here It is the grandest thing I have seen in America How the inmates are benevolently treated, how they are reformed and sent back as useful members of society, And oh, my heart ached to think of what we think of the poor, the low, in India They have no chance, no escape, no way, to climb up...

"The Lord has shown me that religion is not at fault, but it is the Pharisees and the Sadducees in Hinduism, hypocrites, ...

' ... Gird up your loins, my boys I am called by the Lord for this I have b en dragged through a whole life full of crosses and tortures I have seen the nearest and the dearest die almost of starvation, .

" The hope lies in you-in the meek, the lowly, but the faithful . Feel for the miserable and look up for help—it shall come I have travelled for twelve years with this load in my heart and this idea in my head. I have gone from door to door of the so-called rich and great. With a

देवदूतः प्रा. राइट्

एकदा प्रा. राइट् (J. H Wright) महोदया तान् द्रष्टुम् आगता। ते हार्वर्ड-विद्यापीठे ग्रीकभाषाया प्राध्यापका आसन्। एतावता कालेन सर्वधर्मपरिषदि प्रवेशविषये नष्टाशाना स्वामिना यस्तत्र प्रवेश अभूत्, स प्रा राइट्-निमित्तमेव। किंचित्कालिकेन सभाषणेन प्राध्यापकमहाशया. अतीव प्रभाविता अभवन्। तैं तत्क्षण 'भवता परिषदि हिन्दुधर्मस्य प्रातिनिध्य कर्तव्यम्' इति साग्रहम् उक्तम्। अयमेव युष्माकम् एतद्-राष्ट्रप्रवेशावसर,' ते अवदन्। 'मम समीपे परिचयपत्रादिक नास्ति,' इति स्वामिभि उक्ते 'स्वामिन्! युष्मत्त परिचयपत्रस्य अपेक्षाकरण नाम सूर्यं प्रति प्रकाशनाधिकारविषये प्रमाणपत्रप्रदर्शनार्थम् आदेशनम्,' इत्युक्त्वा

---

(१२८ पृष्ठत)

bleeding heart I have crossed half the world to this strange land, seeking for help The Lord is great I know He will help me I may perish of cold or hunger in this land, but I bequeath to you, young men, this sympathy, this struggle for the poor, the ignorant, the oppressed .

" Glory unto the Lord, we will succeed Hundreds will fall in the struggle—hundreds will be ready to take it up Faith-sympathy, fiery faith and firey sympathy ! Life is nothing death is nothing, hunger nothing, cold nothing Glory unto the Lord-march on, the Lord is our General Do not look back to see who falls-forward-onward ! Thus and thus we shall go on brethren One falls and another takes up the work " ('The Life of Swami Vivekananda' by his Eastern and Western Disciples, pp 359-360)

अन्तिमेषु त्रिचतुरेषु वाक्येषु प्रकटिताना भावाना कृते पठ्यताम् अथ वीर-सावरकर-विरचिताया कविताया. अश —

सारथी जिचा अभिमानी। कृष्णजी आणि राम सेनानी
अशि तीस कोट तव सेना। ती अम्हा विना थांबेना. . .

प्रवेशार्थं सर्वप्रकारक साहाय्य दातु तैं अङ्गीकृतम्। परिषद अनेके कार्यकर्तार तेषा परिचिता आसन्। तेषाम् एको मिश्र प्रतिनिधि-वरण-समित्या अध्यक्ष आसीत्। तस्मै राइट-महोदयं एव लिखितम्-'अस्मत्याना सर्वेषा पण्डिताना प्राध्यापकाना सपिण्डित पाण्डित्यमपि यस्य पाण्डित्यस्य षोडशी कला नार्हति, एतादृश अय महापण्डितोऽस्ति'।[१०] अनेन सज्जनेन शिकागो-प्रवासस्य पत्रिकाऽपि स्वय स्वाम्यर्थे क्रीता। स्वामिना शिकागो-नगरे निवासादे आवश्यकव्यवस्था-सपादनार्थं सवद्धान् परिषदधिकारिण उद्दिश्य तेन स्वामि-परिचायकानि पत्राण्यपि लिखित्वा दत्तानि। एतेन परमात्मन कारुण्याविष्कारेण प्रसन्ना स्वामिन एव मुद्रागमनस्य साफल्ये निश्चितमनस्का भूत्वा शिकागो उद्दिश्य प्रस्थिता। किं तु

दैवदुर्विलसितम्

समाप्त नासीत्। रेलयाने कश्चित् वणिक् स्वामिभि सह मिलित। 'अहमपि शिकागो प्रस्थितोऽस्मि। अह भवन्तम् इष्टस्थान प्रापयिष्यामि,' इति तेन अङ्गीकृतम्। शिकागो-स्थानक प्राप्तस्तु स स्वकार्येण अपहृतमानस सर्वं विस्मृत्य त्वरया एकाकी एव स्थानकात् निर्ययौ। यान विलम्बेन आगतम् आसीत्। दुर्दैववशाच्च परिषत्-कार्यालयस्य य स्थानसकेत स्वामिभि पत्रार्पित कृत आसीत्, सोऽपि कुत्रापि नष्ट। स्थानकात निर्गत्य प्राप्त प्राप्त पुरुष स्वामिन पप्रच्छु। जर्मनप्राये तु तस्मिन् एकान्ते विभागे न कोऽपि तान् अवबोद्धुम् अशक्नोत्। रात्रि प्रवृत्ता। गत्यन्तरम् अपश्यन्त स्वामिन पुनरपि स्थानक प्राप्ता। एका बृहती मञ्जूषा तेषा दृक्पथम् आगता। स्वामिन तस्या प्राविशन्। तैं प्रवासकोशिका उपधानीकृता। पादौ सकुच्य उदरोपगौ कृतौ। जगदम्बाया स्मरण कृतम्। ततश्च ते निद्राम् अगच्छन्। सर्वधर्म परिषद स्वस्तनीय अय सम्राट् पूर्वरात्रौ एव रेलयानस्थानके आकाशस्य अधस्तात् शैत्येन सिमसिमायमान-गात्र अस्वपीत्।—अथ वा 'शय्या

१० 'Here is a man who is more learned than all our learned professors put together" ('The Life of Swami Vivekananda' by his Eastern and Western Disciples, p 361)

L

भूमितल दिशोऽपि वसनं' येषाम्, तेषां परिव्राजकानाम् अस्मदादिहृदय-विदारिणी अपि का नाम इयं कथा ?

प्रभातम्। 'प्रत्यग्रजलम् आघ्राय' तदनुसारेण प्रस्थिता स्वामिन अल्पेनैव कालेन 'लेक-शोअर ड्राइव्ह' इत्याख्य लक्षाधीशाना वसतिस्थान' प्राप्नुवन्। क्षुत्क्षामकण्ठास् ते सन्यासिधर्मम् अनुसृत्य तत्र गृहात् गृह गत्वा भिक्षितुम्, परिषत-स्थान च प्रष्टुम् आरभन्त। न तु कोऽपि तान् अवदधे। कश्चित् कठोरम् अवदत्। प्रवासखिन्नान् मलिनवाससश्च तान् दृष्ट्वा कोऽपि सामान्यो याचकोऽयम् इति मत्वा कश्चित् धाडिति द्वारम् आवृणोत्। कश्चित् निटिल वलीवलित चकार। कुत्रचित् भृत्या एव तान् बहिर्मार्गं दर्शयामासु। स्वामिन किंकर्तव्यविमूढा अभवन्। किंचिद् अन्तर गत्वा श्रान्ता क्षीणाश्च भूत्वा ते रथ्योपान्ते उपाविशन्। यस्य कार्यार्थम् अहम् एतावत् सुदूरम् आगत तस्य इच्छया यद् भावि तद् भवतु इति चिन्तयित्वा तदादेश परिपालयन्तस्तस्थु।

**अतर्क्या पारमेश्वरी लीला**

अत्रान्तरे अभिमुखस्य प्रासादस्य द्वारम् उदघाटयत। तस्माच्च निर्गत्य काचित् अनुभाववती पुरन्ध्री धीरललितेन पदन्यासेन स्वामि-सकाशम् आगत्य आभिजात्यव्यञ्जकेन स्वरसंयोगेन अपृच्छत्, 'महाशय! अपि भवान् सर्वधर्मपरिषदर्थम् आगतोऽस्ति?' स्वामिभि सर्वोऽपि निजो वृत्तान्त तस्यै निवेदित। त श्रुत्वा श्रीमती हेल (इद तस्या नामधेयम्) तान् स्वगृहम् आगत्य विश्रमितुम्, आतिथ्य च स्वीकर्तुं व्यज्ञापयन्। 'विश्रामोत्तरम् अह स्वय भवन्त परिषत्-कार्यालय प्रापयिष्यामि,' इत्यपि सा आश्वासयत्। कृतज्ञताभिभूता स्वामिन 'अहो अद्भुत परित्राणम्! अहो आश्चर्या पारमेश्वरी लीला!' इति मनसि चिन्तयन्त ताम् अनुसृत्य तस्या गृहम् अगच्छन्। तत्र अचिरेण समग्र हेल कुटुम्ब तेषा मित्रता गतम्।

तत्र कञ्चित् काल विश्रम्य, पौर्वाह्णिकी क्रिया निर्वर्त्य, प्रातराशादिना नवीभूता, अनुभूतेन ऐश्वरेण सानिध्येन प्रगुणितोत्साहाश्च स्वामिन श्रीमत्या हेल-महोदयया सह परिषत्-कार्यालय प्रतस्थिरे।

* * *

# १२. सर्वधर्मपरिषद्[1]

'Sisters and Brothers of America'[2] इति स्वामिभिः संबोधितमात्रे, तस्मिन् सभागृहे यत् अनवरत प्रचण्ड तालिकाकाण्ड प्रारब्धम्, तत् अभूतपूर्वमेव आसीत्।

सोमवासरे ११ सेप्टेम्बर दिने सर्वधर्मपरिषद कार्यारम्भ १० वादनवेलाया सजात.। १८९३ खिस्ताब्दे शिकागो इत्यत्र सपन्नस्य 'कोलम्बियन्' विश्वप्रदर्शनस्य[3] इय सर्वधर्मपरिषद् शिलपत्रं इव आसीत्। कला, वाङ्मयम् इत्यादिषु विषयेषु दृश्यमान धर्मस्य प्रभाव वीक्षमाणैः प्रदर्शनचालकैः अस्मिन् प्रदर्शने कला-तन्त्रादिभि सह धर्माय अपि सर्वधर्मपरिषद्-रूपेण स्थान प्रदत्तम्। कतिपयेभ्य. मासेभ्य पूर्वं परिषद आयोजन प्रारब्धम् आसीत्। देश-विदेशेषु निमन्त्रणानि प्रेषितानि आसन्। प्रतिनिधीनाम् अधिकारसपत् निर्धारिता आसीत्। ख्रैस्तधर्मं विहाय हिन्दव, बौद्धा, जैना, ज्यू, मुस्लिमा, पारसीका, शिन्तो-धर्मीया तथा च कॉन्फ्युशियना तत्र समिलिता आसन्। ७००० त १०,००० पर्यन्त सामाजिका समभिलन्। १७ दिनानि अस्या परिषद कार्यं प्राचलत्। १००० अधिका निबन्धा. तत्र वाचिता।

परिषद औद्घाटनिक समारोह 'कलाभवने' कोलम्बस-शालायाम् अभवत्। २०० जनानाम् उपवेशनानुकूल मञ्च निर्मित आसीत्। तत्र तत्तत्-धर्मीयाणा महापुरुषाणा मूर्तय स्थापिता आसन्। तत्तत्-देशीया ध्वजा आस्फरन्त। उपरि अमेरिकाया प्रथम पदार्पण कुर्वत कोलम्बसस्य

---

१ *The Parliament of Religions*

२ 'अयि अमेरिकीया भगिन्य, भ्रातरश्च!'

३ World's Columbian Exposition

तैलचित्रम् अलभ्यत। दशवादन-वेलायां परिषदः कार्याध्यक्षाः डॉ बॅरोज् महोदयाः समाध्यक्षैः कार्डिनल गिबन्स इत्येतैः सह सभागृहं प्रविष्टाः। तेषाम् अनुपदं कार्डिनल मॅसारिक तथा च अन्ये प्रतिनिधयः आसन्। उपस्थितैः उत्थाय कृताभिवन्दनास् ते सर्वे घण्टासु निनदन्तीषु सामाजिकान् समारम्भपूर्वं प्रदक्षिणीकृत्य मञ्चम् आरुह्य स्वं स्वम् आसनं पर्यगृह्णन्। मध्ये कार्डिनल गिबन्स आसन्। तेषाम् उभयतः उपविष्टेषु पौरस्त्येषु प्रतिनिधिषु नगरकर (मुम्बापुरी) तथा च मुजुमदार इत्येतौ ब्राह्मसमाजस्य प्रतिनिधी, जैन-प्रतिनिधिः गान्धी, तथा च थिऑसॉफिस्टानां प्रतिनिधिः (ॲनी बेझण्ट इत्येतया सह) चक्रवर्ती इत्येते भारतीयाः आसन्। लङ्कातः बौद्धप्रतिनिधिः धर्मपाल आसीत्। ३१ क्रमाङ्के आसने उपविष्टाः विवेकानन्द-स्वामिनस्तु यथा स्फुरत्प्रभेण मुखमण्डलेन, तथैव रक्तकाषायेण कञ्चुकेन उष्णीषेण च सपादिनराजशोभा इव सर्वेषामेव नयने हठात् हरन्ति स्म।

४००० कण्ठैः समतालं गीतायां 'Lead me Rindly Light' इत्येतस्यां प्रार्थनायाम् अनन्तरं डॉ बरोज् महोदयैः प्रास्ताविकं भाषणं कृतम्। तदुत्तरं च तैः एकैकस्य प्रतिनिधेः परिचायनं प्रारब्धम्। परिचाय्यमानः प्रतिनिधिः किमपि अल्पाक्षरं प्रास्ताविकं भाषणम् अकरोत्। स्वामिनः सर्वं प्रेक्षमाणाः आसन्। तैः तत्र प्रकाण्ड-पण्डिताः दार्शनिकाः, महामहिमानश्च धर्माचार्याः दृष्टाः। तेषाम् आत्म-विश्वासपूर्णानि वचनव्यानि श्रुतानि। स्वामिनः सम्भ्रान्ताः अभवन्। नासीत् तेषाम् एतादृश्यां जनसंसदि भाषणाभ्यासः। तेषां हृदयं धडधडायमानम् आसीत्। गात्राणि असीदन् मुखं च अशुष्यत्। अन्यैः वक्तृभिः भाषणानि सज्जीकृतानि वा आसन्, पत्रारूढानि वा। स्वामिभिस्तु एतादृशं न किमपि कृतम् आसीत्[४]। ते मनसि प्रार्थनापराः स्म। क्रमेण स्वामिना

४ एतस्मिन् स्वीये पत्रे स्वामिभिः तदानीन्तनी निजावस्था एवं वर्णिता अस्ति "Imagine a hall below and a huge gallery above, packed with six or seven thousand men and women representing the best culture of the country, and on the platform learned men of all the nations on the earth And I

समय आगत । 'इदानीमेव माऽस्तु, केनचित् कालेन,' स्वामिनः अवदन् । एवम् अनेकवारम् अभवत् । अध्यक्षा विस्मिता अभवन् । सायकाल प्रत्यासन्न । अन्ते अध्यक्षै स्वामिन उक्ता, 'इदानी भवता अवश्य वक्तव्यम् ।'

स्वामिन उदतिष्ठन् । तेषा मुख दिदीपे। तेषा दर्शनमात्रेण सर्वं सभागृह नि शब्दम् अभवत । त विशाल जनसागरम् एकेनैव दृष्टिक्षेपेण कवलीकुर्वद्भि स्वामिभि देवी सरस्वती ध्यात्वा वक्तुम् उपक्रान्तम् —

Sisters and Brothers of America !

स्वामिभि एव सबोधितमात्रे, तस्मिन् सभागृहे यत् अनवरत प्रचण्ड तालिकाकाण्ड प्रारब्धम्, तत् अभूतपूर्वमेव आसीत् । तत् सभागृह महोत्साहस्य वृहत्तरङ्गारूढमिव अभवत् । शतशो जना उत्थाय उच्चै साधुवादान् उदीरयामासु । सर्वेऽपि जना प्रोत्साहयति प्रोत्साहयन प्रोत्साहयन्ति स्म । मदमत्तमिव सभागृहम् अभवत् । स्वामिभिः सबोधनस्य सामारम्भिकाणि उपचारपदानि दूरोत्क्षिप्तानि आसन् । हृदय-गर्भागारात् आगतम् इद मानव्यावाहन श्रोतृऋणा हृदयानि अस्पृशन् । एतेन प्रथमेनैव वाक्येन स्वामिभि सभा जिता । स्वय स्वामिनस्तु विस्मिता अभवन् । ममैव प्रोत्साहनपर अय साधुवाद इति न ते श्रद्दधु । मिनिटद्वयन शान्तताया प्रत्यागताया स्वामिन वक्तु प्राक्रमन्त ।

---

(१३३ पृष्ठत)

who never spoke in public in my life, to address this august assemblage ! ' my heart was fluttering and my tongue nearly dried up, I was so nervous and could not venture to speak in the morning Mazoomdar made a nice speech-Chakrawarti a nicer one and they were much applauded They were all prepared and came with ready made speeches I was a fool and had none, but bowed down to Devi Saraswati and stepped up and Dr Barrows introduced me I made a short speech - and when it was finished, I sat down almost exhausted with emotion '

एकत्वसाक्षात्कारस्या मृत्युर्जयता सिध्यति। तदर्थम् अहं-मम-कारयो त्याग अपरिहार्य । सीमितस्य अहंकारस्य त्यागपूर्वक वैदिकाहंकारस्य भावनेन मृत्यु-दुःख-अज्ञानानि विनश्यन्ति, यतः तादृश पुरुष चैतन्य-सुख-ज्ञानेन सह एकात्म्य प्राप्तोऽस्ति६।

'उत्तिष्ठत, हे सिंहा !'

'यूयम् अमृतस्य पुत्रा स्थ। ईश्वरस्य सतति स्थ। न कोऽपि पुरुष पाप अस्ति इति हिन्दुधर्मो मन्यते। उत्तिष्ठत, हे सिंहा ! मेषत्व-भ्रमम् अपसारयत ! यूयम् अमर आत्मा, मुक्त चैतन्यम्, न यूय शरीरम्। प्रकृति युष्माक दासी, न यूय तस्या दासा७।

'काम हिन्दुधर्मे दैवतानाम् अनेकत्वम् अस्ति, कर्मकाण्डस्य बाहुल्यम् अस्ति। किं तु सर्वमिद साधनमात्रम्, न तत् धर्मसर्वस्वम्। साधनानि च एतानि चित्तशुद्ध्यर्थम् आवश्यकानि। मूर्तिपूजापि एकाग्रतासपादनाय आवश्यका। तस्य तस्य पुरुषस्य रुचिभेदेन, अधिकारभेदेन, परिस्थितिभेदेन च साधनभेद अपरिहार्य। हिन्दुधर्म नैतेषु बाह्यसाधनेषु नियत। न वा स यस्य कस्यापि मतस्य अङ्गीकार-स्वरूपक। स अनुभवपरम। हिन्दुधर्म आत्मसाक्षात्कारपरम अस्ति।

६ 'Then alone can death cease when I am one with life, then alone can misery cease when I am one with happiness itself, then alone can all the errors cease when I am one with knowledge itself, and this is the necessary scientific conclusion '

७ 'Yea, the Hindu refuses to call you sinners ! ye are the children of God, the sharers of immortal bliss, holy and perfect beings Ye divinities on earth-sinners ? It is a sin to call a man so, it is a standing libel on human nature Come up O lions, and shake off the delusion that you are sheep, you are souls immortal, spirits free blest, and eternal, ye are not matter, ye are not bodies, matter is your servant, not you the servant of matter '

'एतादृशं विश्वधर्मं प्रदत्त। तदानी सर्वाणि राष्ट्राणि युष्मान् अनुसरिष्यन्ति। अशोकस्य धर्मपरिषद् बौद्धधर्मनियता आसीत्। अकबरस्य व्यापकप्रयोजना आसीत्, तथापि सा केवलम् आस्थानसभा आसीत्। सर्वधर्माणाम् ईश्वरगामित्वस्य दशसु दिक्षु उद्घोषणं तु अमेरिकायाः भाग्यलिखितम् अस्ति। निजान् उदात्तान् विचारान् अनुष्ठातुं स ईश्वर — यो हिन्दूना ब्रह्म अस्ति, य. पारसीकानाम् अहुर-मज्दा, यो बौद्धाना बुद्ध, यो ज्यूना येहोव, यश्च ख्रिस्ताना स्वर्गस्थः पिता-स युष्मभ्य बल ददातु'।'

स्वामिनाम् एतेन भाषणेन हिन्दुधर्मस्य अज्ञातपूर्वम् उज्ज्वल रूप

---

८ 'Offer such a religion and all the nations will follow you Ashoka's council was a council of the Buddhist faith. Akbar's though more to the purpose was only a parlour-meeting It was reserved for America to proclaim to all quarters of the globe that the Lord is in every religion

'May He who is Brahman of the Hindus, the Ahura-Mazda of the Zoroastrians, the Buddha of the Buddhists, the Jehovah of the Jews, the Father in Heaven of the Christians,* give strength to you to carry your noble idea '

* 'एकं सद् विप्रा बहुधा वदन्ति, अग्नि यम मातरिश्वानमाहुः'
इत्यस्या वैदिकऋचि (ऋ. १.१६४.४६) प्रथमाविर्भूतस्य

यं शैवाः समुपासते शिव इति, ब्रह्मेति वेदान्तिनो
बौद्धा बुद्ध इति, प्रमाणपटवः कर्तेति नैयायिकाः।
अर्हन्नित्यय जैनशासनरताः, कर्मेति मीमांसका
सोऽयं वो विदधातु वाञ्छितफलं त्रैलोक्यनाथो हरिः॥

इत्यस्मिन् पारपरिके श्लोके क्रमेण उपचितस्य बीजस्यैव अयं कालानुरूप प्रपञ्चः।

पश्चिमया ज्ञातम् । विवेकानन्दोऽपि कोऽपि प्रेषित इव, नवयुग-प्रवर्तक इव जनान् प्रत्यभात्[१]।

हिन्दुधर्मस्य परिपूर्ति – बौद्धधर्म.

उत्तरेद्यु (२० सेप्टेम्वर) 'भारतस्य तारत्रोशिनी आवश्यकता ! अन्नम्, न धर्म '(Religion not the crying need of India, but bread) इति विषये स्वामिभि भाषित्वा दारिद्र्यपप्रानां भारतीय वान्धवानां कृते साहाय्यान्वेषणम् अत्रागमने मम उद्देश इति उक्तम् । एतेन अयं सन्यासी न केवल धर्मप्रवचनकारः, किं तु देशभक्तोऽपि इति पाश्चात्यानां अवगतम् अभवत् । २२ सेप्टेम्वर दिने 'पौराण हिन्दुधर्म वेदान्त-सिद्धान्ताश्च' (Orthodox Hinduism and the Vedanta philosophy) इति विषये तथा च 'भारतीया आधुनिका धर्मा' (The Modern Religions of India) इति विषये भाषणे अभूताम् । २५ दिनाङ्के 'हिन्दुधर्मस्य सारः' (The Essence of Hinduism) तेषां भाषणस्य विषयः आसीत् । तदुत्तरे दिने (२६ दिनाङ्के) 'हिन्दुधर्मस्य परिपूर्ति – बौद्धधर्म' (Buddhism the Fulfilment of Hinduism) इति विषयम् अधिकृत्य भाषमाणे स्वामिभि 'हिन्दुधर्मस्य अङ्गद्वयम्, एकं कर्मकाण्डात्मकम् अपरं च आध्यात्मिकम् । आध्यात्मिकाङ्गस्य तार्किकी परिपूर्तिः शाक्यमुनिना प्रदर्शिता । न हि हिन्दुधर्म-बौद्धधर्मौ अन्योन्य विना जीवितु शक्नुत ।

१ स्वामिनाम् एतद्भाषणम् अन्तरेण भगिनी निवेदिता वदति – 'when he began to speak it was of the religious ideas of the Hindus, but when he ended Hinduism had been created' अव्यवस्थितं रूपाय हिन्दुधर्माय नूतनाशय किमपि नवीनं सघटितं रूपं स्वामिभिः प्रदत्तम् इति तस्या. आशय ।

रोमां रोलाँ लिखति 'But the young Hinduist, convinced in spite of himself of the superiority of his own ideal, presented Hinduism in its essentials, rejuvenated and purified of its degenerate parts, as the universal religion of which he spoke.' (The Life of Vivekananda, p 39 Note 1)

ब्राह्मणानां तीक्ष्णबुद्धिं शाक्यमुनेश्च दयामयं हृदयम्, इत्येतयोः संगमः अद्यतनस्य भारतस्य कृते आवश्यकः' इति प्रतिपादितम्।

सप्तदश दिनानि परिषदः कार्यं प्राचलत्। अन्तिमे दिने (२७ सेप्टेम्बर) समारोपाधिवेशने स्वामिभिः स्वस्वधर्मपरिपालनस्य, सहिष्णुतायाः, शान्तेः, सहकार्यस्य च सदेशः प्रदत्तः। ते अवोचन् –

"न इतरैस्तेन हिन्दुत्वं बौद्धत्वं वा अङ्गीकार्यं, न वा हिन्दु-बौद्धाभ्याम् इतरैस्तरत्वम्। सर्वोऽपि इतरेभ्यो विशेषं ग्राह्यांशं गृहीत्वा स्वं स्वं व्यक्तिविशेषं परिरक्षतु, विकासनियमानुसारेण च विकसतु...

"सर्वधर्मपरिषदा इदं प्रमाणीकृतम् अस्ति, यत् माङ्गल्यं शुचिता दयापरत्वं वा न कस्यापि धर्मविशेषस्य एकाधिकारः स्वम्। सर्वेषु च सम्प्रदायेषु महापुरुषाः गृहीतजन्मानः सन्तीति। यदि इदम् अनादृत्य कश्चित् अन्यधर्मनाशपूर्वं स्वधर्मस्यैव अवस्थितिस्वप्नान् पश्येत्, नूनम् अनुकम्पनीयः स वराकः। इदमेव केवलं निदर्शयितुम् इच्छामि, यत् इच्छतोऽनिच्छतोऽपि वा तस्य अचिरमेव सर्वधर्माणां ध्वजेषु 'साहाय्यम्, न संघर्षः,' 'सारग्रहणम्, न विनाशः,' 'शान्तिः सुसंवादश्च, न विवादः' इति शब्दाः लिख्येरन्[१०]।"

---

१० "The Christian is not to become a Hindu or a Buddhist, nor a Hindu or a Buddhist to become a Christian But each must assimilate the spirit of the others and yet preserve his individuality and grow according to the law of growth

"If the Parliament of Religions has shown anything to the world it is this It has proved to the world that holiness, purity and charity are not the exclusive possessions of any church in the world and that every system has produced men and women of the most exalted character In the face of this evidence, if anybody dreams of the exclusive survival of his own religion and the destruction of the others, I pity him from the bottom of my heart, and point out to him that upon the banner

परिषदः महिष्ठो मानवः

सप्तदशदिनव्याप्ता इयं सर्वधर्मपरिषद् नाम एको महान् जागतिको व्यतिकरः अभवत्। विवेकानन्दश्च तस्याः 'हीरो' अभवत्। केवलं स्वामिना भाषणश्रवणार्थं पर्याप्तोष्णे तस्मिन् जनबहुले वातावरणे व्यजनेन आत्मानं वीजयन्तः, अन्येषां च वक्तॄणां गतरसानि भाषणानि शृण्वन्तः होरानुहोरं सहस्रशः श्रोतारः प्रत्यपालयन्। प्रायः सर्वदैव अर्धहोरामात्रात् नियतकालात् अधिकं समयं स्वामिनः अलभन्त। अनेकदा परिषत्-कार्यं अगृहीतरसान् सभागृहाच्च निर्गच्छतो जनसमूहान् प्रेक्ष्य अध्यक्षः 'इदानीम् अमुककालोत्तरं विवेकानन्द-स्वामिना भाषणं भविष्यति', इति उद्घोषयति स्म, तस्य च श्रवणमात्रेण गमनोन्मुखा जनाः पुनरपि निवृत्य स्वस्थानग्रहणार्थं त्वरन्ते स्म। विदुषां, पत्रकाराणां, सामान्यपुरुषाणाम् —सर्वेषामेव मनःसु स्वामिभिः किमपि पदं कृतम्। भारतस्य हिन्दुधर्मस्य च कन्धरा उन्नता अभवत्।

विज्ञानविभागीयाः अध्यक्षाः तान् अन्तरेण अवोचन्, 'परिषदि, अमेरिकीयायां च जनतायां हिन्दुधर्मेण यथा स्थानं लब्धम्, न तथा केनापि अन्येन धार्मिकेण सम्प्रदायेन। न चात्र कोऽपि सन्नीतिलेशः, यत् हिन्दुधर्मस्य महत्त्वपूर्णं वैशिष्ट्यविशिष्टश्च प्रतिनिधिः विवेकानन्द-स्वामी लोकप्रियतमः प्रभावितमश्च आसीत्। यदा यदा स्वामी अभाषत", तदा

---

(१३९ पृष्ठतः)
of every religion will soon be written, in spite of his resistance : 'Help and not Fight,' 'Assimilation and not Destruction,' 'Harmony and Peace and not Dissension' "

११ श्रीमती ऍनी बेझण्ट् निजं स्वामिविषयकं प्रथमं ग्रहम् एवं शब्दचित्रीकरोति, 'A striking figure, clad in yellow and orange, shining like the sun of India in the midst of the heavy atmosphere of Chicago, a lion head, piercing eyes, mobile lips, movements swift and abrupt—such was my first impression of Swami Vivekananda ...First impression was of the warrior rather than of the monk purposeful,

तदा स्वरैस्तैः स्वरैस्सेतरैश्च श्रोतृभिः स सोत्साहम् अभिनन्दितः, तस्य च एकैकः शब्दः तैः कर्णीकृतप्राणैः श्रुतः।' दि न्यूयॉर्क हेराल्ड अलिखत्, 'असंशयम् अयं परिषदः महिष्ठो मानवः। अहो मौर्ख्यम् एतादृशाय विद्वद्राष्ट्राय धर्मप्रसारकान् प्रेषयताम् अस्माकम्[१२]।' तस्य भाषणं 'noble and sublime' इति दि रेव्हयू ऑफ रेव्हयूज् अवर्णयत्। 'a Prophet and a Seer' अन्ये उदीरयामासुः। स्वामिनः चित्राणि रथ्यायां स्थापितानि। तानि दृष्ट्वा रथ्यापुरुषा अपि शिरोऽवनमय्य अवन्दन्त। केभ्यश्चिदेव दिनेभ्यः पूर्वम् अज्ञातप्रायः परिव्राजकमात्रश्च सन्तः स्वामिनः सहसा जागतिक-पुरुषताम् अवाप्नुवन्। तथा नाम अयं कीर्तिलाभः आकस्मिकः देदीप्यमानश्च आसीत्, यथा स्वामिनः 'एकस्मिन् प्रभाते उदतिष्ठन्, आत्मानं च लब्धवर्णम् अपश्यन्' इव।

'किं मे पुष्कलाभिः स्तुतिभिः ?'

किं तु स्वामिनः ? तेषां मनःस्थितिः कीदृशी आसीत् ? तेषां प्रतिक्रिया का आसीत् ? अपि ते एतेन अतर्कितोपनतेन कीर्तिवर्षेण अमोदन्त ? आत्मानम् अभ्यमन्यन्त ? ते तु अरुदन्। समाप्तो मे परिव्राजकस्य स्वाधीनः अज्ञातवासः इति विचारः तान् अव्यथयत्। किं तु ईश्वरेण ते कार्यविशेषे नियुक्ता आसन्। तदर्थम् इदमपि एकं मूल्यं प्रदातव्यम् आसीत्। तेषां प्रथम एव विजयदिवसे केनचित् लक्षाधीशेन ते स्वगृहम् आगन्तुं सप्रश्रयं प्रार्थिताः। स्वामिनः तस्य प्रासादम् अगच्छन्। पञ्च पक्वान्नानि अभुञ्जत। भोजनोत्तरं तान् शयनागारं नीत्वा महार्हं पर्यङ्कं दर्शयित्वा, 'स्वामिभिः अधुना विश्रामानुग्रहः कर्तव्यः,' इति च प्रार्थ्य गृहस्वामी निर्गतः। रेल्वे-स्थानके सुप्तपूर्वाः स्वामिनः अस्यां मृदु-मृदुलायां

---

(१४० पृष्ठतः)
virile, strong, he stood out, a man among men, able to hold his own ...'

१२ 'He is undoubtedly the greatest figure in the Parliament of Religions After hearing him we feel how foolish it is to send missionaries to this learned nation '

शय्यायां शयितुं नाशक्नुवन्। सुखसमृद्ध्या परिवृताना स्वामिना नेत्रपुरतः भारतस्य दारिद्र्यम् उपस्थितम्। उपधानम् अश्रुक्लिन्नम् अभवत्। अन्ते शयनासहाः स्वामिनः उत्थाय वातायनम् अगच्छन्। तत्र च अन्धकारावलोकनपराः तस्थुः। केनचित् कालेन दुःखाभिभूता भूत्वा ते भूम्याम् अवासीदन्, जगदम्बां च प्रार्थयन्त, 'हे अम्ब! मम मातृभूमिः तत्र दारिद्र्यपङ्के मग्नाऽस्ति। किं मे एताभिः पुष्कलाभिः स्तुतिभिः? क्व ते दुर्लभान्नग्रासाः भारतीयाः, क्व चैते सौख्यराशौ लुठन्तः अमेरिकीयाः! भारतीया जनता कः उत्थापयिष्यति? कस् तस्याः मुखे कवलं दास्यति? अयि अम्ब! कथमहं तां सेवेय? दर्शय मां मार्गम्।'

सर्वधर्मपरिषत् समाप्ता। स्वामिना कार्यं प्रारब्धम्।

* * * *

# १३. पश्चिमायां वेदान्त-चक्रप्रवर्तनम् (पूर्वार्धम्)

सर्वधर्मपरिषदा स्वामिन विश्वविश्रुता अभवन्। 'विवेकानन्द'-नाम सर्वत्र प्रसृतम्। स्वामिनस्तु न स्वनाम-प्रसारार्थम् अमेरिकां गता आसन्। एक विचारौघ तेषां तत्र विसृष्टव्य आसीत्। हिन्दुधर्मस्य सार प्रसारणीय आसीत्। तत्र वेदान्तस्य चक्र प्रवर्तनीयम् आसीत्। न च केवल बौद्धिका पाठा प्रदेया आसन्। यावच्छक्य तत्रस्थाना जीवितमपि परिवर्तनीयम् आसीत्।

**व्याख्यान-पर्यटनम्**

स्वामिभि व्याख्यानपर्यटन सकल्पितम्। एकया व्याख्यानसस्थया (lecture bureau) इद पर्यटनम् आयोजितम्। व्याख्यानशुल्करूपेण लब्धस्य धनस्य कश्चित् अश स्वामिभि लब्ध। तेन तै किंचिदिव आर्थिक स्वातन्त्र्य लब्धम्। अस्मिन् काले शिकागो-नगरे हेल-कुटुम्बस्य गृह तेषां मुख्या-वास आसीत्। तत्र स्थितै तै शिशिरागमे पर्यटन प्रारभ्य एकवर्षात्मकेन कालेन पूर्वामेरिकाया मध्यामेरिकाया च आयोवा सिटी, इण्डियाना-पोलिस, मिनीपोलिस, डेट्रॉइट, हार्टफोर्ड, बफेलो, बोस्टन, केम्ब्रिज, बाल्टि-मोर, वॉशिङ्गटन, ब्रूकलिन, न्यूयॉर्क इत्येतानि प्रधानानि नगराणि गत्वा तत्र व्याख्यानानि प्रदत्तानि। प्रारम्भिके काले 'आहूतो न निवर्तेयम्' इति वृत्तिम् आश्रित्य तै न किमपि व्याख्याननिमन्त्रण प्रत्याख्यातम्। अद्वैतप्रतिपादनेन पाश्चात्याना मनासि प्रबोधयितुम्, स्वसपर्कगताना जनानाम् आध्यात्मिक दर्शन विस्तारयितुम्, स्वजाते धर्मसस्कृतिगतान् आदर्शान् पाश्चात्येषु परिचाययितु च ते उत्सुका आसन्। प्रतिसप्ताह तै सामान्येन १२-१४ व्याख्यानानि प्रदत्तानि। देवदत्तेन कार्येण गृहीत-चित्तै तै स्वशरीर न अवेक्षितम्।

वक्तुमिद नावश्यकम्, यद् यत्र यत्र ते गता तत्र तत्र आप्लावयता जनसागरेण विहितस्वागता अभवन्। सर्वत्र वृत्तपत्रकारा तान् अन्विष्य अन्विष्य व्यक्तिगतान् स्वदेशगतांश्च प्रशनवर्षान् अवर्षन्। १८९४ ख्रिस्ता-ब्दस्य फेब्रुअरी मासे ते डेट्रॉइट नगरम् अगच्छन्। तत्र 'युनिटेरियन चर्च'

इत्यत्र तेषां व्याख्यानानि बभूवु । तत्रत्य 'डेट्रॉइट फ्री प्रेस'सत्रक वृत्तपत्रम् अस्य कृष्णवर्णस्य, कृष्णकेशस्य, काषायवस्त्रधरस्य च 'पौरस्त्यस्य भ्रातु'[1] आङ्ग्लभाषापाटवेन जनित साश्चर्यानन्द His hearers are pleasantly astonished when the dark-hued, dark haired, dignified man rises in rich yellow robes and speaks their own language with fluency, distinctness and correctness, इति शब्दै वर्णयति। 'मानवस्य दिव्यत्वम्' (the Divinity of Man) इति-सज्ञकस्य व्याख्यानस्य वर्णनावसरे तदेव पत्र 'so logical that he made science appear like common sense' इति आह।

श्रीमती मेरी सी फुङ्के (या वर्षद्वयोत्तर स्वामिना शिष्या अभवत्) १४ फब्रुअरी दिने प्रथममेव स्वामिना व्याख्यानम् अशृणोत्। तदानीम् अवलोकित स्वामिना नरेन्द्रभाव (ईश्वरभाव), प्रभाववान् आकृति-विशेष, श्रवणसुभग अनेकरूपधृक् शब्द, प्रथमशब्दश्रवणेन च सभागृहे प्रसृता एकश्वासा निःशब्दता इत्येतत् तया सुष्ठु वर्णितम् स्ति[2]। विशेषतश्च स्वामिना देशभक्त्या जना प्रभाविता अभवन्। यया रीत्या 'मम देश' इति प्रस्तुत्य ते भाषन्ते स्म, सा हृदयस्पर्शिनी आसीत्। इदम् एकमेव शब्दद्वयम् अस्य सन्यासिन स्वजनाभिमुखत्व पर्याप्त प्रकटीचकार[3]।

---

१ 'Eastern brother—as he likes to be called'

२ 'I can see him yet as he stepped upon the platform, a regal majestic figure, vital, forceful, dominant, and at the first sound of the wonderful voice, a voice all music—now like the plaintive minor strain of an Eolian harp, again deep, violent, resonant—there was a hush, a stillness that could almost be felt, and the vast audience breathed as one man'

३ "His patriotism was perfervid The manner in which he speaks of 'My country' is most touching. That one phrase revealed him not only as a monk, but as a man of his people"

साहाय्यकारिणी अशरीरिणी वाक्

अनवरतप्रवृत्तेन व्याख्यानचक्रेण स्वामिनः अन्तरान्तरा क्षीणबलाः भवन्ति स्म। न केवलं शरीरेण, मनसाऽपि। 'किं वा श्वः व्याख्यानं वक्ष्यामि?' इति ते विकल्पविमूढा भवन्ति स्म। एतादृशेषु अवसरेषु तैः अद्भुतेन रूपेण मार्गदर्शनं लब्धम्। कदाचित् ते मध्यरात्रे आत्मानम् उद्दिश्य उच्चैः भाषमाणं कमपि अशृण्वन्। कदाचित् स्वसमीपे व्याख्यानं प्रददतं कमपि। कदाचिच्च विवदमानौ कावपि द्वौ पुरुषौ। एवम् अशरीरिण्या वाचा समर्पितं विचारधनं ते उत्तरेषु व्याख्यानेषु उपन्यास्यन्। नेदं शब्दश्रवणं चमत्कारत्वेन स्वामिनः अमन्यन्त। मनसः शक्तिः अपरिमिताऽस्ति, सैव सति प्रसङ्गे एतादृशनिर्माणक्षमा, इति ते अवदन्। इदं तु न विस्मर्तव्यम्, यत् कदाचित् कक्षान्तरगता जना अपि एतेषां मिथोभाषणानां व्याख्यानानां वा ध्वनिं शृण्वन्ति स्म, प्रभाते च 'स्वामिन्! केन सह भवान् रात्रौ एवमुच्चैः भाषमाण आसीत्?' इति पृच्छन्ति स्म। स्वामिनः तान् यत्किमपि वदन्ति स्म। स्वशिष्याणां तु समाधानं ते आत्मनः अचिन्त्यशक्तित्वम् आश्रित्य कुर्वन्ति स्म। न कदापि तैः एते प्रकाराः चमत्कारोत्पादकव्यवसायीकृताः। यतः ते सिद्धिविषये अत्यन्तनिःस्पृहा आसन्, स्वशिष्या अपि तैः सिद्धिभ्यो दूरे स्थातुम् उपदिष्टाः।

'गच्छत! पुनरपि हरितं शरणीकुरुत!'

शब्दे अनादयन्'। डेट्रॉइट इत्यत्र फेब्रुअरी मासे (१८९४) प्रदत्ते एकस्मिन् व्याख्याने 'युष्माभिः शस्त्रबलेन स्वधर्मं प्रसार्य, धनपूजनं च प्रारभ्य ख्रिस्तोपदेशः अवज्ञासरणिं नीतोऽस्ति' इति ते अवदन्। भारतीयानां धर्मदेवतानां ख्रैस्तैः धर्मोपदेशकैः कृतस्य अवमानस्य प्रतिशोधार्थं यदि समग्रेण भारतेन उत्थाय भारतीयमहासागरस्य तलगतः समग्रोऽपि पङ्कराशिः गृहीत्वा पाश्चात्यदेशोपरि क्षिप्तः, नहि तावताऽपि अंशतोऽपि ऋणनिर्यातनं स्याद्वा न वा इति ते स्पष्टम् ऊचुः'। 'न यूयं ख्रिस्तानुयायिनः। राष्ट्ररूपेण तावत् नैव। गच्छत। पुनरपि ख्रिस्तं शरणीकुरुत',' इति स्वामिनः तान् आदिशन्। ख्रैस्तजनताम् उद्दिश्य ते एकदा एवमूचुः – 'यूयं मम पुत्रीभूताः। युष्मत्कल्याणार्थमेव अहं ब्रवीमि। नाहमत्र चाटुकारत्वेन आगतोऽस्मि'। यत् पौरस्त्य आसीत्, अतः वयं पौरस्त्या एव तस्योपदेशं सम्यक् ग्रहीतुं समर्थतराः। क्वास्ति अत्र ख्रिस्तधर्मः? क्वास्ति अत्र स्वार्थसंगरे, अन्धायां च विच्छेदप्रवणतायां यशो क्रुते स्थानम्? नूनं यदि अद्य सोऽत्र स्यात्, तर्हि शिरो निधातुं शिलामपि एकां न लभेत'।'

मिशनरीभिः स्वामिनां चारित्र्यहनन प्रयत्नाः

किमत्र चित्रं यदि एतादृशैः क्षुरधारैः शब्दोद्गारैः स्वामिभिः ख्रैस्तानां धर्मोपदेशकानां मनसि वैराग्निः सन्धुक्षितः? ते सर्वोपायैः स्वामिनां

४ अमेरिकायां स्वामिभिः एवम् अनिष्पष्टभाषिभिः भवितुम् अयुक्तम् इति कदाचित् कथाप्रसङ्गेन तान् श्री रॉबर्ट इङ्गरसोल महोदयः अनुनयन् अपि।

५ '...if all India stands up and takes all the mud that is at the bottom of the Indian Ocean and throws it up against the Western countries it will not be doing an infinitesimal part of that which you are doing to us.'

६ 'You are not Christians. No, as a nation you are not. Go back to Christ.'

७ 'I am not here to flatter you.'

८ 'True, if He were here to-day, He would not find a stone whereon to lay His head.'

यशो दूषयितु प्रयतितम् । तेषु स्त्रीप्रयोग कृत । कौलीनानि प्रसारितानि[९] । सै गोमास भक्षितम् इति प्रचारितम् । यत्र यत्र स्वामिन गता तत्र तत्र तान् अनुसृत्य कश्चित् स्ट्रैस्त धर्मोपदेशकगण तान् नैस्तैर् दोषारोपैः आक्षारयत् । विवेकानन्द पाखण्ड प्रचारयति इत्युक्त्वा केचन ब्राह्म-समाजीया स्वामिन धिक्चक्रु[१०] । सत्यनिष्ठा सात्त्विकाश्च स्ट्रैस्तास्तु स्वामिना पक्षपातिन आसन् । अत, अयुक्त च सन्यासिना आत्मसमर्थन नाम इति कृत्वा स्वामिन प्रतिवाचम् अदत्त्वा शान्तेन मनसा स्वीय कार्यं कुर्वाणास् तस्थु । अमेरिकीय-वृत्तपत्रगत कश्चित् स्वामिनाम् अपकीर्तिकर लेख दृष्ट्वा अस्वस्थै भारतीयै भक्तै तद्विषये पत्र विलिख्य स्वचिन्ता प्रकटी-कृता । स्वामिभिस्तु तस्य वृत्तपत्रस्य वास्तव (अध) स्थान निर्दिश्य स्वभक्ता आश्वासिता ।

...न बिभेति...

पश्चिमामेरिकाया पर्यटनावसरे एकदा अथ रोमहर्षण प्रसङ्ग समपद्यत । 'आनन्द ब्रह्मणो विद्वान् न बिभेति कुतश्चन' इति वाक्य स्वामिमुखात् श्रुत्वा तान् परीक्षितुकामा केचन धृष्टा सुशिक्षिता

---

९ 'It goes without saying that they produced that classic accusation of Anglo-Saxon countries, seduction ! In order to stop the false rumour spread by a vulgar-minded clergyman that he had wronged a servant dismissed by the Governor of Michigan, letters of public denial (March 1895) were necessary from the Governor's wife testifying to the moral dignity of Vivekananda But no denials ever repair the damage done by unscrupulous lies' (Romain Rolland, 'The Life of Vivekananda' p 44 note 1
श्रीमती जॉन बाग्ले (मिशिगनशासिन राज्यपालस्य पत्नी) इत्यस्या अतिथिभूता स्वामिन चत्वारि सप्ताहानि तद्गृहे उषिता आसन् ।

१० 'He had against him a curious alliance of Protestant missionaries Theosophists, and some members of the Brahmo Samaj' (Romain Rolland, op cit, note 2)

जना[११] तान् स्वग्रामम् अनयन्। सत्रत् भाषणे प्रारब्धे स्वामिन तन्मया. अभवन्। सहसैव तैः पिस्तुलध्वनिः श्रुतः। पृष्ठतो विसृष्टा सू-स्-कुर्वाणा गोलिका तेषां वर्णसमीपात् अग्रतो गता। इदम् अविभाव्य इव, मध्ये अविरम्य, स्वामिभिः यथावकाशं स्वं भाषणं समापितम्। पश्चात् तैः 'परीक्षकैः' स्वामिनः 'a right good fellow' इति प्रशंसिताः।

दक्षिणस्यां पर्यटन्तः स्वामिनः अनेकदा निग्रोत्वेन गृहीता अभवन्, अतश्च पथिकाश्रमेषु वा भोजनालयेषु वा प्रवेशं नालभन्त। स्वामिभिस्तु 'नाहं निग्रो, अहं भारतीयः' इति प्रवेशार्थं न कदापि स्वरूपं प्रकटीकृतम्। एकदा अयम् अस्मज्जातीयः प्राप्तगौरवः निग्रो इति बुद्ध्या हस्तान्दोलनार्थम् आगतेन केनचित् निग्रोणा सह 'अनुगृहीतोऽस्मि भ्रातः,' इत्युक्त्वा स्वामिभिः हस्तान्दोलनं कृतम्। वर्णजातिकृतान् मिथ्याग्रहान् ते अनीता आसन्। यतस्त्वयम् आत्मनः 'मङ्गोलीय-हनो' कृते ते गर्वभारम् अबिभरुः। दृढग्रहस्य स द्योतक इति ते अमन्यन्त[१२]।

वर्षात्मकस्य व्याख्यानपर्यटनस्य अनन्तरं स्वामिनः न्यूयॉर्कम् अगच्छन्। तत्र डॉ लेविस जी जन्स इत्यभिः सह तेषां परिचयः सञ्जातः, स शीघ्रं मैत्र्या घनीभूतः। अस्य डॉक्टर-महोदयस्य निमन्त्रणं स्वीकृत्य स्वामिभिः 'ब्रूकलिन एथिकल असोसिएशन' पुरतः हिन्दुधर्मम् अधिकृत्य व्याख्यानानि प्रदत्तानि। 'हर्बर्टनीति-बौद्धतत्त्वज्ञानयोः संयोगकरः अभिनवो धर्मप्रवर्तकः' इति शब्दैः स्वामिनः 'दि ब्रुकलिन स्टॅण्डर्ड' इत्येतेन पत्रेण वर्णिताः सन्ति।

अधुना स्वामिना परमार्थतः महत्त्वपूर्णं कार्यं प्रारब्धम्। सशुल्के व्याख्यानपर्यटने ते अधुना गतरसा अभवन्। एतेषां प्रभावः तत्कालमात्र-

११ ' . a number of university men, who had become cow boys.' ('The Life of Swami Vivekananda' by his Eastern and Western Disciples, p 399)

१२ "He was immensely proud, in his own physiognomy, of what he called his 'Mongolian jaw', regarding it as a sign of 'bull dog tenacity of purpose'." (Sister Nivedita)

स्थायी भवति, न चिरस्थायी भवति, इति तेषां मति अभवन्। अत तैं न्यूयॉर्के एकस्मिन् पथिकाश्रमे भाटकेन कक्षो गृहीतः। तस्मिश्च स्वकक्षे स्थित्वा ते नि शुल्कम् उपदेशदान कर्तुं प्रवृत्ता। विशालान् जनसमर्दान् उद्दिश्य कृताना भाषणाना स्थाने केचिदेव गुणविशेषसपन्ना स्त्रीपुरुषा वरणीया, ते सम्यग्ज्ञान ग्राहणीया, सत्त्वर्नेया, तेषा जीवितमार्गाणि परिवर्तनीया, एव च केचित् योगिन निर्मातव्या (' to manufacture a few Yogis out of the materials of the classes ') इति स्वामिना विचार अभवत्। अतो हेतो तैं मर्यादितस्थले स्वगृहे नि शुल्का पाठा व्याख्यानानि च प्रारब्धानि। १८९५ ख्रिस्ताब्दस्य फेब्रुअरी मासे एते वेदान्तवर्गा प्रारब्धा। शीघ्रमेव इदमपि स्थान जनसकुलम् अभवन्। सोपानपङ्क्तौ अपि जना उपविशन्ति स्म। कुमारी एस् ई वाल्डो (पश्चात् 'भगिनी हरिदासी') इत्यनया एव लिखितमस्ति —

"It was just an ordinary room on the second floor of a lodging house The classes grew with astonishing rapidity and as the little room filled to overflowing it became very picture que The Swami himself sat on the floor and most of his audience likewise. The marble topped dresser, the arms of the sofa and even the corner washstand helped to furnish seats for the constantly increasing numbers The door was left open and the overflow filled the hall and sat on the stairs And those first classes! How intensely interesting they were! Who that was privileged to attend them can ever forget them? The Swami so dignified yet so simple so gravely earnest, so eloquent, and the close ranks of students forgetting all inconveniences, hanging breathless on his every word! It was a fit beginning for a movement that has since grown to such grand properties In this unpretentious way did Swami Vivekananda inaugurate the work of teaching Vedanta philosophy in New York"

बौद्धिक पाठं सह स्वामिभि ध्यानाभ्यासोऽपि अध्यापयितुम् आरब्ध। कतिपयान् जिज्ञासावत जनान् ते कथम् आसनम्, कथ प्रत्याहार, कथ मनस एकाग्रीकरणम् इत्यादि सनिदर्शनम् अध्यापयित

प्रारभन्त। मनसः शान्तिलाभार्थम् अथ योगाभ्यास आवश्यक आसीत्। आदौ तावत् ध्यानाभ्यासम् अध्यापयन्त स्वामिन नैकदा अबोधपूर्वं समाधिमग्ना भवन्ति स्म। इदं परिजिहीर्षुभि स्वामिभि 'यदि नाम एव पुन आवर्तेत, तर्हि इत्थम् अहं प्रकृतिम् आपादनीय,' इत्युक्त्वा स मार्गं शिष्यान् प्रति निवेदित।

भारतीयेभ्यो मार्गदर्शनम्

अत्रान्तरे भारतात् स्वामिना शिष्या तेभ्य पत्रमनु पत्र प्रेषितवन्त। ते स्वामिन मार्गदर्शनार्थं प्रार्थयन्त। भारत प्रति निवर्तध्वम् इत्यपि शिष्या तान् विज्ञापयामासु। स्वामिविरोधिना वृत्तपत्रप्रचारेण ते व्यथिता अपि आसन्। स्वामिभि प्रभुसमितै शब्दै ते स्वावलम्बनम् आस्थातुम् आदिष्टा। ते लिखन्ति – यदि यूय सत्यमेव मम पुत्रका, मा भैष्ट। मा विरमत। सिहा भविष्यथ। अस्माभि समग्र भारतम्, न हि, समग्र जगत् उत्थापनीयम अस्ति। ख्रैस्तधर्मोपदेशकाना प्रचारविषये ते लिखन्ति–'अत्र अनेके ख्रिस्तधर्मोपदेशका मम मैत्रभावम् आपन्ना सन्ति। मा जना स्तुवन्तु, निन्दन्तु वा। मा तत्र अवधत्त। अहम् उत्तमोच्छ्वासपर्यन्त अविरत कर्मरतो भविष्यामि तदुत्तरमपि च जगत्कल्याणाय यतिष्ये।'[१३]

वराहनगरस्थेभ्य गुरुबन्धुभ्य, अन्येभ्यश्च अनुयायिभ्य अस्मिन्नेव काले पत्राणि विलिख्य दरिद्रनारायणस्य सेवाख्य व्रतम् अङ्गीकर्तुं स्वामिन प्राचोदयन। अथ तेषा पत्राणा सार –

'अहं देवभक्तानाम् आज्ञाकरोऽस्मि। ते हिन्दवो वा, मुस्लिमा वा इत्यादिकं नाहं विचारयामि। अग्नौ आत्मान प्रक्षिप्य जनान् उद्धरत, प्रभुसमीपे च आनयत। नाहं कश्चिद् अध्यात्मज्ञ, न

१३ " In future do not pay any heed to what people say either for or against me I shall work incessantly until I die, and even after death I shall work for the good of the world "

तत्त्ववेत्ता, न वा साधुपुरुष । अहं दरिद्रोऽस्मि, दरिद्रेषु च स्निह्यामि भारते दारिद्र्याज्ञानयोः सदामग्नान् विंशतिकोटिसंख्यान् जनान् कः स्मरति ? ते युष्माकं देवाः भवन्तु । तांश्चिन्तयत, तेषामर्थे कर्म कुरुत, तेषामर्थे च प्रार्थयध्वम् । लाभालाभौ जयाजयौ वा मम मम्तौ स्त । मम आन्दोलनेन तु विशुद्धेन स्थातव्यम् । यस्मिन् दिने 'म्लेच्छ' शब्दः प्रथमप्रयुक्तः अभवत्, अस्माभिश्च तैः ('म्लेच्छैः') सह संबन्धविच्छेदः कृतः, तस्मिन् दिने भारतस्य विनाशः मुद्राङ्कितः अभवत् ।

संघटनाविषयेऽपि स्वामिभिः स्वे विचाराः प्रकटिताः सन्ति । ते अवधारणीयाः । ते लिखन्ति –

'या हिन्दून् अन्योन्यसाहाय्यं गुणग्रहणं च शिक्षयिष्यति, तादृशी संघटना आवश्यकी अस्ति । ये भारतीयजनोद्धरणे सर्वात्मना व्यापृता भवितुं क्षमाः, तेषु तरुणजनेषु कार्यभाजो भवत । आज्ञापालनम् अभ्यस्यत । चालकानुवर्तित्वं विना आज्ञापालनं विना, न वैयक्तिकीनां शक्तीनां केन्द्रस्थीकरणं शक्यम् । शक्तीनां च केन्द्रस्थीकरणं विना न किमपि महत् कार्यम् अनुष्ठातुं शक्यम् । मुञ्चत मत्सरम् । त्यजत अहङ्कारम् । परोपकारार्थं साधिकं कार्यं कर्तुम् अभ्यस्यत । अस्मद्-देशस्य इयं महती अपेक्षा अस्ति ।'

'ब्रह्मवादि'-स्थापना

वेदान्तस्य प्रसाराय भारते एकं नियतकालिकं पत्रं प्रचालनीयम् इति इच्छा एव दिनेषु स्वामिना मनसि उदेत् । तदनुसारेण मद्रासस्थितेभ्यः अनुयायिभ्यः अयं विचारः तैः निवेदितः । लौकिकविषयकेभ्यः व्याख्यानेभ्यः प्राप्तं धनं[14] तैः एतत्कार्याय प्रेषितम् । संस्कृतशास्त्राणाम् अध्ययनं प्रचोदितम् । सङ्कल्पितस्य नियतकालिकस्य मार्गदर्शनार्थं लिखिते पत्रे (६ ५-१८९५) 'कर्मकाण्डं सर्वथा परिहरत । तत्त्वज्ञानं प्रतिपाद-

१४ इदानीं स्वामिनाम् आध्यात्मिकानि व्याख्यानानि निःशुल्कानि आसन् । आवश्यकव्ययव्यवस्थार्थं ते सशुल्कानि लौकिकानि व्याख्यानानि अददुः ।

यत' इति ते उपदिशन्ति। अस्मिन्नेव पत्रे तैः स्वीया एका गवेषणा ('my discovery') निर्दिष्टा अस्ति। सर्वोऽपि धर्मः वेदान्ते समाप्नः, द्वैतम् विशिष्टाद्वैतम् अद्वैतं च इत्येते त्रयः सम्प्रदाया नाम तित्रः क्रमानुसारिण्य स्वाभाविक्य अत एव आवश्यक्य विकासावस्था, हैन्दव-हरेसन-मौहम्मदप्रभृतयो धर्मा नाम तत्तद्-देशकाल-विशिष्टेषु तेषु तेषु वंशेषु विनियुक्त अन्यतम वेदान्तसम्प्रदाय इत्युक्त्वा इमम् अवयवत्रितययुक्त वेदान्तम् अधिकृत्य लेखमनु लेख्य प्रकाशनीय इति स्वामिनः उपादिशन्। 'ब्रह्मवादिन्' इति नाम्ना इद नियतकालिक प्रावर्तत।

'राजयोग'

स्वामिन शिष्यान् ध्यानाभ्यासमपि पाठयन्ति स्म इति उपरि निर्दिष्टमस्ति। अत्र तै अधिकारतत्त्व परिपालितम। तस्य तस्य शिष्यस्य रुचि, स्वाभाव्यम्, परिस्थिति इत्यादि सूक्ष्मेक्षिकया निरीक्ष्य तस्य तस्य अनुकूल स स विशेषो ध्यानप्रकार तै उपदिष्ट। स्वामिन अमेरिकायामपि अखण्ड ध्यानाभ्यासरता आसन। अस्मिन् अवसरे तै राजयोगम् अधिकृत्य यानि व्याख्यानानि प्रदत्तानि तानि पत्रार्पितानि अभवन्, तस्माच्च 'राजयोग' नाम प्रख्यातो ग्रन्थ आविर्बभूव (जून १८९५)। स्वामिन मुखत अवयवन्, कुमारी वाल्डो च तत् पत्रार्पितम् अकरोत्। सूत्राणा व्याख्यानावसरे स्वामिन अनेकदा समाधौ अमज्जन्, किमपि च अपूर्व व्याख्यानम् उददीधरन् इति स्व अनुभव अनया लेखिकया निर्दिष्टोऽस्ति।

एतावता कालेन स्वामिना परिवार प्रवृद्ध आसीत्। तत्र लेगेट्-दम्पती तथा च कुमारी जे मॅक्-लिऑड्-सदृशा सुहृद आसन्। श्रीमती ओल-बुल, कुमारी वाल्डो, डॉ स्ट्रीट, वायमन तथा च राइट इति प्राध्यापकौ इत्यादय अनुयायिन आसन्। अनके प्रशसका आसन्। तथापि आत्मन पश्चात् ये अमेरिकाया वेदान्तप्रसारम अग्रतसर स्थापयिष्यन्ति, तादृशान काश्चित् सन्यासिन स्वामिन ऐच्छन्। अस्य वर्षस्य ग्रीष्मर्ता तै द्वी सन्यासिनौ लब्धौ। मादाम मेरी लुइजे (मूलत फ्रेञ्च) तथा च हेर लिऑन लाण्ड्स्बेर्ग (जन्मत रूसीय ज्यू) इत्येतौ स्वामिभि सन्यास ग्राहितौ। तौ यथासख्यम् अभयानन्दा तथा च कृपानन्द बभूवतु। निको-

लास तेस्ला इत्यादयेन विद्युच्छास्त्रज्ञेन स्वामिना साङ्ख्य-दर्शने व्याख्यानानि श्रुत्वा तत्रस्थ विश्वरचनाशास्त्र प्राण-आकाश-कल्पादीनि च तत्वानि युक्तिरागततया उत्कृष्टतराणि इति अभ्युपगतम्। साराह् बेन्हार्ट इत्याख्या जगद्विख्याता फ्रेन्च अभिनेत्री स्वामिन. अभ्युपगम्य तेषा दार्शनिकेषु उपदेशेषु आस्था प्रकटीचकार। पश्चात् मादाम काल्वे इत्यारया सुप्रसिद्धा गायिकाऽपि स्वामिनाम् अनुयायिनी अभवत्।

## मुक्ति-पुनर्जन्म-रहस्यम् एका कथा

अनया गायिकया स्वामिविषयिका काश्चन स्मृतयः लिखिताः सन्ति। कुतश्चित् कारणात् चिन्ताकुला अस्वस्थचित्ता च सा चित्त-समाधानार्थं स्वामिन अभ्युपागच्छत्। तया किंचिन् अनुक्तेऽपि स्वामिन. तस्या चिन्ताकारण निवेद्य आत्मनि विश्वासम् उदपादयन्। ता च युक्ति-वचोभि आश्वास्य प्रतिप्रैषयन्।'सर्व विस्मर। पुनरपि मोदस्व। हस। उल्लस। शरीरम् अवेक्षस्व,' प्रस्थानोद्यता ता ते अवदन्। अन्यस्मिन् अव-सरे पुनर्जन्मविषयिकाया चर्चाया प्रसङ्गेन 'नाहम् आत्मानम् अनन्ते कूटस्थे विसर्जयितुम् इच्छामि। नोत्सहे क्षुद्रा सतीमपि निजाम् अस्मिता (individuality) विहातुम्,' इति तयोक्ते स्वामिभि एका कथा कथिता। ते अवदन्, "एको जलबिन्दु समुद्रे अपतत्। स अरोदीत। समुद्र अप-च्छत्, 'किं रोदिषि?' सोऽवदत्, 'हा हतोऽस्मि! नष्टा मे अस्मिता,' इति। समुद्र अवदत्, 'किमत्र दुःखकारणम्? ननु त्वम् इदानी समुद्री-भूतोऽसि। तथापि यदि पृथक्त्वम् इच्छसि, सूर्यकिरणम् आरोह। मेघ गच्छ। ततश्च, हे बिन्दुक! तृषितया धरण्या अभिनन्द्यमानागम पुनरपि अवतर।'" सर्वभूताना सुहृद्भूतै, नित्यानन्दभूत-परमेश्वरसंनिधिभि स्वामिसदृशै दार्श-निक-साधुपुरुषै सह जातस्य परिचयस्य हेतो निज कृतार्थत्व "It has been my good fortune and my joy to know a man who truly 'walked with God,' a noble being, a saint, a philosopher and a true friend" इति शब्दै इम कलावती व्यनक्ति।

## प्रवृत्ति निवृत्त्योः मनसि संघर्षः

१८९५ खिस्ताब्द स्वामिना कार्योन्मादस्य परमोच्चबिन्दु आसीत्। द्वे वर्षे तैः अविश्रान्त परिश्रान्तम् आसीत्। अभिमानास्पदं कार्यम् अनु-

वस्त्रखण्ड निधाय पाचकम् अनुकुर्वाणा 'पाक सिद्ध ' इति उद्घोषयन्ति स्म । सर्वेषामेव आयुषि इद कालखण्डम् अविस्मरणीय-सुखदम अभूत ।

अत्रैव वसद्भि स्वामिभि काशीपुरीयानुभवसम निर्विकल्पसमाधि पुनरपि अनुभूत । एतदुत्तर लिखिते पत्रे 'मुक्तोऽस्मि। छिन्नानि मे बन्धनानि। कामम इदानी शरीरमिद तिष्ठतु पततु वा', इति ते कृतार्थता प्रकटयन्ति। अस्मिन्नेव काले तै एक पत्र प्राप्तम् । धनिकान परित्यज्य दरिद्रेषु कार्यकरण स्वामिभि प्रारब्धम् आसीत। पत्रलेखकेन प्रभुसमितै शब्दै निषेध प्रकटीकृत आसीत्। एतम् अतिक्रमम् असहमानै सर्वतन्त्र-स्वतन्त्रै स्वामिभि तत्कालम् इमा कविता विरचय्य सा प्रत्युत्तररूपेण पत्रलेखकाय प्रेषिता। स्वामिना कवितासु इय सर्वोत्कृष्टा इति अनेके मन्यन्ते ।

## THE SONG OF THE SANNYASIN

### सन्यासिगीतम्[19] ।

[1] Wake up the note ! the song that had its birth,
Far off, where worldly taint could never reach,
In mountain caves and glades of forest deep,
Whose calm no sigh for lust or wealth or fame
Could ever dare to break, where rolled the stream
Of knowledge, truth and bliss that follows both
Sing high that note, Sannyasin bold ! Say—
"Om Tat Sat, Om !"

१ उद्गायस्व ध्वानमेत जटिलनगभुवा जातमन्तर्गिरीणा
शान्तिर्न्नर्थरमङ्गा न खलु भवमलस्पर्शशङ्कापि यत्र ।
यत्रानन्दोऽनुरूपन वहति चिन्मितोनिर्झर ध्वानमेत
प्रोच्चैर् ॐतत् सदोमित्यभयमिह यतिन् गर्ज जीमूतधीरम् ॥

१८ 'I am free, my bonds are cut what care I whether this body goes or does not go ?' कस्मै इद पत्र प्रेषितम आसीत् इति तु विवेकानन्दचरितकारा मनामनिर्देश न स्पष्टीकुर्वन्ति ।

१९ अथ संस्कृतानुवाद श्री न ना भिडे इत्यभि टनोऽस्ति, स च

[2] Strike off thy fetters! Bonds that bind thee down,
Of shining gold, or darker, baser ore,
Love, hate—good, bad—and all the dual throng
Know, *slave is slave, caressed or whipped, not free,*
For fetters though of gold, are not less strong to bind;
Then off with them, Sannyasin bold! Say—
"Om Tat Sat, Om!"

२ रुन्धानाग्निर्घुनु त्व लघु निजनिगडानायसान्वाऽथ हैमान्
प्रीतिद्वेषस्तथा वा सुखमसुखमिति द्वन्द्वरूप हि सवम ।
दास प्रीतोऽपि दास क्षयमपि न भवेन्मुक्त एष स्वपाशान्
धुन्वन ॐ तत्सदोमित्यभयमिह यतिन् गर्ज जीमूतधीरम् ॥

[3] Let darkness go, the will o'-the-wisp that leads
*With blinking light to pile more gloom on gloom*
This thirst for life, for ever quench, it drags
From birth to death, and death to birth, the soul
He conquers all who conquers self Know this
And never yield, Sannyasin bold! Say—
"Om Tat Sat, Om!"

३ ध्वान्त ध्वस प्रयायादियमिह सतत मोहयन्ती हि माया
विद्युद्भाभिर्नयन्ती घनतरतिमिराद् अन्धकार सुगाढम ।
तृष्णय यातु शान्ति जनिमरणकरी विश्वजेताऽऽत्मजेता
जानन् ॐ तत्सदोमित्यभयमिह यतिन् गर्ज जीमूतधीरम् ॥

---

(१५६ पृष्ठत)
'शारदा' सस्कृत नियतकालिकस्य जानुअरी १९७० अङ्के (पृ २५–२९) समूल मुद्रितोऽस्ति, तत एव च अनुवादकसौजन्येन अत्र उद्धृतोऽस्ति ।
—मराठी-अनुवादोऽपि स्वर्गीय. डॉ ना दा सावरकर इत्येतै कृतोऽस्ति । अन्यै अनेकैरिव प्रस्तुतेन ग्रन्थकर्त्राऽपि सोऽनुवाद 'ॐ तत्सतची ललकारी गर्जवी' इत्यारभन्' वान्ये पठ्यस्थीरन आसीन् ।

[4] "Who sows must reap", they say.
"and cause must bring
The sure effect, good, good, bad, bad, and none
Escape the law But whoso wears a form
Must wear the chain" Too true, but far beyond
Both name and form is Atman, ever free
Know thou art That, Sannyasin bold! Say—
"Om Tat Sat, Om!"

४ आहुर्बीजादवश्य फलमिति च तथा कारणाद् भावि कार्यं
दुष्टाद् दुष्ट तथा सत् सत इति नियमाद देहभागेति बन्धम् ।
सत्य भो नामरूपात्पर इह तु सदा मुक्त आत्मा स च त्व
विद्वान् ॐ तत्सदोमित्यभयमिह यतिन् गर्ज जीमूतधीरम् ॥

[5] They know not truth who dream such vacant dreams
As father, mother, children, wife and friend
The sexless Self? Whose father He? Whose child?
Whose friend, whose foe is He who is but One?
The Self is all in all, none else exists,
And thou art That, Sannyasin bold! Say—
"Om Tat Sat, Om!"

५ ते नो जानन्ति तत्त्व स्वजनक जननीपुत्रमित्रादि येषा
तथ्य निर्लिङ्ग आत्मा भवति स जनक कस्य वा कस्य पुत्र ।
मित्र कस्याहितो वा पर इह न यत केवलोऽस्य स हि त्वम्
प्रोच्चैर् ॐ तत्सदोमित्यभयमिह यतिन् गर्ज जीमूतधीरम् ॥

[6] There is but One—The Free-The Knower Self!
Without a name without a form or stain
In Him is Māyā, dreaming all this dream
The Witness, He appears as nature, Soul
Know thou art That, Sannyasin bold! Say—
"Om Tat Sat, Om!"

६ एकोऽय नास्ति चान्य प्रभवति परमो मुक्तबुद्ध स आत्मा
नाम्ना रूपेण चाय भवति विरहितो नास्ति चास्मिन् विकार ।

माया तस्मिन् स्वभासा तनुत इह स चाप्यक्षरूपः स च त्वं
विद्वान् ॐ तत्सदोमित्यभयमिह यतिन् गर्ज जीमूतधीरम् ॥

[7] Where seekest thou? That freedom, friend, this world
Nor that, can give. In books and temples vain
Thy search. Thine only is the hand that holds
The rope that drags thee on. Then cease lament,
Let go thy hold, Sannyasin bold! Say—
"Om Tat Sat, Om!"

७ मुक्तिं तां ब्रूहि मित्र क्व वत मृगयसे नेह नामुत्र लभ्या
व्यर्थं ग्रन्थेषु तस्यै मृगितमिह तव स्यात् पुनर्मन्दिरेषु।
त्वां कर्षन्नेष पाशो भवति तव करे मुञ्च शोकं ग्रहं तं
मुञ्चन् ॐ तत्सदोमित्यभयमिह यतिन् गर्ज जीमूतधीरम् ॥

[8] Say, "Peace to all, from me no danger be
To aught that lives. In those that dwell on high,
In those that lowly creep, I am the Self in all!
All life both here and there, do I renounce
All heavens, and earths and hells, all hopes and fears"
Thus cut thy bonds, Sannyasin bold! Say—
"Om Tat Sat Om!"

८ ब्रूया सर्वस्य शान्तिर्भवतु न च भयं जीवजातस्य मत्तः
सर्वेष्वेवाहमात्मा दिवि भुवि वसताम् उच्चकैर्वाप्य नीचैः।
अत्रामुत्रस्थलोकं बयमखिलसुखं सत्यजामीति पाशान्
भिन्दन् ॐ तत्सदोमित्यभयमिह यतिन् गर्ज जीमूतधीरम् ॥

[9] Heed then no more how body lives or goes,
Its task is done. Let Karma float it down,
Let one put garlands on, another kick
This frame, say naught. No praise or blame can be
Where praiser, praised, and blamer, blamed are,—one.
Thus be thou calm Sannyasin bold! Say—
"Om Tat Sat, Om!"

९ चिन्ता मा भूत् ततस्ते कथमयमयते स्पन्दते वा स्वकायः
सपन्न तस्य कार्यं नुदतु च नियतं कर्म सम्प्रत्यथैनम्

वा निन्दा वा प्रशंसा यदि हृदि सकलस्यैवतात प्रशान्तो
नन्दन् ॐ तत्सदोमित्यभयमिह यतिन् गर्ज जीमूतघोरम् ॥

[10] Truth never comes where lust and fame and greed
Of gain reside : No man who thinks of woman
As his wife can ever perfect be,
Nor he who owns the least of things nor he
Whom anger chains, can ever pass thro' Maya's gates
So give these up Sannyasin bold ! Say—
"Om Tat Sat, Om !"

१० सत्यं नोदेति यत्र प्रकटवसतयः कामलोभादितृष्णा
स्त्रीयं भार्या ममेति स्वमनसि कलयन् पूर्णतां नैति जन्तुः ।
मायाद्वारान् मुक्तिर्यदि हृदि ममता क्रोधलेशा अतस्तान्
उज्झन् ॐ तत्सदोमित्यभयमिह यतिन् गर्ज जीमूतघोरम् ॥

[11] Have thou no home What home can hold Thee, friend?
The sky thy roof, The grass thy bed, and food,
What chance may bring, well-cooked or ill, judge not
No food or drink can taint that noble Self
Which knows Itself . Like rolling river free
Thou ever be, Sannyasin bold ! Say—
"Om Tat Sat, Om !"

११ मा भूद् गेहं तवेह प्रभवति भवनं किं नु धर्तुं सखे त्वा
दर्भा शय्या नभस्ते पटलमथ यथाप्राप्तमन्नं न चिन्त्यम्
स्वात्मा बुद्धोऽन्नपेयैर्न भवति विकृतस्तन्नदीवत् प्रमुक्तो
दण्डिन् ॐ तत्सदोमित्यभयमिह यतिन् गर्ज जीमूतघोरम् ॥

[12] Few only know the truth The rest will hate
And laugh at thee great one, but pay no heed
Go thou, the free, from place to place, and help
Them out of darkness, Maya's veil : Without
The fear of pain or search for pleasure, go
Beyond them both Sannyasin bold ! Say—
"Om Tat Sat, Om !"

१२ स्वल्पा जानन्ति तत्त्वं जगति तदितरे सन्ततं ते महात्मन्
द्वेषं चैवोपहासं विदधति गणनां ते न यान्तु त्वदीयाम् ।
मुक्तस्तान् रक्ष मायामयघनतमसो लङ्घयन् द्वन्द्वजातं
प्रोच्चैर् ॐतत्सदोमित्यभयमिह यतिन् गर्ज जीमूतघोरम् ।

[13] Thus, day by day, till Karma's powers spent
Release the soul for ever. No more is birth,
Nor I, nor thou, nor God, nor man. The "I"
Has All become, the All is "I" and Bliss.
Know thou art That, Sannyasin bold! Say—
"Om Tat Sat, Om!"

१३ एवं मुक्तः स आत्मा चिरमनुदिवसं कर्मभोगक्षयेण
न त्वं नाहं न चात्र परमिह जननं नो नरो वेश्वरो वा ।
सर्वो ह्यात्मा स सर्वः परमसुखमयो यत्सुखं विद्धि तत् त्वं
प्रोच्चैर् ॐ तत्सदोमित्यभयमिह यतिन् गर्ज जीमूतधीरम् ॥

७-८-१८९५ दिने स्वामिनः न्यूयॉर्कं न्यवर्तन्त, ततश्च कुमारी हेन्रीटा मुल्लर इत्यस्याः अनुयायिन्याः निमन्त्रणं स्वीकृत्य ते आङ्ग्लभूम्यै प्रतस्थिरे।

### आङ्ग्लभूमौ

ऑगस्ट मासस्य उत्तरार्धे स्वामिनः पॅरिस-नगरीं प्राप्नुवन् । तत्र कानिचित् दिनानि तैः विश्रान्तम् । सग्रहालयाः, प्रार्थनास्थानानि, कलागाराणि इत्यादीनि प्रेक्षणीयानि स्थानानि दृष्टानि । स्व-स्वभावम् अनुसृत्य परिप्रश्नावलोकनाभ्यां तत्रत्यं जीवनम् अभ्यस्य ते आङ्ग्लभूमिं गन्तुं पॅरिस व्यजहुः"।

---

२०. प्रस्थानात् प्राक् ९ सेप्टेम्बर दिने मद्रास-स्थितेभ्यः शिष्येभ्यः स्वामिभिः एकं पत्रं प्रेषितम् । आत्मगतं दुष्टं प्रचारम् उद्दिश्य प्रसङ्गेन तैर् लिखितानि कानिचित् वाक्यानि राष्ट्राभिमानिनामपि तेषां राष्ट्रवादातीतत्वं दर्शयन्ति । ते लिखन्ति—'I belong

मादृशस्य धर्मप्रसाराय आगतस्य, जितस्य भारतीयस्य स्वागतं जेतारः आङ्ग्ला यथाविधि विदध्युः इति विस्मयं विस्मयं उत्प्रेक्षमाणा स्वामिनः आङ्ग्लभूमि प्रापुः। तत्र श्री ई टी स्टर्डी-प्रमृतिभिः तेषां भव्यं तेषां निवास-व्यवस्था प्रीत्या पर्यायेण स्वे स्वे गृहे कृता। स्वामिभिः श्रेयस्कर-अत्पारम्भ आश्रितः। ते प्रभाते प्रेक्षणीयानि स्थानानि अपश्यन्, सायं च सीमितसंख्याना जनाना पुरतः व्याख्यानानि ददुः। ह्विम्बल्डन-गन्धस्तु क्वचिच्चिरं गूढम् तिष्ठेत्? वेगेन प्रसरत्-कीर्तिं 'हिन्दु-योगिनम्' इमं द्रष्टुं पाठार्थं श्रोतुं लेडी इसाबेल मार्गसोन प्रभृतयः महाकुलीना स्त्रीपुरुषा आगच्छन्। अन्ते स्वामिना मित्रमण्डल्या जनतालाभार्थं तेषां सर्वजनप्रवेशः व्याख्यानं निर्धारितम्।

पिकॅडिली विभागे प्रिन्सेस् हॉल इत्यस्मिन् सभागृहे २२ ऑक्टोबर दिने 'आत्मज्ञानम्' इति विषयम् अधिकृत्य स्वामिना व्याख्यानम् अभवत्। अनल्पैभिः श्रवणसुभगं शब्दैः (a pleasing voice free from any kind of hesitation) प्रवृत्तेऽस्मिन् व्याख्याने स्वामिनः पाश्चात्यानां भौतिक-संस्कृतिम् अनिन्दन्, ख्रिस्तस्य (बुद्धस्य च) उपदेशं प्राशंसन् च। राम-मोहनरायाणाम् अनन्तरम्, केशवचन्द्र-सेनापवादम्, एतादृशी interesting Indian figure आङ्ग्लमञ्चे प्रथममेव दृष्टा इति 'दि स्टॅण्डर्ड' लिखति। 'दि वेस्टमिन्स्टर गॅझेट्' इति वृत्तपत्रस्य प्रतिनिधिः स्वामिनं द्रष्टुम् आगतः। नाहमत्र धर्मविशेषस्य सम्प्रदायविशेषस्य वा प्रचारार्थम् आगतः, किं तु सर्वेण स्व स्व-परिस्थित्यनुसारेण विनियोगक्षमस्य वेदान्तरूपस्य विश्वधर्मस्य इति स्वामिनः तम् अवोचन्। सभाषणोत्तरं 'अद्यावत् दृष्टाना स्वयभू-तमाना पुरुषाणाम् अन्यतमपुरुषम्' ( one of the most

(१६१ पृष्ठतः)
as much to the world as to India no humbug about that What country has any special claim on me ? Am I any nation s slave ?' तेषाम् एतान्यपि वाक्यानि पठनार्हाणि—
' I 'see' a greater Power than man, or God or devil, at my back I require nobody s help I have spent all my life helping others

original of men) आमन्त्र्य वृत्तपत्रप्रतिनिधि निरगच्छत्। 'दि लण्डन डेली क्रॉनिकल' तेषा मुखे गौतमबुद्धस्य मुखेन साधर्म्यम् उपलेभे। एतद्भाषणोत्तरं स्वामिनाम् आङ्ग्लभूमौ निवास एकमासात्मक एव आसीत्। तथापि एतेन अल्पेनापि कालेन अनेके आङ्ग्लजना स्वामिभि प्रभाविता अभवन्, येषु प्रधाना, अवश्यनिर्देश्या च अस्ति

कुमारी मार्गरिट नोबल

या उत्तरत्र भगिनी निवेदिता इति नाम्ना विख्याता अभवत्। शिक्षणज्ञा इयं विदुषी शिक्षणविषयकेषु विचारेषु आस्थावती आसीत्। विद्यालयस्य प्राचार्या आसीत्। स्वामिना धार्मिक-विचाराणाम् अभिनवता तथा च असकुचितता, आध्यात्मिक विचाराणा प्रत्यग्रता, तेषा सामर्थ्यं तथा च उदात्तत्वम् इत्येतौ प्रति धृतम् आवाहन इत्येतत् ता जहार। सा स्वामिना प्रवचनानि उपस्थातुम् आरेभे। 'The Master As I Saw Him' इत्याख्ये ग्रन्थे तया निज स्वामिना प्रथमदर्शन सुष्ठु वर्णितमस्ति। सभाषणावसरे मध्ये मध्ये स्वामिभि क्रियमाण 'शिव! शिव!' इति नामोच्चारण ताम आचकर्ष। ध्यानाभ्यासरताना मुख दृश्यमान सौम्यत्व-प्रागल्भ्ययो एकत्रस्थ्य भाव सा स्वामिमुख अपश्यत, य राफलेन बाल-ख्रिस्तस्य मुखमण्डले चित्रितोऽस्ति। किं च स्वामिभि दिव्यस्वनेन पठिता ते श्लोका ? ते तावत अविस्मरणीया एव आसन्[२१]। स्वामिना सर्व एव

२१ a curious habit of saying now and again 'Siva! Siva!' and wearing that look of mingled gentleness and loftiness, that one sees on the faces of those who live much in meditation, that look, perhaps, that Raphael has painted for us, on the brow of the Sistine Child

"That afternoon is now ten years ago, and fragments only of the talk come back to me But never to be forgotten are the Sanskrit verses that he chanted for us in those wonderful Eastern tones, at once so reminiscent of and yet so different from the Gregorian music of our own churches"

विचारा तया सपदि स्वीकृता इति न। तया ते स्वबुद्धिनिकषे घृष्ट्वैव अङ्गीकृता (यथा स्वयं स्वामिभि श्रीरामकृष्ण-विषये कृतमासीत् )। अव्यतीते मासे एव स्वामिन तस्या 'गुरुदेव'त्वम् अगच्छन्।

आङ्ग्लभूम्याम् अधिगतेन अनुभवेन स्वामिन सतुष्टा अभवन्। यत्सत्य ते केवलं प्रयोगबुद्ध्यैव, 'भूमि स्यात्क्षमा न वा इति द्रष्टुमेव' ( only to feel the ground ) आगता आसन्। यत् कार्यं जातम्, तत् तेषा मनोरथानामपि अभूमि आसीत्"। काममं आङ्ग्ला न तथा बुद्बुदायमानोत्साहा आसन, यथा अमेरिकीया । किं तु तेषा स्वीकार-मन्दता दृढग्रहस्य द्योतिका आसीत्।

अमेरिकात पत्रमनु पत्रम् आगत्य स्वामिन तत्र न्यमन्त्रयत्। आङ्ग्लभूमौ उप्तस्य बीजस्य अङ्कुरोद्गदार्थं कश्चित् अवकाशोऽपि आवश्यक आसीत्। अत आङ्ग्लभूमिस्थान् अनुयायिन नित्यं समिलितुम्, भगवद्गीतादिकं च अध्येतुम् उपदिश्य, आङ्ग्लभूमीया निजा 'विश्रान्तिम्' समाप्य स्वामिन नो॰हेम्बरस्य उत्तरार्धे पुनरपि अमेरिका गन्तु प्रतस्थिरे।

* * *

२२ नो॰हेम्बरस्य मध्यावसरे मद्रास-स्थिताय कस्मैचित् शिष्याय प्रहिते पत्र ते लिखन्ति–' In England my work is really splendid ' अस्मिन् एव पत्रे सततश्रमजनिता क्षीणता निवेद्य ते 'दीर्घ-विश्रमार्थं भारत गन्तुम् इच्छामि' इति इच्छा प्रकटयन्ति। कस्मिश्चित् विवेकानन्दे एव उपपद्यमाना दर्पोक्ति अपि अत्र दृश्यते। स्वामिन स्वानुष्ठित-श्रमाणाम् अतिगुरुत्वविषयै लिखन्ति– ' Any other Hindu would have died if he had to work as hard as I have to do '

पश्चिमार्यं सदेश ' तथा च 'विश्वधर्मादर्श.' इति विषयौ अधिकृत्य अभयन्। तदा स्वामिन यथा अनुभयन्त तथा न कदापि अन्यदा। तेषां स्थिति 'निमपि' अभौमम् आसीत्। येन्येन शरीरबन्धनानि छिन्नानि इव आसन्। तदानी मया पूर्वमुक्तमेव कथा। न स्वामिनः अस्मिन् जगति दीर्घस्थायिन आसन्। मया अर्धनिमीलिताम् आश्रयितुं प्रयतितम्। न तु अवबुद्धतत्त्वेन मनसा स्वाम्य रूपम्।'

ततोऽनन्तर हार्वर्ड विद्यापीठे तत्त्वज्ञान-छात्राणां पुरत स्वामिना यद् व्याख्यानम् अभूत, तन् बहु पप्रथे। २५ मार्च १८९६ दिने 'वेदान्त-तत्त्वज्ञानम्' इति विषयम् अधिकृत्य जात व्याख्यान सर्वेषामेव हृदयगर्भागारे अन्तर लेभे। स्वामिना वैदुष्येण प्रभावितचित्तै विद्या-पीठाधिकारिभि स्वामिभ्य विद्यापीठे पौरस्त्य-तत्त्वज्ञानाध्यासनम् (Chair of Eastern Philosophy) दित्सितम्*। अस्मिन् व्याख्याने 'सर्वोऽपि पुरुष मोहनिद्रितोऽस्ति। द्वैतग्रहम् मोहनिद्रा। ईश्वर-वेद-पर्यन्त सर्वमेव द्वैतगन्ध सत्यस्यन् केवलम् अद्वैतवादी एव मोहनिद्राम् अत्येति। मोह-निद्रात प्रबोधनपर भारतीय योगरूप मनोविज्ञान पाश्चात्यात् मनो-विज्ञानात् शतगुण श्रेष्ठमस्ति,' इति स्वामिन प्रत्यपादयन्। योगसिद्धिविषये पृष्टा 'सर्वदा सर्वत्र परमात्मदर्शन नाम परमा योगसिद्धि,' इति स्वामिन अवोचन्, पवहारीबाबाना सर्पदशप्रसङ्ग च निदर्शनत्वेन उदाजहु[२]। 'किं नाम संस्कृतिविषये वेदान्तमतम्?' इति प्राध्यापके पृष्टे 'अन्त-र्गतस्य दिव्यत्वस्य आविष्करणम्,' इत्युक्त्वा यत्र परमोच्चा आदर्शा व्यवहारविषयताम् आपाद्यन्ते स एव सुसंस्कृततमो देश इति स्वामिन

* कोलम्बिया-विद्यापीठाधिकारिभि संस्कृताध्यापनमपि स्वामिभ्य समर्पयितुम् इच्छा प्रकटीकृता। सन्यासित्वात् तु उभयोरपि स्वीकार स्वामिना न शक्य आसीत्।

२ दृश्यता पूर्वत्र पृ ९४। एव भाति, यत् स्वामिन अस्मिन् व्याख्यानप्रसङ्गे बाबान् विशेषनाम अगृहीत्वा सामान्येन 'योगि'-शब्देन निर्दिदिशु।

अवोचन्[१]। विश्वधर्मकल्पनया गृहीतमनसः स्वामिनः बोस्टने इममेव विषयम् अधिकृत्य व्याख्यानं ददुः।

'वेदान्त सोसायटी' स्थापना

एतावता कालेन स्वामिना 'राजयोग' 'भक्तियोग' तथा च 'कर्मयोग' इत्येते ग्रन्थाः प्रकाशिता आसन्। अमेरिकीयभूमौ वेदान्त-बीजम् उप्तम् आसीत्। तदिदं कार्यं संघटितं कर्तुकामैः स्वामिभि न्यूयॉर्कीय-व्याख्यानसमाप्तौ 'वेदान्त-सोसायटी' इत्याख्या संस्था निर्मिता। सा धर्मभेदान् अतीता आसीत्। वेदान्तस्य उपदेशः आचारश्च तस्या उद्दिष्टम् आसीत्। तत्तद्-धर्मानुयायिभिः स्व-स्व धर्माचरणे वेदान्ततत्त्वानि विनियोक्तव्यानि इति तस्या आग्रहः आसीत्। सहिष्णुता सारग्रहणं च तस्याः घोषवाक्यम् आसीत्। 'वेदान्तिन' इति लब्धनामधेया तस्याः सदस्या नियतकाले संमिलन्ति स्म। वेदान्त-सोसायटी-स्थापने स्वामिनाम् अन्यो-ऽपि एक उद्देश आसीत्, स नाम

संस्कृतिसंगम।

पौरस्त्यानां तथा च पाश्चात्यानाम् इत्युभयेषां विचाराणाम् आदानं च विनिमयो भवतु आदानप्रदानं भवतु इति स्वामिन ऐच्छन्। अध्यापकविनिमयोऽपि तैः चिन्तित आसीत्। भारतात् केचित् गुरुबन्धुभि अमेरिकाम् आगत्य धर्मं उपदेष्टव्यं, अमेरिकीयैश्च शिष्यैः भारतं गत्वा विज्ञान-अर्थशास्त्र-समाजशास्त्रादयो विषया अध्यापनीया इति स्वामिन समकल्पयन्। एतदर्थं पूर्वमेव तै आङ्ग्लभूमितः पत्रं विलिख्य शारदानन्द-स्वामिन निमन्त्रिता आसन्। समपि काल पौरस्त्य-पाश्चात्ययोर् जगतोर् मिलनं स्वामिना चिन्तनस्य विषय आसीत्। वेदान्त-सोसायटी एतन्-मिलनस्थानं भविष्यति इति स्वामिन आशासत।

---

१ हार्वर्ड-विद्यापीठगतम् इमं वृत्तान्तं 'one of the most remarkable incidents of his whole American career' इति स्वामिना चरितकारा 'पौरस्त्यपाश्चात्या शिष्या' वर्णयन्ति (पृ ४७३)।

एतान् दिवसान् अन्योऽपि एको विषय स्वामिना मन व्यापारयामास। स नाम हिन्दुधर्मस्य पुनर्व्यवस्थापनम्। द्वैताद्वैत विशिष्टाद्वैतानुसारेण उपनिषदा वर्गीकरण कर्तव्यम्, जीवात्म-परमात्म विषयकाणि मोक्षविषयकाणि च तत्तद्-वेदान्तसप्रदायमतानि स्पष्टीकर्तव्यानि, वेदान्तविज्ञानयो समन्वय कर्तव्य, पुनर्घटितश्च अय हिन्दुधर्म तथा सरण्या ग्रन्थ लिखित्वा उपस्थापनीय यथा स पाश्चात्यजगत स्वीकार्यो भवेत्, इत्येतेन विचारेण स्वामिन गृहीतमनस आसन। अस्मिन् ग्रन्थे ते अमूर्तम् अद्वैत सजीव कर्तुम्, जटिलाभ्य पुराणकथाभ्य मूर्तानि नीतितत्त्वानि स्पष्टीकर्तुम्, चित्तभ्रमणकारिण च योग शास्त्रशुद्धे मनोविज्ञाने परिणमयितुम् अभिप्रायन्'।—अन्योऽपि एव स्वामिना सकल्प आसीत्,—एक 'विश्वमन्दिरम्' निर्मातुम्। तत्र सर्वेषा धर्माणाम् अनुयायिन सम्मिलेयु, ॐकारस्पम् एकाक्षर ब्रह्म च ते उपासीरन्, इति स्वामिन ऐच्छन्।

एतावता कालेन ते आङ्गलभूमित अनेकानि निमन्त्रणपत्राणि प्राप्तानि आसन्। अत अमेरिकाया स्वकार्यस्य अग्रत प्रचालनक्षमाणां कृपानन्द-प्रभृतीना शिष्याणा प्रशिक्षणे स्वामिन रता अभवन्। कुमार्यो वाल्डो महोदयायाम् आध्यात्मिकशक्तिं मत्वार्थं तं मा योगाध्यापने अधिष्ठिता। श्री फॉन्सिस लेगेट-महोदय वेदान्त-सोसायट्या अध्यक्षपदे स्थापित। अन्ये च शिष्या तस्मिन् तस्मिन् पदे स्थापिता।

स्वामिनाम् अनेकानि व्याख्यानानि उपरि निर्दिष्टानि सन्ति। तेषाम् अवशिष्टनिर्देश व्याख्यानद्वयम् आङ्गलभूमि प्रयाणात् प्राक् निर्दिश्यते।

४ एतस्मिन् पत्रे स्वामिन लिखन्ति—' The abstract Advaita must become living – poetic – in everyday life, out of *hopelessly intricate* Mythology must come concrete moral forms, and out of bewildering Yogism must come the most scientific and practical psychology—and all this must be put into a form so that a child may grasp it. That is my life's work. The Lord only knows how far I shall succeed. To work we have the right, not to the fruits thereof."

'अनर्हाः एते रामकृष्ण-चरितश्रवणस्य!'

एकदा बोस्टन-नगरे स्वामिना व्याख्यानं निर्णीतम्। विषय आसीत् 'मम गुरुदेव'। स्वामिनः सभास्थानम् आगताः। व्याख्यानार्थम् उत्थिताः। ते. श्रोतृवृन्दे दृष्टिः विसृष्टा। तत्क्षण स्वामिना मनसि विचारः प्रविष्टः, 'कामोपभोगपरमा अर्थपरायणा भोगैश्वर्यप्रसक्ताश्च एते सर्वे जनाः। वैराग्यस्य, शुचित्वस्य, साधुत्वस्य, गन्धमपि एते न जानन्ति। अनर्हा एते रामकृष्ण-चरित-श्रवणस्य।' एवं चिन्तयन्तस्ते रामकृष्ण-चरितस्य निवेदनस्थाने पाश्चात्त्यानाम् आसुरी सम्पत्ति कठोरतया वाक्ताडयितुं प्रवृत्ता। शतशः श्रोतारः उत्थाय क्रोधाविष्टाः निर्जग्मुः। स्वामिनस्तु अविचलितेन चेतसा भाषमाणास् तस्थु। उत्तरेद्यु कैश्चित् वृत्तपत्रैः अनौचित्यनिमित्तं स्वामिनः निन्दिताः, कैश्चित्तु स्पष्टोक्त्यर्थं प्रशंसिता। स्वामिनस्तु पश्चात्तापदग्धाः 'अहो निन्दया परेषां चेतांसि व्यथयतः मम अनर्हत्वं रामकृष्ण-शिष्यत्वस्य,' इति कृत्वा भृशम् अरोदिषु।

भुवनेश्वरी-देव्यै अमेरिकीय-मातॄणां कृतज्ञतापत्रम्

श्रीमत्या ओल्-बुल महोदयाया प्रार्थनाम् अङ्गीकृत्य बोस्टन (केम्ब्रिज इत्याख्ये उपनगरे) स्वामिनः तत्रत्याना स्त्रीणा पुरतः 'भारतीयस्त्रीणाम् आदर्शः' इति विषयम् अधिकृत्य व्याख्यानम् अददुः। अस्मिन् व्याख्याने स्वामिभिः अत्यन्तपरित्यक्तस्वार्थस्य, कुटुम्बगुणाय समर्पितजीवितस्य, पतिपुत्रादीनां सुखे अनुभूतसुखस्य भारतीय-स्त्रीजनस्य, विशेषतः मातृजनस्य महिमा अभिमतोत्कटैः शब्दैः गीतः। स्वीयां निःस्वार्थां शुद्धचरिता च मातरं (भुवनेश्वरी-देवीम्) कृतज्ञतापूर्वकं निर्दिश्य मम यत्किमपि कर्तृत्वं तत् तत्प्रदत्त-प्रेरणा-निमित्तकम् इति ते अवदन्। स्वामिना भाषणेन उपस्थितस्य मातृजनस्य हृदि दृढं पदं कृतम्। ख्रिस्तमासः (१८९४) प्रत्यासन्न आसीत्। तस्मिन् अवसरे स्वामिना अमेरिकीय-नारीभिः कृतज्ञता प्रकटयितुम्, एतादृशस्य सुपुत्रस्य मातरं च अभिवादयितु ताभिः मातृभिः एकं पत्रं, मेरी-मातुः अङ्कस्थितस्य बाल-ख्रिस्तस्य चित्रेण सनाथम्, भुवनेश्वरी-देव्यै प्रेषितम्। अथ तस्य सारांशः–

ख्रिस्तमास-सप्ताहोऽयम्। मेरी-प्रदत्तस्य पुत्रोपायनस्य कृते उत्सवसमयोऽयम् अस्माकम्। अतः उचित एव अयम् अवसरः पुण्यस्मरणस्य

तत्रभवत्याः सुपुत्रः एतान् दिवसान् अस्मासु वर्तते। ताः वयं तत्रभवत्या. शुभाशसनं कुर्मः। पूर्वेद्युः सभाया भाषमाणेन भवदीयेन सुपुत्रेण अत्र कृतः सर्वोऽपि सेवाराशि. तत्रभवत्या. चरणकमलयोः समर्पितः। तस्य मातृभूतायाः तत्रभवत्याः इयं पूजा अस्माकं सर्वासामेव स्फूर्तिदायिनी, औन्नत्यकारिणी च स्यात्। ईदृशस्य सुपुत्रस्य जननसंवर्धनाभ्यां तत्रभवत्या यत् महत् कार्यं कृतम्, तदर्थं अस्माकं कृतज्ञतां स्वीकर्तुं प्रसीदतु तत्रभवती। एकत्व-भ्रातृत्व-रूपं पारमेश्वर रिक्थं प्रत्यासीदत्तो जगत. सा स्मरणचिह्नं भवतु।

१५ एप्रिल् दिने स्वामिन. अमेरिकानिवास समाप्य पुनरपि आङ्ग्लभूमिं प्रस्थिता.[५]।

लण्डनागताः स्वामिन कुमारी मुल्लर तथा च श्री स्टर्डी इत्येतयो. अतिथीभूय अतिष्ठन्। तत्र ते अनपेक्षितागमनान् शारदानन्द-स्वामिनः दृष्ट्वा प्रमुदिताः अभवन्। उभाभ्याम् अन्योन्यवृत्तान्त. पृष्टः। स्व. स्वो वृत्तान्त. कथित.। अनेकवर्षोत्तर गुरुबन्धूनाम् अन्यतम स्वामिभि. दृष्ट.। तस्य मुखात् वराहनगर-मठगत अन्यश्च वृत्तान्तः श्रुतः। शारदानन्दः चकितचकित दृष्टोत्साहाः स्वामिन पुनरपि लण्डनं निजं कार्यं प्रारेभिरे।

मे-मासस्य (१८९६) प्रारम्भावसरे स्वामिभि प्राधान्येन ज्ञानयोगम् अधिकृत्य वर्गपाठा प्रारब्धा.। मासान्ते च ते रविवासरीयाणि सार्वजनीनानि व्याख्यानानि प्रारभन्त। 'धर्मस्य आवश्यकता,' 'विश्वधर्म', (स्वामिना ह्यो विषय.), 'पुरुष., सत्य. आभासिकश्च' इत्यादयो विषयाः ते. तत्र प्रपञ्चिता.। स्वामिन भक्तिराजयोगौ अपि व्याचख्युः। श्रीमती ॲनी बेझण्ट महोदयाया. प्रार्थनानुसारेण तस्या. गृहे भक्तिम्

५ विवेकानन्द-चरितकारा. 'पौरस्त्यपाश्चात्याः शिष्याः' विवेकानन्दानाम् अमेरिका-पर्व एवम् उपसंहरन्ति– "Swami Vivekananda lives in the memory of America as the Man with a Message for the West, 'One who walked with the God,'" (p. 502) "

*न च इय स्मृतिः कालेन जीर्णा। १९६३ ख्रिस्ताब्दे स्वामिनां

अधिकृत्य, अन्येषामपि सज्जनाना आलापकोष्ठेषु तस्मिस् तस्मिन् विषये स्वामिन प्रवचनानि अकार्षु ।

अन्यतमे गोष्ठीसमाजे स्वामिभि प्रदत्तस्य व्याख्यानस्य वृत्तनिवेदन श्री एरिक हॅमण्ड इत्येतेन कृतमस्ति। तस्य अय सार उद्बोधक उपलभ्यते—

" एकस्मिन् व्याख्यानान्ते कश्चित् पलितशिरा तत्त्ववेत्ता उत्थाय ' स्वामिन् । साधु प्रोक्त भवता । अनुगृहीता स्मो वयम् । किं तु न किमपि अपूर्वम् उक्त भवता,' इत्यवदत । तत्क्षण प्रवक्तु मासल्स्वना प्रत्युत्तरशब्दा न्यनदन् ' महाशय । अह युष्मान् सत्य प्रोक्तवान् । सत्य च सनातनमस्ति, यथा गिरय , यथा मनुष्यजाति , यथा सृष्टि , यथा वा ईश्वर । यदि मद्वचनेन तस्य विजिज्ञासा भवन्मनसि समुत्थिता स्यात किं न तदपि पर्याप्तम् ? '

" ' यथा मया तत् सत्यम् अधिगतम तत् शृणु ' इत्युक्त्वा स्वामिभि श्रीरामकृष्णचरित निवेदितम् । ततश्च स्वामिन अवदन, ' मया सत्यम् अधिगतम्, यत तत् मम हृदय पूर्वमेव आसीत । शृणु । इद मौक्तिक तव हृदयसपुट पूर्वमेव वर्तते। यत्किंचिदस्ति, तत् एकमेव । शृणु । तत् त्वमसि । '

---

(१७२ पृष्ठत )
जन्म शताब्दी महोत्सव भारते इव अमेरिकायामपि समानित अभूत । तदानीम् अनके विवेकानन्द-स्वामिना कृतज्ञतापूर्वक स्मरण कृतम् । ' In Swami Vivekananda the Am ricans had for the first time a cha ice to see a walking spirit ' इति प्रा शलिङ्ग महोदया (पोर्टलॅण्ड) अब्रुवन् । ' Vivekananda re-asserted with clarity the greatness of India and the fact that she had a gift to give ' इति कोलम्बिया विद्यापीठे इतिहास-शाखाप्रमुखं उक्तम् । श्री यू थाँट् महोदया अपि तदानी ' We are doing honour to one of the greatest men of our time ' इति न्यूयॉर्कं उक्तवन्त । (प्रा शिवाजीराव भोसले, ' कन्या-कुमारी ते शिकागो ' सह्याद्रि, दीपावलि विशषाङ्क, १९७० )

" आत्मन: सर्वस्व श्रीरामकृष्णमूलकम् इति प्रतिपादयन्त स्वामिन अवोचन्, ' नात्र एकमपि मम स्वोपज्ञम् अक्षरम्। नैकोऽपि स्वोपज्ञ विचार-परमाणु । यं मम प्रियतमे भारते स्थित्वा महत्तमा समस्या समाधाय तत् समाधान सर्वजगत्प्रकाश कृतम्, तेभ्य रामकृष्णेभ्य इद सर्वं प्रवर्तते। आधुनिकया धर्मप्रवृत्ते ते एव मूलकारणम्। यदि अह तान् एकांशेनापि दर्शयितु प्रभवेयम्, तर्हि तावताऽपि आत्मान कृतार्थं मन्येय '। "

स्वयम् अनेकैया महता महतामपि गुरुत्वपद गताना स्वामिनाम् एतद्वचनम् अन्तरेण स्थान एव विवेकानन्द चरितकारा 'पौरस्त्यपाश्चात्या' शिष्या ' स्वामिन प्रशस्य ' It is only a true disciple that can be a true master ' इति अभिप्रयन्ति।

मॅक्स-म्यूलर—' वेदान्तिना वेदान्ती '

मे मासीय एक महत्त्वपूर्ण प्रसङ्गो नामप्रा मॅक्स म्यूलर इत्येतेन ऑक्सफोर्ड-विद्यापीठस्थेन त्रिखण्डविख्यातेन प्राच्यविद्यापण्डितेन सह जात स्वामिना मेलनम्। प्राध्यापक महोदयाना निमन्त्रण मानयित्वा तान् द्रष्टु स्वामिन श्री स्टर्डी-महोदयेन सह २८ मे दिने तेषा निवास जग्मु। ६ जून दिने ब्रह्मवादिपत्राय प्रेषिते पत्र अथ वृत्तान्त स्वामिभि स्वयमेव वर्णितोऽस्ति। तस्य सार अत्र उद्ध्रियते—

" अहो असामान्यता मॅक्स-म्यूलर महोदयानाम्! पूर्वेद्यु तान् द्रष्टुम् —यत्सत्यम् अभिवन्दितुम्—अह गत। ते हि श्रीरामकृष्णाना भक्ता सन्ति। अत तद्दर्शनार्थं गमन नाम मम तीर्थयात्रैव काचित् आसीत्।

" दिवगताना केशवचन्द्र सेनाना मतपरिवर्तनात् प्रभृति तस्य कारण ज्ञात्वा प्राध्यापक महोदया श्रीरामकृष्णाना चरितस्य उपदेशस्य च प्रशसका सवृत्ता सन्ति। ' सप्रति सहस्रशो जना श्रीरामकृष्णान् पूजयन्ति, ' इति मयोक्ते 'नानन्तरेण निपतेत क्व जनप्रणाम ? ' इति ते उदैरयन्। तै सचर्य आवाभ्या महाविद्यालया, बोड्लेयन-ग्रन्थालय इत्यादिक सर्वं प्रदर्शितम्, भोजनेन आतिथ्य कृतम्, साय च स्थानक यावत् ते आवाम् अन्वगच्छन्। मया एतद्विषयक किमपि

उक्ते, 'न खलु रामकृष्ण-परमहंसशिष्य प्रतिदिनं द्रष्टुं लभ्यते,' इति ते अवोचन् ।

"सोऽयम् अभिगमो नाम मत्कृते कश्चित् साक्षात्कार एव आसीत्। सा रुचिरा स्वल्पा कुटी, स रमणीय उद्यानपरिसर, स प्रशान्त-कारुणिकमुख रजतशिराश्च ऋषि, सा ऋषिपत्नी, ते वृक्षा, तानि पुष्पाणि, तत् स्वच्छम् आकाशम्—सर्वमिदं माम् उत्क्षिप्य ब्रह्मर्षि-राजर्षीणाम्, वानप्रस्थानाम्, वसिष्ठ-अरुन्धतीप्रभृतीना च मुनि-तत्पत्नीना प्राचीन भारतम् अनयत् इव ।

"योऽयं मया दृष्ट, न स भाषाशास्त्रज्ञ आसीत्, न वा पण्डित । किं तु प्रत्यहं ब्रह्मणा सह ऐकात्म्यस्य कृतानुभव कश्चित् महान् आत्मा आसीत् ।

"अहो तेषा भारते अपार प्रेमा । यदि तस्य शताशोऽपि मयि स्यात् ! भारतीय ज्ञानविज्ञान तेषा रक्तगतम् अस्ति । मॅक्स-म्यूलरो नाम वेदान्तिना वेदान्ती अस्ति ।"

तदानीं प्राध्यापक-महोदयै रामकृष्णात् अन्तरेण 'A real Mahatman' इतिसंज्ञको लेख 'Nineteenth Century' इत्याख्ये नियत-कालिके प्रकाशनार्थं लिखित आसीत् । पश्चात् स्वामिना साहाय्येन अधिका सामग्री सपाद्य तै 'The Life and Sayings of Shri Ramakrishna' इति-संज्ञक श्रद्धाचिभिरस्यो एकरूश्रयो ग्रन्थ विलिखित ।

'हे साके ! पूरय चषकम् !'

६ जुलै दिने स्वामिभि श्री लेगट महोदयेभ्य एक पत्र लिखितम् अस्ति । तत्र अनुष्ठितकार्यस्य सक्षिप्त निवेदनमस्ति । 'भवतु नाम इदम् आङ्गल-साम्राज्य कियदपि दोषपूर्णम्, तथापि नास्ति तत्सदृशम् अन्यत् प्रचारयन्त्र नाम' इत्युक्त्वा तद्द्वारा स्वमतप्रसारस्य सकल्प ते अस्मिन् पत्रे प्रकटयन्ति । लेगट-दम्पतीभ्या प्रदर्शितस्नेहकृते साधु कृतज्ञता तै प्रकटीकृताऽस्ति । अस्य पत्रस्य विशिष्य-निर्देशनीयस्तु भागो नाम तत्र स्फुटीभूता स्वामिना तत्कालीना सूफी-साधुभ्यो नातिभिन्ना प्रेममयी वृत्ति । भगवान् तेषा प्रियतम आसीत् । तेषा हृदये सर्वभूतानि प्रति न केवल करुणासागर, प्रेमसागर एव उच्छलित आसीत् । ते लिखन्ति—

"इदानीम् एतत्सत्रपनम् अध्यापन ममाप्तमस्ति। सम्प्रति अहम् अधीये। तन्निशाम्, विशेषतश्च सानुक्रोशताम्। सम्प्रति अह सर्वत्र, गर्वोद्धते ॲङ्ग्लो इण्डियनेऽपि, दिव्यत्वदर्शनप्रवण सवृत्तोऽस्मि। मन्ये शनै शनै अह ताम् अवस्था प्रत्यासीदामि, यदा साक्षात् सैतालमपि कामयिष्ये, स चेत् विद्येत। विंशतिवर्षीयोऽह निरनुक्रोशतम, अतिभूमिगामी च आसम्। नाट्यगृह-समीपवर्तिना पादपथेन गन्तुमपि नासम् अह सिद्ध। इदानी त्रयस्त्रिंशद्वर्षीयोऽह वेश्याभिर् अध्युषिते गृहेऽपि अनुच्चारितदोषाक्षर वसेयम्। किमयम् अध:पात, उत वैश्विकप्रेममार्गो—ईश्वरगामी इति यावत्—विकास[६]?

सर्वमपि कामयितव्यम्, आलिङ्गयितव्यम्, सर्वस्य शिवम् आशासनीयम् इत्यन्तरात्मा वाञ्छति। को नाम अहम् अस्मि? तस्य प्रेमसागरस्य किंचित् साधनम्, किंचित् उपकरणम्। स मे क्रीडासहचर, अह च तस्य। नास्ति विश्वप्रपञ्चे काचित् सुसगति, काचित् नियमबद्धता वा। कम् स नियच्छेत्? जगत्यस्मिन् अस्मिन् रङ्गमञ्चे लीलानाटकसूत्रधार स अश्रूणि पातयति, हास्यानि च विकासयति[७]। मया इद तावत् अवगतम् अस्ति—सर्वम् अनीत्य,

---

६ 'I think I am slowly approaching to that state when I would be able to love the very Devil himself, if there were any At twenty I was the most unsympathetic, uncompromising fanatic, I would not walk on the footpath on the theatre-side of the streets in Calcutta At thirty-three I can live in the same house with prostitutes and never would think of saying a word of reproach to them Is it degenerate? Or is it that I am broadening out into that Universal Love which is the Lord Himself?'

७ 'He is my playful darling, I am His playfellow There is neither rhyme nor reason in the Universe! What reason binds Him? He the playful one is playing these tears and laughters over all parts of the play'

पाण्डित्यम् अतीत्य, वाचम् अतीत्य वर्तते संवेदनम् 'प्रेम,' 'प्रियतम'। हे साके ! पूरय चषकम् ! भवेम उन्मत्ताः'।"

तदानीम् आङ्ग्लभूमौ अनेके भारतीया छात्रा आसन्। स्वामिनं तैः सह संपृक्ता अभवन्। १८ जूले दिने एकं भारतीयानां सामाजिकं संमेलनं तत्र संपन्नम्, यत्र स्वामिनः अध्यक्षा आसन्। तस्मिन् अवसरे तैः 'हिन्दवः तेषाम् अपेक्षाश्च' इति विषयम् अधिकृत्य भाषितम्। अस्मिन् समये श्री स्टर्डी महोदयाः नारदभक्तिसूत्राणाम् आङ्ग्लभाषया अनुवादे व्यापृता आसन्। स्वामिभिः अनुष्ठित अनुवाद-साहाय्यः अयं ग्रन्थः अचिरमेव प्राकाश्यम् अगमत्। अस्मिन् काले स्वामिना जनसंपर्कः अवर्धत। परिचयाः दृढीभूताः। परिचिताः मित्रत्वं गताः। मित्राः शिष्यत्वं गताः। अस्मिन्नेव काले स्वामिभिः सेव्हियर दंपती अनुयायित्वेन लब्धौ। धार्मिकाभ्याम् एताभ्यां दंपतीभ्यां नैकानि धर्ममतानि अभ्यस्तानि आसन्। किं तु अनासादित परतत्त्वौ तौ असंतुष्टौ आस्ताम्। स्वामिना प्रथममेव भाषणं श्रुत्वा तु 'एष पुरुषः। इदं च तत्त्वज्ञानम्। एतदन्वेषणपराभ्याम् आवाभ्याम् अद्ययावत् जीवितं व्यर्थमेव नीतमासीत्,' इत्युक्त्वा तावुभौ स्वामिनः शरणीचक्रतुः। स्वामिभिश्च तौ अनुगृहीतौ। तयोर्हृदये स्वामिनः प्रति न केवलं गुरुभक्तिः पुत्रवात्सल्यमपि आसीत्।

आल्प्स-दर्शनम्

अनवरतप्रवृत्तेन व्याख्यान वर्गपाठ-प्रवचनादीनां चक्रेण स्वामिनः श्रान्ता अभवन्। ते विश्रामम् एच्छन्। अतः तेषां मित्राणि श्रमविनोदार्थं यूरोपस्य प्रमोदयात्राम् असूसुचन्। स्वामिनः हिमदर्शनोत्सुका आसन्।

८ 'I have learnt a thing or two beyond beyond reason and learning and talking is the feeling the 'Love' the 'Beloved' Aye 'Sake fill up the cup and we will be mad' अत्र विवेकानन्दानां चरित्रकाराः पौरस्त्यपाश्चात्या शिष्या 'अभिप्रयन्ति 'Here one has Swami Vivekananda himself' (p 511)

पार्वतपथानाम् आक्रमणोत्सुका आसन्। तं सानन्द निमन्त्रणम् अङ्गीकृतम्। जुलै मासस्य अन्त्यावसरे मु मुल्लर तथा च सेव्हियर-दम्पती इत्येतैं सह स्वामिन प्रस्थिता । ते पॅरिस-मार्गेण जिनेव्हा गत्वा तत्र त्रीणि दिनानि न्यवसन्। तत्र तैः शिलॉन्-दुर्गादीनि द्रष्टव्यानि दृष्टानि। तत प्रस्थितैः तैः मॉण्ट ब्लॅङ्क पर्वतम् उद्दिश्य मार्गाक्रमण प्रारब्धम्। त पर्वत दृष्ट्वा स्वामिन अहृष्यन्। 'अहो आश्चर्यम्! अत्र तावत् वय हिममध्य एव स्म । हिमालये तु हिम सदादूरम्। एहि। आरोहाम ' इत्युक्त्वा ते गिर्यारोहणम् ऐच्छन्। मार्गदर्शस्तु तं अस्मात् साहसात् निवारिता । हिम-नद्या उत्तरणानन्दस्तु स्वामिभि अनुभूत ।

हिमालयीन-मठसङ्कल्प.

आल्पसदर्शनेन स्वामिना हिमालय स्मृतिमागत । हिमालये एको मठ निर्मातव्य इति तेषाम् अभिलाष आसीत्। स्वकार्यसमाप्तौ तत्र तैं निवर्तितुम्, स्वशिष्याश्च प्रशिक्षयितुम् ऐच्छन्। सोऽयम् अभिलाष तैं आल्पसपर्वतस्य अधित्यकायां स्थितैः यदृच्छया सेव्हियर-दम्पती-समक्षं प्रकटित । स्वामिना सङ्कल्प सिद्धिसमर्थ अभवत्। पश्चात् अल्पेनैव कालेन सेव्हियर दम्पतीभ्यामय अनुष्ठितस्य सर्वप्रकारकस्य साहाय्यस्य हेतो हिमालये "मायावती' आश्रम उत्तस्थौ।

तत 'स्टिल् सेण्ट बर्नार्ड' इत्यास्य स्थान गत्वा तस्मात् कतिपय-योजनदूरे कस्मिंश्चित् स्थाने सर्वे सप्ताहं विश्रामम्। अत्र स्थितैः स्वामिभि कोऽपि आध्यात्मिक प्रसाद अनुभूत। "There seemed to be a great light about him," इति तद्विषये सहचारिभि उक्तमस्ति। अत्र एकदा स्वामिन जीवितसंशयम् आरूढा। किमपि किमपि चिन्तयन्त, पृष्ठतोहीनास् ते एकाकिन सञ्चरन्त आसन। सहसा तेषा हस्ते वर्तमान आरोहकदण्ड (alpenstock) भङ्क्त्वा पुरोवर्तिन्या गर्ताया न्यपतत, भ्रष्टपादाश्च स्वामिन स्वय गर्तापातोन्मुखा आसन्। तथापि स्वामिनाम् अवतारकार्यम् अद्यापि अवशिष्टम् आसीत्। "Certainly it was only a miracle that saved me," इति वृत्तान्तनिवेदनान्ते स्वामिन अवदन्। तदाप्रभृति तेषा सहचरैं न ते एकाकितया चरितुम् अनुमता। प्रतिनि-वर्तमानास् ते एक स्वैरं पूजास्थानम् अपश्यन्। तत्र यथोपलब्धानि गिरि-

पुष्पाणि श्रीमती सेव्हियर-हस्ते प्रदाय 'मम कृतज्ञताया भक्तिभावनायाश्च प्रतीकरूपेण' तानि पुष्पाणि 'कुमारी' चरणयो अर्पयितुं तं सा प्रार्थिता। 'सा (कुमारी मेरी) अपि जगदम्बैव,' ते अवदन्।

प्रा डॉयसन्-मेलनम्

अत्र स्थिते स्वामिभि प्रा पाउल डॉयसन् इत्येषां सकाशात् निमन्त्रणपत्रं प्राप्तम्। प्राध्यापक-महोदया कील विद्यापी० तत्त्वज्ञानम् अध्यापयन्। संस्कृतभाषायाम् अधिकारवन्तस्ते वेदान्ते आस्थावन्त आसन्। तदानीं ते भारतात् अचिरनिवृत्ता आसन्। स्वामिना प्रशासिन यद्व्य तैं पठितम् आसीत्। अयं स्वयंभूविचारवान् दार्शनिक यगोपम् आगतोऽस्ति इति श्रुत्वा तं पत्रं विलिख्य मेलनेच्छा प्रदर्शिता। तत् पत्रं प्राप्य पूर्वनिर्धारितं प्रवासक्रमम् अन्यथाकृत्य स्वामिन प्राध्यापक-महोदयान् द्रष्टुं कीलम् उद्दिश्य सेव्हियर-दम्पतीभ्यां सह प्रस्थिता। मध्येमार्गं पन्थानं किंचित् वक्रीकृत्य ते ल्युसेर्न, रमेर्माट, शाफहउजन, हायडेलबर्ग, कोलोन, बर्लिन इत्यादीनि स्थानानि दृष्टानि। विस्तीर्णमार्गं रमणीयोद्यानं बर्लिननगरं पॅरिसतोऽपि श्रेय स्यात् इति स्वामिन अमन्यन्त। 'अनुचितं प्राध्यापक-महाशयान् प्रतीक्षापरान् स्थापयितुम्' इत्युक्त्वा ड्रेस्डेन-नगरं परिहृत्य स्वामिन साधु कील प्राप्नुवन्।

एको दिवस स्वामिभि प्राध्यापकसन्निधौ नीत। सभाषणप्रसङ्गेन वेदान्तस्य अव्यवहितं फल नाम उच्चतमा शुद्धतमा च नीति (morality) इति प्राध्यापका अवदन्। आध्यात्मिकताया मूल्यानि प्रति पुनर्गामि आन्दोलनं प्रारब्धमस्ति, तच्च भविष्यति काले अत्र विषये भारतं नेतृत्वपदे स्थापयिष्यति इति भाति इत्यपि ते अत्रोचन्। तैं तदानीं क्रियमाणे अनुवादकर्मणि स्वामिभि कुतूहले प्रदर्शिते कस्यचित् ग्रन्थविशेषस्य यथार्थं व्याख्यानम् अधिकृत्य चर्चा प्रारब्धा। पदशाब्दिकात् स्पष्टप्रतिपत्ति ज्यायसी इति स्वामिन प्रत्यपादयन्। स्वामिभि आत्मप्रत्ययपूर्वकं प्रदत्तानि कानिचित् सूक्ष्मव्याख्यानानि प्रमाणानि स्पष्टीकरणानि प्राध्यापक-महोदयान् प्राभावयन्[१]। अस्मिन्

---

१ अस्मिन् समये उपस्थितया श्रीमत्या सेव्हियर-महोदयया अय

अवसरे स्वामिनाम् अद्भुतया स्मरणशक्त्या विस्मितचित्तं प्राध्यापक-महोदयं तद्रहस्ये पृष्टे सति स्वामिनः योगशास्त्रप्रतिपादित चित्तैकाग्र्यस्य अभ्यास निदानत्वेन निर्दिदिशु । स्वामिभि कचित् काल कीलनगरे वस्तव्यम् इति डॉयसन-महाभागा अभ्यर्थ्यन्त । ते स्वामिभि. सह नैकेषु विषयेषु चर्चां कर्तुम् ऐच्छन् । स्वामिनस्तु लण्डने प्रारब्धम् उद्योग दृढीकर्तुंकामा तत्र शीघ्र गन्तुम् उत्सुका सन्ति इति ज्ञात्वा प्राध्यापकै. ते गमनाय अनुमता । हॅम्बुर्ग-नगरे स्वामिन आसाद्य प्रा डॉयसन-महाभागा तै सह लण्डनम् अगच्छन् । तत्र सप्ताहद्वयम् उषित्वा ते स्वामिभि सह मन्त्रयमाणास् तस्थु । हिन्दुधर्मस्य रहस्य चेत् अवगन्तव्यम्, प्रथमम् भ पाश्चात्त्यैर्भवितुम् आवश्यकम् इति स्वामिभि सह नैकसभाषणोत्तर ते प्रत्येतु प्रवृत्ता ।

कॉण्टिनण्ट प्रस्थानात् पूर्वं स्वामिभि शारदानन्द स्वामिन गुडविनेन सह अमेरिकायै प्रेषिता आसन् । अधुना तै तत्र प्रारब्धस्य शोभनस्य कार्यस्य वृत्तान्ता आगन्तु प्रारभन्त । अचिरमेव स्वामिना स्वयंसंदेशानुसारेण अभेदानन्द-स्वामिनोऽपि आङ्ग्लभूमि प्राप्ता । आत्मन भारताय प्रस्थानोत्तर आङ्ग्लभूमौ कार्यानुवर्तनार्थम् अभेदानन्दान् ते तत्र स्थापयितुम् ऐच्छन् । तदनुसारेण तै अभेदानन्दाना प्रशिक्षणम् आरब्धम । सार्धमासात्मकेन विश्रामेन नवीकृतोत्साहास् ते स्वीय व्याख्यानादि-कार्यकलापमपि द्विगुणीचक्रु ।

ऑक्टोबर-नोव्हेम्बर-मासयो प्रदत्तानि व्याख्यानानि प्रायेण मायाविषयकाणि आसन् । कवयोऽपि यत्र मोहिता, सोऽयं विषय तै. 'माया, आभासश्च,' 'माया, ईश्वरकल्पनाया विकासश्च,' 'माया

(१७९ पृष्ठत )

मेलनवृत्तान्त पत्रार्पित कृतोऽस्ति । सा लिखति– 'The vigorous and lucid interpretations given by the Oriental exegetist with such firmness of conviction and yet such delicacy of perception, eventually quite won over the German savant '

स्वातन्त्र्य च,' इत्यादिशीर्षकं अनेकं व्याख्यानं प्रपञ्चित । एतद्-व्यतिरेकेण 'सर्वव्यापी ईश्वर,' 'साक्षात्कार,' 'अनेकेषु एकत्वम्,' 'आत्मस्वातन्त्र्यम्' इत्यादीन् विषयानपि अधिकृत्य स्वामिन व्याख्यानानि अददु । वर्गे ते राजयोगम् अपाठयन्, ध्यानाभ्यास च शिक्षयाचक्रु । स्वामिना वाचि कोऽपि अपूर्व प्रभाव आसीत् । वेदान्तस्य गहना सिद्धान्ता तै सुगमीकृत्य उपस्थापिता । दिव्यसामर्थ्यं तेषा प्रवचन शृण्वन्तो जना क्षणमात्रम् स्व व्यक्तित्व विस्मृत्य परतत्त्वे व्यलीयन्त इमेव । पौरमुख्यानाम् आलापकक्षेष्वपि स्वामिना प्रवचनानि समपद्यन्त ।

**प्रवृत्ति निवृत्ति द्वन्द्वम्**

स्वामिभि प्रयत्नविधृता निजा निवृत्तिप्रवणता अन्तरान्तरा उत्तिष्ठति स्म । २३ ऑगस्ट दिन ल्यूसेनंत प्रेषिते पत्रे ते लिखन्ति—'मया कार्यारम्भ कृतोऽस्ति । अधुना अन्ये तत् निर्वहन्तु । भवतु नाम कार्यार्थम्, मया द्रव्यस्पर्शनेन आत्मा दूषितोऽस्ति । कृतकृत्योऽस्मि । नाधुना वेदान्ते कर्मणि वा मम काऽपि आस्थाऽस्ति । चित्तशुद्ध्यर्थं कर्म आवश्यकम् इति उच्यते । पर्याप्तम् आसीत तन्मम ।' किंतु अस्मिन्नेव काले भारतस्था स्वे अनुयायिन तै एव प्रोत्साहिता—'मा भैष्ट । महान्ति कार्याणि अनुष्ठातव्यानि सन्ति, पुत्रका । समाश्वसित । उच्छ्रत । उत्तिष्ठध्वम् । अस्य कार्यस्य पृष्ठत परमेश्वरोऽस्ति । महाशक्ति युष्माक निकटे वर्तते ।' भारते 'ब्रह्मवादि'द्वारा स्वामिना सदेश प्रसर्तुं प्रवृत्त आसीत् ।

ऑक्टोबर मासे स्वामिना मनसि भारतनिवर्तन विचार: पुन पुन आगन्तु प्रारभत । अस्मिन्नेव मासि अभेदानन्दाना लण्डने प्रथम सार्वजनिक व्याख्यानम् अभूत् । सर्वाभिनन्दितेन तेन भाषणेन स्वामिन प्रसन्ना अभवन् । किं च, अधुना अस्मिन् अत्रत्य कार्यजात निक्षिप्य सुखेन गन्तु शक्यम् इति त अचिन्तयन् । डिसेम्बर-मास निश्चित । सर्वस्व सहृदय तै सह भारतगमनम्, तेषां कार्यार्थं च आत्मसमर्पण सेव्हियर-दम्पतीभ्या प्रागेव निर्धारितम् आसीत् । तौ स्वामिभि सह भारत गन्तु सिद्धौ । कुमार्या मार्गारेट नोबल महोदययापि स्वामिकार्यार्थं जीवित दिशितम् आसीत् । स्त्रीशिक्षणे तस्या माहात्म्य स्वामिन

अपेक्षन्त। किं तु सा कात्स्न्येन विमृशतु, पश्चात् च आगच्छतु इति स्वामिभि निर्णीतम्। कुमारी मुल्लर अपि पश्चात् आगन्त्री आसीत।

**शिवास्ते पन्थान सन्तु**

१३ डिसेम्बर दिने स्वामिना प्रस्थापन-सभा समपद्यत। स्वामिन द्रष्टु, तान श्रोतुम्, न्यूनतोन्यून तेषा काषायवस्त्राणि स्प्रष्टु जनौघा सभास्थानाभिमुखा अद्रवन्त। हृदयस्पर्शीनि भाषणानि अभवन्। अनेके शतशो जना नि शब्दा अतिष्ठन। केचित प्रत्यासन्न-अश्रुपाता आसन्। 'मिलिष्याम'। वयम् अवश्य पुनर्मिलिष्याम,' इत्युक्त्वा काषायवास स स्वामिन सचारि-सूर्यंकिरणायमाना जनमध्यात् प्रस्थिता।

'अद्वैतवेदान्त' इत्याख्यस्य स्वामिनाम् अन्तिमस्य व्याख्यानस्य निवेदनावसरे Indian Mirror इति-सञ्ज्ञकेन वृत्तपत्रेण इद विशिष्य निर्दिष्टम्, यत स्वामिना धर्मप्रसारेण न कापि कटुता निष्पन्ना। आङ्ग्लभूम्याम् स्वामिसन्निधानात् अनेकै जीविनगता काऽपि नवीना, कापि आश्वासयित्री दृष्टिर् लब्धा। सनातनान्यपि सत्यानि स्वामिना श्रीमुखात् निर्गत्य नवीनानि इव, चेतनानि इव सपनानि। कुमारी मार्गारेट नोबल लिखति — 'स्वामिनाम 'अह ब्रह्मास्मि' इति वचन न अपरिचितम् आसीत्। किं तु न केनापि तत् उच्चारितम् आसीत्[१०]। स्वय स्वामिन मपत्नेन कार्येण सतुष्टा आसन्। 'मया क्रमेण साफल्य सपादितम्। षड भिर् मासै अधुना प्रत्यह १२० जना पाठान् गृह्णन्ति। किं नाय विषय?' इति ते प्रस्थानात पूर्वम् अमेरिकीयाभ्य शिष्याभ्य प्रेषिते पत्रे लिखन्ति। अस्मिन्नेव पत्रे 'आङ्ग्लजन विषयका मम पूर्वग्रहा परिवर्तिता सन्ति। तेषा निष्ठा-सातत्य-गाम्भीर्यत्वादिगुणहेतो ते स्थान एव

१० 'It was the Swami s, 'I am God' that came as something always known, only never said before' अमेरिकायामपि एकस्मिन् दि०यक्षणे (१८९५) स्वामिना मुखात् एव वाणी निर्गता आसीत्—'अह स अपार महासागरोऽस्मि, यस्य ख्रिस्ता बुद्धाश्च तरङ्गा सन्ति।' (Christs and Buddhas are but waves on the boundless Ocean which I am)।

ईश्वरस्य प्रियतरा सन्ति[11] ' इत्युक्त्वा स्वीयाना पूर्वग्रहाणा दूषिततत्वम् ते ऋजुतया अङ्गीकृतम् अस्ति ।

**पिण्डेष्वनास्था खलु भौतिकेषु**

इत पूर्वम् अलब्धावकाशा एका घटना अधुना प्रस्थाननिर्देशात् पूर्वं निवेद्यते । एकदा आङ्ग्लभूमौ स्वामिन कुमारी मुल्लर तथा च अन्य कश्चिन आङ्ग्लपुरुष इत्येताभ्या सह पादचारम् असेवन्त । तदानी सहसा उद्गूरिततीक्ष्णशृङ्ग कश्चित महाकायो वृषभ तान् अभ्यधावत् । आङ्ग्लपुरुषस तावन् जङ्घाबलम् आश्रित्य आत्मत्राणम् अकरोत् । कुमारी मुल्लर कतिचित् पदानि धावित्वा लुप्तधैर्या तत्रैव भूमौ अवासदत् । स्वामिनस्तु ' अथ तर्हि अन्त, ' इत्युक्त्वा कुमारीवृषभयोर् मध्ये धावित्वा कुमारी पृष्ठत कृत्य उरोनिहितभुजा, वृषभचक्षुषि निरवात-निर्निमेषचक्षुष, तस्य उग्रनिपातम् उत्पश्यन्तस् तस्थु । कतिपयक्षण नन्तानन्त्रि-पश्चात् वृषभ अपससार । १६ डिसेम्बर दिन स्वामिन सेव्हियर दपतीभ्या सह भारताय प्रतस्थिरे ।[12]

* * *

---

११ ' My ideas about the English have been revolutionised I now understand why the Lord has blessed them above all other races They are steady, sincere to the backbone, with great depths of feeling ' पश्चात् कलिकातायां स्वागतोत्तर-भाषणेऽपि स्वामिन आङ्ग्लान् 'They are a nation of heroes they are the true Kshatriya,' इति अब्रुवन् ।

१२ तस्मिन्नेव दिन स्वामिना मित्रेण स्टर्डी-महोदयेन लिखितम्— ' Swami Vivekananda left to-day I am heavy hearted to-day at the loss of the noblest friend and the purest teacher I have met in this incarnation I must have stored some exceptional merit in the past to receive such a blessing now What I longed for all my life I have found in the Swami ' (पौरस्त्यपाश्चात्य शिष्य-विरचित The Life of Swami Vivekananda, p 540 )

# १५- पुनरागमनं संघटनाकार्यं च

भारतप्रस्थितानां स्वामिनां मनसि भारतं विहाय न कोऽपि अन्यो विचारः अधुना अन्तरं लेभे। समीपवर्तिनि प्रस्थाने अन्यतमेन आङ्ग्लमित्रेण ते पृष्टा आसन्, 'स्वामिन्! सुखभूमौ पश्चिमायां भवान् एतानि त्रिचतुराणि वर्षाणि उषितः। अधुना रोचिष्यते वा मातृभूः?' स्वामिभिः झटिति प्रत्युत्तरम् आसीत्, 'इत आगमनात् पूर्वं भारतम् अहम् अस्निह्यम्। अधुना तत्रत्या धूलिरपि मम पवित्रा भाति, वायुरपि पुण्यतां प्राप्तोऽस्ति। अधुना भारतं मम पुण्यभूमिः अस्ति तीर्थभूमिः अस्ति। एवमेव तीर्थमस्ति[1]।'

स्वामिनः मिलान–फ्लॉरेन्स–रोम द्वारा–स्थलवर्त्मना नेपल्स नौकाश्रयं[2] प्रापुः। मध्यमार्गे स्वामिभिः पिसा इत्यस्य प्रख्यातः 'प्रणतस्तम्भः[3]' अवलोकितः। फ्लॉरेन्स नगरे संचरद्भिः तैः यदृच्छया हेल दम्पती दृष्टौ। अनपेक्षितेन अनेन दर्शनेन प्रीतास् ते त्रयोऽपि सुखसंवादेन कमपि कालं निन्युः। रोमनगरे ते एकं सप्ताहं न्यवसन्। तत्र ते क्रैस्तानां धर्मोत्सवं प्रेक्षमाणा भारतीयसदृशान् आचारान् (केशकर्तनम्[4], प्रसादभक्षणम् इत्यादिकान्) उपालभन्त। उत्सवस्य विभवप्रचुरता तु न तेभ्यः अरोचत। नेपल्सागतैः स्वामिभिः नौप्रस्थानात् पूर्वम् अवशिष्टः कालः व्हेसुवियस इत्याख्यः ज्वालामुखः पर्वतः, भग्नावशेषं पॉम्पी-नगरम्

---

१ 'India I loved before I came away Now the very dust of India has become holy to me, the very air is now holy to me it is now the holy land the place of pilgrimage the Tirtha '

२ बंदर, a port

३ The Leaning Tower

४ Tonsure

इत्यादीनाम् अवलोकनेन नीत । ३० डिसेम्बर दिने नौ प्रस्थिता । तत्पूर्वमेव नावा आगत गुडविन तै सह सगत आसीत् ।

'नासीत् कश्चित् येशु खिस्तो नाम' : स्वप्न

अथ नौकाया नेपल्स-पोर्टसैदयो मध्यवर्तिन्या सत्याम् एकदा रात्रौ स्वामिभि एक अद्भुत स्वप्नो दृष्ट । स्वप्ने ते कंचित ऋषि-तुल्य श्मश्रुल पुरुषम् अपश्यन् । स तान् अवदत, 'इम प्रदेश सम्यक् निरीक्षस्व । त्वम् इदानी 'क्रीट' सञ्ज्ञके द्वीपे असि । अत्रैव ख्रैस्तधर्म प्रादुरभवत् । अह थेरापुत्राणाम्[५] अन्यतमोऽस्मि । यो धर्म अस्माभि उप दिष्ट, स एव ख्रैस्तं खिस्तोपदेशत्वेन अपदिश्यते । किं तु नासीत् कश्चित् येशु खिस्तो नाम ऐतिहासिक पुरुष । अत्र चेत् उत्खनन क्रियेत, एतदनुकूलानि प्रमाणानि उपलभ्येरन् ।' तेन एतावति उक्त स्वामिन जागरिता । स मध्यरात्र आसीत् । स्वामिभि ससंभ्रम प्रधाव्य कंचित् नौकाधिकारिणम् आसाद्य 'कुत्र वय स्म ? ' इति पृष्टम । 'क्रीटत ५० मैल्-दूरम्,' तेन प्रत्युक्तम् ।

एतत्पूर्वं येशो ऐतिहासिक-पुरुषत्वविषये न कदापि स्वामिन सन्दि-ग्ध । एतेन स्वप्नेन तु तेषा मनसि संशय उदैत् । किं तु एवम् उदित-संशयानामपि तेषा यशु प्रति भक्ति अशतोऽपि न अहीयत । 'अह चेत् येशुसमये अजीविष्यम् तस्य पादौ हृदयरुधिरेण अक्षालयिष्यम्, न अश्रु-जलेन,' इति ते एकदा अब्रुवन्[६] ।

---

५ Therapeutae इति मूले ।

६ आङ्ग्लभूमौ स्वामिनाम् अन्यतमो मित्र पुरातत्त्वविद् आसीत् । तस्मै स्वामिभि पत्र विलिख्य अयं स्वप्नवृत्तान्तो निवेदित । पश्चात् तस्मिन् देशे उत्खनने कृते ख्रैस्तधर्मस्य प्रादुर्भावविषये कानिचित् विस्मयकराणि प्रमाणानि लब्धानि इति वृत्त स्वामिनाम मरणोत्तर 'दि स्टेट्स्मन' पत्रे प्रकाशितम् अभवत् । ('The Life of Swami Vivekananda' by his Eastern and Western Disciples, p 545-547 )

नौकाया सहप्रवासिना मध्ये केचन ख्रैस्ता धर्मोपदेशका आसन्। हिन्दुधर्म-ख्रैस्तधर्मयो कतर श्रेयान् इति विषये ते स्वामिभि सह व्यवदन्त। स्वामिभिस् ते लील्यैव पराजिता । ततस् ते धर्मोपदेशका 'शेष कोपेन पूरयेत्' इति सुभाषित प्रमाणीकृत्य हिन्दुधर्मोपरि गालिप्रदान कर्तुं प्रवृत्ता । कियत्काल स्वामिभि सोढम्। अतिक्रान्तमर्यादास् तु तान् दृष्ट्वा स्वामिन तेषा मुखरतमम् उपगम्य त च कॉलरे गृहीत्वा अब्रुवन्, 'यदि मम धर्मं पुनरपि गालिप्रदान करिष्यसि, त्वाम् उत्क्षिप्य अस्मिन् समुद्रे क्षेप्स्यामि!' अशात परिहासेन अशानश्च गाम्भीर्येण उक्त स्वामिवचन श्रुत्वा स आपादमस्तक कम्पितुम् आरभत। न पुन हिन्दुधर्मनिन्दा स्वामिना वर्णपथम् आगता।

नौका एडन-नौकाश्रय प्राप्ता। तत्र अवतीर्य इतस्तत सचरन्त स्वामिन क्वचित् भारतीयम् अपश्यन्। अनेक-वर्षोत्तर भारतीय मुख दृष्ट्वा प्रमुदिता स्वामिन त्वरया तम् उपागच्छन्। ताम्बूलविक्रयी अय तदानी हुक्कया धूम्रपानरत आसीत्। तेन सह प्रीत्या प्रारब्धालापै स्वामिभि 'भ्रात! दीयता तावत्,' इत्युक्त्वा, तस्य हस्तात् हुक्का गृहीत्वा विस्मृतान्यसर्वै बहुकालवञ्चित धूम्रपान प्रारब्धम्। 'एतदर्थं तर्हि भवान् अस्मान् विहाय इत अत्वरायत!' अत्रान्तरे तान् आसाद्य तेषा पाश्चात्या मित्रा अब्रुवन्। सत्य ज्ञात्वा स पानविक्रयी तावत् स्वामिना चरणयो अपतत्।

अहर्निश विभक्तजला अग्रत सरन्ती नौका मार्गम् आक्रामत्। भारत क्रमेण प्रत्यासीदन् आसीत्। स्वामिभि 'कि भूतम्, कि च भव्यम्,' इति चिन्तित स्यात्। अमेरिका-युरोपयो यत् किंचित् कार्यं सपन्नम् आसीत्, तेन ते सतुष्टा आसन्। तै हिन्दुधर्म तत्र पर्याप्त परिचायित आसीत्। वेदान्त निवेदित आसीत्। भारतीया सस्कृति प्रतिपादिता आसीत्। बहव्या प्रशसका, शनकाश्च सुहृद, लब्धा आसन्। अनेके च नैष्ठिका अनुयायिन प्राप्ता, ये तत्र वेदान्तप्रसारम् अग्रेसर कुर्यु। एव कार्यांश सुसपन्न आसीत्। प्रदान सवृत्तम् आसीत्। कि तु अपर कार्यांश? आदानम्? भारतीयजनताया दारिद्र्यनिवारणार्थं पश्चिमात द्रव्यानयनम्? अय कार्यांश असफल एव आसीत्। धर्मप्रसार-

मार्गस् तै. कुतोऽपि निमित्तात् इद दुर्लक्षितमेव आसीत्। 'भारते एव द्रव्य सग्रहणीयम्, ' इति अधुना स्वामिभि चिन्तित स्यात्।

स्वागतोत्सव-मालिका

१५-१-१८९७ । उप काले एव लङ्कातट दृक्पथम् आगत । क्रमेण नारिकेलतरुमालिनी पीतवालुका कोलम्बो-वेला प्राप्ता । स्वामिभि नौकात तीरे दृष्टि विसृष्टा । तै महान् जलसागर तत्र दृष्ट । स आत्मन एव स्वागतार्थं सम्मिलितोऽस्ति इति ज्ञात्वा ते विस्मिता अभवन्। किं तु अय तावत् प्रारम्भ आसीत्। दक्षिणस्या कोलम्बतो न उत्तरस्याम् अल्मोरा यावत् सपत्स्यमानाया महत्या स्वागतोत्सवमालिकाया इय तावत् नान्दी आसीत्।

पुरा भारतात् प्रयाणकाले अबहुविदिता अपि स्वामिन सर्वधर्मपरिषदुत्तर भारते प्रख्यातिम् आप्नुवन्। प्रागेव १८९४ ख्रिस्ताब्दस्य सेप्टेम्बर-मासे कलिकातीयाना नागरिकाणा सभा श्री प्यारे-मोहन मुखर्जीनाम् आध्यक्ष्ये सपन्ना आसीत्, तया च स्वामिनाम् अमेरिकीय कार्यनिमित्त कृतज्ञताव्यञ्जक प्रस्ताव समत्य अमेरिकायै प्रेषित आसीत्। ब्रह्मवादि-प्रकाशनात् प्रभृति स्वामिना विचारा भारते प्रसर्तु प्रारब्धा आसन्। स्वामिभि आङ्ग्लभूमित प्रस्थानात् पूर्वं मद्रासे स्वशिष्येभ्य प्रस्थानदिनाङ्क निवेदित आसीत्। स्वामिनाम् अन्यतमो गुरुबन्धु निरञ्जनानन्द कोलम्बो गत आसीत्, शिवानन्दश्च मद्रासम्। तैन तेषा विदितागमनवृत्तान्तै जनै स्थाने स्थाने स्वागतसिद्धता प्रारब्धा आसीत्। स्वागतसमितय नियुक्ता आसन्। वृत्तपत्रैः सपादकीयलेखत स्वामिना कार्यमहत्त्व विशदीकृतम् आसीत्। प्रत्यह प्रकाश्यमानेन तेन तेन स्वामिगतेन वृत्तपत्रलेखनेन जनानाम् उत्सुकता परमोच्चकोटिम् आटीकिताऽऽसीत्। विवेकानन्दै हिन्दुधर्मस्य कन्धरा उन्नमिता आसीत्। अधुना भारतस्य उर गर्वोन्नमितम् आसीत्। स अधुना प्रगताना पाश्चात्याना राष्ट्राणा ससदि स्कन्धास्कन्धि ससमानम् उपवेष्टुम् अशक्नोत्। किमिति तर्हि अधृतशस्त्रस्यापि विश्वविजयिन, भारतीमातु अस्य सुपुत्रस्य स्वागतार्थं जनता सोत्साहा न स्यात्?

यत्र यत्र स्वामिन अगच्छन् — कोलम्बो, कॅण्डी, अनुराधापुरम्,

जाफना, पाम्बन, रामनाड[७], रामेश्वरम्, मानमदुरा, मदुरा, कुम्भकोणम्, त्रिचिरापल्ली,[८] मद्रास —तत्र तत्र जना स्वागतम् आप्लावयन्। पुष्पमाल्यभारैः स्वामिन नता। सिक्तसमार्जितासु रथ्यासु जनैः तोरणानि निहितानि। स्वामिना शोभायात्रा प्रवर्तिता। धनध्य न्यनदन्[९]। तेषाम उपरि अक्षतावृष्टि अभवत्। उत्साहपूरितैः जनैः अश्वान् अपसाय स्वय स्वामियानम् ऊढम।[१०] तिरुचिरापल्लीन समीपस्थे एकस्मिन् नातिमहति स्थानके अनेके जना स्वामिस्वागतार्थं संमिलिता आसन्। अत्र इद रेल्यान न तिष्ठति इति श्रुत्वा ते रेलमार्गे शयित्वा यानगति निरुद्धा। स्थाने स्थाने जनैः स्वागत व्याहृत्य स्वामिभ्य मानपत्राणि समर्पितानि। प्रतिवचनार्थं सभासु भाषित्वा भाषित्वा स्वामिन श्रान्ता। कोलम्बो-नगरे धर्मं राष्ट्रस्य पृष्ठवंशीकुरुत, तेनैव तत् जीवेत, 'इति तै उक्तम्। 'पुण्यभू भारतम्' तथा च 'विश्वधर्मं' इति विषयौ अधिकृत्य तै तत्र व्याख्याने अपि प्रदत्ते। रामेश्वरे 'न केवल मूर्तौ, दरिद्र-जनतायामपि शिव पश्यत,' इति ते उपादिशन्। मद्रासे स्वामिना प्रधान केन्द्रम आरोपित। तत्र सप्तदश तोरणानि उच्छ्रितानि आसन्। 'विवेकानन्द स्वामिन दीर्घायुष भवन्तु,' 'स्वागत देवसेवकाय,' 'स्वागत श्रीरामकृष्ण सुपुत्राय,' इत्यादिकानि दीप्ताक्षराणि स्वागतवाक्यानि तत्र तत्र व्यराजन्त। अथ स्वागतोत्सव नव दिनानि प्राचलत्। नैकभाषारचितानि २४ मानपत्राणि स्वामिभ्य समर्पितानि। अनेके जना स्वामिन स्वबन्धस्वामिन ( = ठाकुरस्य ) अवतारम् अमन्यन्त। तत्र स्वामिभि 'मम कार्ययोजना,' 'भारतीया ऋषय,' 'दैनदिन-जीविते वेदान्त,' तथा च 'भारतभविष्यम' इत्यादीन् विषयान्

७ स्वामिनाम आगमननिमित्त रामनाड-नरेशेन 'अकाल-निधि'-सञ्चयस्य घोषणा कृता। स्वामिना भारतभूमौ पदार्पण समानयितु तेन तस्मिन् स्थाने ४० फूट उत्सेध स्मारकस्तम्भोऽपि उच्छ्रित।

८ तिरुचिरापल्ल्या रेलयान महति प्रत्यूषे प्राप्नोत। तस्मिन् ब्राह्मे मुहूर्तेऽपि स्थानके १००० अधिका जना उपस्थिता आसन्।

९ रामनाडे

१० मद्रास रामनाडयो

अधिकृत्य भाषणानि प्रदत्तानि । अत्र स्वागतोत्सव अभूतपूर्व इत्येव वक्तु शक्यम् । मद्रासे तं अमेरिकीयाणा नागरिकविशेषाणां कृतज्ञता-पत्राणि, पुनरागमनार्थं निमन्त्रणपत्राणि च स्थानि । लोकमान्य-तिलकं अपि ते पुण्यपत्तनम् आगन्तु निमन्त्रिता । स्वामिन एकतस् तावत् पुण्यपत्तनं गन्तुम् उत्सुका आसन् । अन्यतस्तु अखण्डे सत्कारसमारोहै, तत्र च कर्तव्यं भाषणे श्रान्ता आसन् । ते हिमालयीन विश्रामम् अभ्य-लषन् । अत मध्येमार्गीयान् सत्कारो सवान् परिहर्तुं ते सामुद्रेण मार्गेण कलिकाता प्रस्थिता (१५-२-१८९७) ।

कलिकातायां

सियाल्दा स्थानके जनसमुदायेन सङ्कुलम् आसीत् । अत्रापि युवभि अश्वापसारणपूर्वं स्वय रथ ऊढ । शोभायात्राया सङ्कीर्तनदलस्य ताल-मृदङ्गानुगत नामघोष रथ्या अन्वनादयत् । दरभङ्गा महाराजस्य आभ्युदये स्वागतसमिति निर्मिता आसीत् । २८ फेब्रुअरी दिने सार्व-जनीन सत्कारसमारोह समपद्यत । राजा विनय कृष्णदेव बहादुर सभाध्यक्ष आसीत् । सभ्येषु अनके राज-महाराजा, सन्यासिन पण्डिता, विद्यार्थिन, पाश्चात्याश्च आसन् । स्वामिभ्य रौप्य करण्डकनिहित मानपत्र समर्पितम् । प्रतिवचनरूपेण भाषमाणं स्वामिभि श्रीरामकृष्ण-परमहंसानाम् अवतारत्वम् उद्घोषितम्, विश्वकल्याणार्थं च तस्य आदर्शस्य अनुसरणम् उपदिष्टम् । स्वामिनाम् एतद्भाषणविषये ' a speech that has become famous as a masterpiece of oratory, and of fervent patriotism This brought him recognition in an especial sense, as the Prophet of Modern India इति स्वामिना चरित-कारा ' पौरस्त्यपाश्चात्या शिष्या ' (पृ ५८५) वदन्ति ।

स्वामिना कलिकाता-निवर्तनोत्तर कतिपयं दिनं रामकृष्ण-जयन्ती प्राप्ता । स्वामिन दक्षिणेश्वरम् अगच्छन् । कालीदर्शनम् अन्वतिष्ठन् । तत रामकृष्णनिवासम् अगच्छन् । कंचित काल तत्र उपविष्टा अभवन् । ततो निर्गत्य स्वीयेभ्य पाश्चात्येभ्य शिष्येभ्य पञ्चवटयादिक सर्वं परिचर्यं प्रादर्शयन् । जनसमूहे ते श्री गिरीशचन्द्र घोषम् अपश्यन् । प्रसि-द्धोऽयं वङ्गीय नाटककार रामकृष्णानां दयित आसीत् । घोषमहोदयेन सह स्वामिभि ' ते हि नो दिवसा ' चर्चिता ।

स्वैरकथा.

एषु दिवसेषु स्वामिनः आलमबाजार मठे (वराहनगरात् स्थलान्तरिते) वा, 'सील्स मॅन्शन' इत्यत्र वा न्यवसन्। ते प्रत्यहं तान् द्रष्टुम्, तैः सह विचारविनिमयं कर्तुम्, उपदेशं वा ग्रहीतुं जनसंपातः प्रारब्धः। स्वामिनः विशिष्य युवकवर्गं प्रचोदयितुम् उत्सुकाः आसन्। ते तान् शक्तिं संपादयितुम्, आत्मविश्वासं च अभ्यसितुम् प्रेरयन्ति स्म। स्वामिनः दौर्बल्यम् अद्विषन्, आत्मनि अविश्वासम् अद्विषन्। बालविवाहनिषेधः तैः युवानः उपदिष्टाः। विशेषतश्च समाजसेवया ईश्वरं सेवितुं स्वामिनस् तान् उपदिदिशुः। एकदा एको युवा आगत्य आत्मना अनुष्ठितस्य पूजाजपादिकस्य निष्फलतां निवेद्य 'संप्रति द्वारं पिधाय, नेत्रे च निमील्य अहं ध्यानम् अभ्यस्यामि। न तु शान्तिम् उपलभे,' इति पर्यदेवयत्। तं स्वामिनः 'प्रथमम् द्वारम् उद्घाटय। मा नेत्रे निमीलय। इतस्ततः अवलोकय। परितः शतशः दीना जनाः सन्ति। तान् अवेक्षस्व। शुश्रूषस्व। शिक्षय। शान्तिं चेत् इच्छसि, तान् सेवस्व,' इति उपादिशन्। कश्चित् तरुणः प्राध्यापकः आगत्य स्वामिभिः सह व्यवदत्। 'मायापाशान् उच्छिद्य मुक्तिप्राप्तिर् नाम प्रथमं कर्तव्यम्। यं सेवाधर्मं भवान् उपदिशति, किं स मायान्तर्गतत्वात् न मायापाशवर्धकः?' स स्वामिनः अपृच्छत्। स्वामिनः झटिति प्रत्यूचुः, 'वेदान्तानुसारेण आत्मा नित्यमुक्तः। तथापि मुक्तिप्रयासस् तर्हि किं न मायान्तर्गतः?' मुक्तिविषये ते एकदा अवदन्, 'पुरा साधकावस्थायां मुक्त्यर्थं ताम्यन् अहम् अनेकदा प्रायोपवेशनमपि अभवम्। अधुना तु यावत् एकोऽपि जीवः मुक्तिवञ्चितस् तिष्ठति, तावत् किं मम मुक्त्या"?'

एष्वेव दिनेषु कश्चित् गोरक्षणकार्यकर्ता आगत्य गोरक्षणकार्यार्थं स्वामिनः द्रव्यम् अयाचत। तदानीं मध्यभारते उग्रस्य अकालस्य निमित्तं

११ मोक्षलाभोत्तरमेव एतादृशानि वचनानि (मुक्तस्य) शोभन्ते इति युक्तमेव 'पौरस्त्यपाश्चात्त्याः शिष्याः' विवेकानन्द-चरितकाराः (पृ ५९३) अभिप्रयन्ति। 'नास्ति अस्माकं मोक्षो नाम कश्चित् चिन्ताविषयः,' 'मोक्षम् तावत् अस्माकं करस्थितः,' इत्याद्यर्थानि सन्ततुकाराम-वचनानि प्रसिद्धान्येव।

लक्षश जना पञ्चत्व गता, गच्छन्तश्च आसन्। 'अहं प्रथम मानव-जीवत्राण करिष्यामि (I shall try to save men first), द्रव्य चेत् अवशिष्येत गोरक्षणार्थं दास्यामि,' स्वामिन अवदन्"। उपदेशप्रसङ्गेन एक शिष्य ते अवदन्, "पुरुषेण यत् प्रकृत्या प्रतीपोत्थानम्, यश्च स्वात्मरक्षणार्थं सघर्ष:, स चैतन्य प्रकृतित व्यवच्छिनत्ति। यत्र यत्र जीवनम्, तत्र तत्र सघर्ष, तत्र तत्र च आत्माविष्कार। गत्वा सर्वं भारतीय कथय, 'उत्तिष्ठ। जागृहि। अल स्वप्नदर्शनेन। आत्मानम् उत्थाप्य ईश्वराशम् आविष्कुरु"।' अन्तर्गतस्य चैतन्यस्य यदि स्वम् अभिज्ञ भवे, तर्हि नास्ति सा न्यूनता या न पूरयितु शक्नुया, नास्ति तत् दैन्य यत् अपसारयितु शक्नुया।"

राष्ट्रोद्धारार्थं सन्यासि-सघटना

न केवल बाह्या जना, स्वय गुरुबन्धवोऽपि स्वामिनाम् उपदेष्ट-

---

१२ इत पर सवाद स्वामिना क्षुरतीक्ष्णा वाच निदर्शयति। 'यदि अकालेन जना म्रियन्ते, स तेषा जन्मान्तरकृताना पापकर्मणा विपाक एव,' इति गोरक्षणकार्यकर्ता अवदत। कर्मविपाक-सिद्धान्तस्य अनेन दुरुपयोगेण क्रोधदीप्तमुखा स्वामिन 'तर्हि गावोऽपि स्वकर्मनिमित्तमेव म्रियन्ते इति कुतो न वक्तव्यम्?' इति प्रतिवन्दी झटिति अक्षिपन्। 'ननु शास्त्र गाम् अस्माक मातरम् अभिधत्ते,' इति गोरक्षकेण उक्ते' 'युक्तमाह शास्त्रम्। कान्या एतादृशान् नरर्षभान् प्रसुवीत!' इति स्वामिन तीक्ष्ण पर्यहसन्।

१३ "It is rebellion against Nature struggle for self preservation that differentiates Spirit from Matter Where there is life there is struggle, there is the manifestation of the Spirit * . Go and tell every Indian, 'Arise awake and dream no more! Rouse thyself and manifest the Divinity within' There is no want, there is no misery that you cannot remove by the consciousness of the power of the Spirit within"

* तुल्यता पुरा खेत्री-नरेश-समीपे स्वामिभि कृत जीवितलक्षणम् (पृ १०७)।

ध्यना गता । ते हि मोक्षैककाङ्क्षिण आसन् । येनत्वम् आत्मनुराय अस्पृहन्त । ध्यानधारणादिषु अरमन्त । निवृत्तिम् अभ्यलष्यन्त । स्वामिभि स्वीयविचारा तेषु सक्रामयितु प्रारब्धा । अनेकासु चर्चासु, वैयक्तिके च सभाषणप्रसङ्गे, क्वचित् अनुनयेन, क्वचित् प्रभुसमितै शब्दै, क्वचित् च विवादे स्वामिभि क्रमेण स्वीय समाजाभिमुखो धर्म तेषु सक्रामित । श्रीरामकृष्णानाम् अन्तरङ्गशिष्यत्वादेव तेषा मुक्ति प्रागेव सिद्धा आसीत् इति स्वामिन प्रत्यपादयन् । अधुना अन्येषाम् उद्धार तेषा कर्तव्य आसीत । रोग-दारिद्र्यादीनाम् उन्मूलन कर्तव्यम् आसीत् । नरे नारायण द्रष्टव्य आसीत् । रामकृष्णोपदेशस्य किमपि नवीन व्याख्यानमिव स्वामिभि- कृतम । न चाय सेवाधर्म एकाकितया पर्याप्तम् आचरितु शक्य इति कृत्वा तै सघटनाया आवश्यकता प्रतिपादिता । राष्ट्रोद्धारार्थं समर्पित- जीवितानां सन्यासिना सघटना अद्य आवश्यका,' इति ते मुहुर्मुहु प्रतिपादितवन्त ।

गुरुबन्धूना मत परिवर्तनम्

न ते गुरुबन्धव सर्वमेव इदम् आदौ तावत् सुखेन आत्मसात् कर्तुम् अशक्नुवन् । न हि पूर्वाभ्यास सुख परिवर्तनीय । 'युष्माक मार्ग गुरुदेवानाम् उपदेशेन न सगच्छते,' इति केनचित् गुरुबन्धुना उक्ते स्वामिन 'कथ नाम एव वक्षि ? किमर्थम् आत्मसीमासु श्रीरामकृष्णान् बन्द्धुम इच्छसि ? अह ता सीमा विच्छिद्य रामकृष्णोपदेश दशसु दिक्षु विकिरिष्यामि । यत्किचित् अह करोमि, तत्र श्रीरामकृष्णा एव कारयितार सन्ति । अनन्तय श्रीरामकृष्णाना असीमो महिमा तेषा शिष्यै ज्ञातुम । श्रीरामकृष्णानाम् एव कृपाकटाक्ष शतशोऽथ सहस्रश विवे- कानन्दान् निर्मातु क्षम '[१४] । तै अह निमित्तीकृतोऽस्मि । तेषाम् इच्छा मया अवश्य शिरसा धारणीया, ' इत्येवमादिक स्फुटितात्मविश्वास भाषमाणात् तस्य । तेषाम् उत्कटावेगेन तेन वचसा ते गुरुबन्धव लुप्तवाच इव

---

१४ 'One gracious glance of his eyes can create a hundred thousand Vivekanandas at this instant '

अभवन्। स्वामिनाम् अनुभाव असाधारण आसीत्। न कोऽपि तान् प्रतिरोद्धुम् अशक्नोत्।

अथैकदा परिहासकथाप्रसङ्गेन 'भक्तिद्वारा मुक्तिप्राप्ति इत्यय श्रीरामकृष्णानाम उपदेशस्य सारोऽस्ति। कथ विवेकानन्दाना समाज-सेवाधम श्रीरामकृष्णोपदेशन सगच्छते इति तैं स्पष्टीकर्तव्यम्,' इति केनचित् उक्तम्। स्वामिभि प्रत्युत्तर तावत् परिहासस्वरेण प्रारब्धम्। किं तु अचिरेणैव परिहास अलुप्यत। तेषा स्वर कठोर अभवत। नेत्रे अङ्गारमिव वर्षितु प्रारभताम्। प्रश्नकर्तारम् उपहासवचनै विदध्वा ते अगर्जन्, 'तव भक्तिर् नाम भावुक मौर्ख्यम् (sentimental nonsense)। सा वर्जनीया। न त्वया रामकृष्णा अवगना सन्ति। अपेहि[१५] यथा त्व रामकृष्णान् अवगच्छसि कस्य तेन प्रयोजनम्? कस्य तव भक्त्या मुक्त्या वा प्रयोजनम्? नरके चेन् पतितव्य स्यात्, कामम् अह शतवार नरके पतिष्यामि, तथापि अह तमोमग्नान् जनान् उत्थापयिष्यामि"।' स्वामिन आत्मन प्रभवितु नाशक्नुवन्। कम्पितसर्वाङ्गा प्रवत्ताश्रुधारास् ते ताडिति उत्थाय स्वकक्षम् अधावन्। द्वार पिधाय ध्यानस्था अभवन्। एकहोराम् एव स्थित्वा, आत्मान च स्थिरीकृत्य, पुनरपि पूर्वस्थलम् आगत्य ते शान्तै अब्रुवन्, 'न खलु नाह भक्तेर् माहात्म्यम् अवगच्छामि। किं तु भक्त्या मन पेलव भवति। कुसुमस्यापि स्पर्शासहम्। अतोऽह भक्त्युल्लासम् अवरुणध्मि। ज्ञानस्य लोहपाशै आत्मान बन्द्धु प्रयते। यत अद्यापि मया कर्म कर्तव्यम् अस्ति। अद्यापि मातृभूमे सेवा अपूर्णाऽस्ति। नाद्यापि मया सदेश कार्त्स्न्येन प्रदत्तोऽस्ति[१६]।' गुरुवन्धव अवागच्छन्।

---

१५ 'Hands off! who cares for your Ramakrishna? Who cares for your Bhakti and Mukti? I will go to hell cheerfully a thousand times, if I can rouse my countrymen, immersed in Tamas'

१६ अस्मिन् समय नाहम् उपन्यासमपि (novel) पठितु प्रभवामि इति स्वामिन अवोचन्। एतस्मात् मृदुभावासक्तिभयात् लेनिनोऽपि नाटकदर्शन परिहरति स्म इत्याहु।

स्वामिनाम् अधिकार ते अजानन् । रामकृष्णे ते नरेन्द्रनेतृका कृता आसन् । क्रमेण तेषा मन परिवर्तन जातम्[१७] । ते विवेकानन्दाना विचारान् अङ्गयकार्षु । देशसेवार्थम् – शिक्षणप्रदानार्थम्, रोगिसेवार्थम्, दारिद्र्यापसारणार्थम्, दीनसाहाय्यार्थम्, प्रचारक-प्रशिक्षणार्थम् – एका सन्यासिना सघटना स्थापनीया इति अङ्गीकृतम् अभवत् ।

रामकृष्ण-सघ.

१ मे दिने स्वामिभि बलराम-बाबूना गृहे एका सभा आहूता । गृहस्थाश्रमिण. तथा च सन्यासिन इति उभयेऽपि रामकृष्णाना भक्ता उपातिष्ठन्त । स्वामिभि विषय उपन्यस्त । ते अब्रुवन्, 'सघटना विना न किमपि चिरस्थायि कार्यं कर्तुं शक्यते । इय च सघटना चालकानुवर्तिनी अस्तु । न वयम् अद्यापि लोकानुवर्तित्वार्थं पर्याप्त धिषिता । चालकस्य आज्ञा सर्वे परिपालनीया । वय सर्वे रामकृष्णानुगामिन । अत अय सघ तेषामेव नाम्ना अङ्कितो भवतु । ' स्वामिना प्रस्ताव ऐकमत्येन समन अभवत् । एव ' रामकृष्ण-सघ ' (मिशन) उदपद्यत । स्वामी ब्रह्मानन्द कलिकातकेन्द्रस्य अध्यक्ष अभवत्, स्वामी योगानन्दश्च उपाध्यक्ष । विवेकानन्दस्वामिन सर्वाध्यक्षा अभवन् । अनेन सघन राम कृष्णै उपदिष्टानाम् आचरिताना च सिद्धान्ताना प्रसार कर्तव्य, तदनुकूला कार्यकलापा आयोजनीया, सर्वधर्मसमन्वयार्थं प्रयतितव्यम्, प्रचारकाणा प्रशिक्षणम् अङ्गीकर्तव्यम्, वेदान्तप्रसारः (स्वदेशे देशान्तरे च ) कर्तव्य, जनसेवार्थं मठा सेवाश्रमाश्च उद्घाटनीया इत्यादयो निर्णया अभवन् । सघस्य कार्यं कार्त्स्न्येन आध्यात्मिक भूतदयात्मक च भविष्यति, राजकीये कार्ये सह सघस्य कोऽपि सबन्ध न स्यात् इत्यपि स्पष्टीकृतम् । पश्चात् (१८९९) बेलूर मठ स्थापित अभवत् । तदानी

१७ गुरुबन्धूनाम् एतत्–परिवर्तनविषये 'Of the Swami's numerous triumphs one of the greatest was the conversion of his Gurubhais from individualistic to the national idea of religious life ' इति 'पौरस्त्यपाश्चात्त्या शिष्या ' विवेकानन्दचरितकारा (पृ ६००) अभिप्रयन्ति ।

सौकर्यार्थं वेदान्तप्रसार, सन्यासि-प्रशिक्षणम् इत्यादि कार्यं मठे निक्षिप्तम्, भूतदयात्मक च कार्यं रामकृष्ण-सघेन (Mission) अङ्गीकृतम्।

### उत्तरभारत-यात्रा

स्वामिन. हिमालयीने विविक्ते निवस्तु कुतोऽपि कालात् ऐच्छन्। तेषा क्षीण शारीर स्वास्थ्य विश्रामम् अपेक्षत। अतः ६ मे दिने ते अल्मोरा गन्तु प्रातिष्ठन्त*। अनेके गुरुबन्धव पाश्चात्याश्च शिष्या तान् अन्वगच्छन्। तत्र आयोजिते महति सत्कार-समारोहे स्वामिन अश्वारूढा भूत्वा शोभायात्राया सम्मिलन्। उत्तरभाषणावसरे तै भारतीय-मनसि हिमालयजनिता अध्यात्मप्रवणता प्रतिपादिता। अत्रान्तरे ख्रैस्ताना धर्मोपदेशकाना स्वामिविषयक निरर्गल निन्दाकाण्डम् अनुपरतम् आसीत्। स्वामिना भारतनिवर्तनात् किञ्चित् पूर्वं डॉ बॅरोज् (सर्वधर्मपरिषद कार्यकारी अध्यक्ष.[1]) भारतम् आगत आसीत्। इदानीम् अमेरिका निवृत्तमानेण तेन (१० मे) कुतोऽपि कारणात् – प्राय मात्सर्यवशात्–स्वामिना विषये यत्किमपि बहु उक्तम्। अमेरिकीय-स्त्री-द्वेष तेषु आरोपित। तेन स्वामिन व्यथिता अभूवन्। ३ जून दिने अल्मोरात प्रेषिते पत्रे ते लिखन्ति, 'I was born for the life of the scholar — retired, quiet, poring over my books[14] But the Mother dispenses otherwise' ९ जुलै दिने मिशनरी-कृतनिन्दया व्यथित-चित्ताय अन्यतमाय अमेरिकीयाय प्रियशिष्याय प्रेषिते सुदीर्घे भावनोत्कटे च पत्रे स्वामिन. लिखन्ति–

> 'भारतीयजनताया उद्धारार्थं चक्रवर्तनगबलेन मम मस्तिष्क दन्दह्यमानम् आसीत्। येनाप्यशेन मया तत्र साफल्यम् अवाप्तम्। . . के नाम मानवा ? प्रियकर (परमात्मा) सदैव सर्वत्र मम समीपे वर्तते, यथा स अमेरिकायाम् आसीत्। किं मे जनजल्पितेन ? बालो हि जन। मम जीवितकार्यं समाप्तमस्ति। अधुना अधिकतोऽधिक

---

* एतत्पूर्वमपि कतिपयात स्वामिन दार्जिलिङ्ग गत्वा तत्र उषिता. आसन्।

१८. लोकमान्य-तिलकादीनाम् अनेकेषा नियता नु इयमेव गमवस्था आसीत् !

त्रिचतुराण्येव जीवितवर्षाणि अवशिष्यन्ते"[19] । . . अधुना अहं सुखेन (अन्तिम) स्वपितुं शक्नुयाम् । नैकवारम् अहं पुनर्भूयासम्, दुःख-शतानि च अनुभूयासम्, येनाहम् एकमात्र सन्तं तं परमात्मानं पूज-यितुं शक्नुयाम् — स परमात्मा य एव अस्ति, यस्मिन् अहं विश्व-सिमि, सो जीवात्मसमष्टि, विशेषतश्च स खलनारायण, स दीननारायण, जातिभेदातीत स दरिद्रनारायण, यो मे पूजाविशेषस्य भाजनमस्ति । अन्या सर्वा मूर्ती भङ्क्त"[20] । '

तस्मिन् काले मुर्शिदावाद-विभागे अकाल उदपद्यत । तत्र अखण्डानन्द-स्वामिना अकालपीडितानां साहाय्यकार्यं प्रारब्धम् । स्वामिभि तस्य साहाय्यार्थं नित्यानन्द-सुरेश्वरानन्दौ प्रेषितौ । अल्मोरायां स्वामिनः सार्धं मासद्वयं न्यवसन् । प्रस्थानात् प्राक् तैं हिन्दी-भाषया एकं व्याख्यानं प्रदत्तम् । विश्रामेण अक्षत पुनरागतवद्भिः स्वामिभिः पञ्चाम्बु-कश्मीराभ्यां प्राप्तानि निमन्त्रणानि स्वीकृत्य तत्र मतप्रचारार्थं गन्तुं निरणीयत । तदनुसारेण ते अल्मोरां विहाय ९ ऑगस्ट दिने बरेलीं गता । ११ दिनाङ्के स्वामिनां प्रेरणया तत्रस्थानां विद्यार्थिनाम् एका समितिः वेदान्ताचरणार्थम् जनसाहाय्यार्थं च नियुक्ता अभवत् । अस्मिन् दिने ' अहं पञ्चपाणि वर्षाण्येव जीविष्यामि, ' इति अच्युतानन्द-समीपे स्वामिनः अवोचन् ।

बरेलीतः प्रस्थाय स्वामिनः अम्बालाम् अगच्छन् । तत्र हिन्दु-मुस्लिमयोः सहकारस्य प्रतीकभूतं हिन्दु-मुस्लिम-विद्यालयं तैं सानन्दं दृष्टं । ततः अमृतसर-धर्मशाला-रावलपिण्डी-मरी—मार्गेण ते वराह-मूलम् (बारामुल्ला) गताः । ततश्च नौकाम् आरुह्य ते श्रीनगरम्

१९ स्थूलाक्षरत्वम् अस्माकम् ।

२० ' And may I be born again and again and suffer thousands of miseries, so that I may worship the only God that exists, the only God I believe in, the sum total of all souls —and above all my God the wicked, my God the miserable, my God the poor, of all races, of all species is the especial object of my worship Break all other ideals ! '

अगच्छन् । तत्र जम्मू-नरेशस्य भ्राता सह ते मिलिता । होराद्वयव्याप्तेन सभाषणेन प्रभावितो राजा स्वामिना कार्ये साहाय्य प्रत्यशृणोत् । श्रीनगरात् स्वामिनः अनन्तनागम् अगच्छन्, ततश्च पद्भ्यामेव मार्तण्डम् । ततश्च अच्छाबलं गत्वा, तस्मात् स्थानात् प्रतिनिवृत्य ते जम्मू जग्मु । तत्रत्य प्रसिद्ध महाराज ग्रन्थालय तैं अवलोकित । बाबु महेशचन्द्र भट्टाचार्येण नाम्ना राजपुरुषेण सह तत्र मठस्थापनाविषये तैं चर्चा कृता । २३-१०-९७ दिने जम्मू-नरेशेन सह तेषा मेलनम् अभूत् । होरा-चतुष्टय-व्याप्ते अस्मिन् मेलने नैके विषया चर्चिता । तन्मध्ये स्पर्शा-स्पर्शविषयक अतिरेक स्वामिभि निन्दित । अत्रापि स्वामिभि हिन्दी-भाषया भाषणानि प्रदत्तानि । अत्र तथा च सियालकोटे प्रदत्तेषु भाषणेषु अनुष्ठानक्षमस्य धर्मस्य आवश्यकता स्वामिभि पुन पुनः प्रतिपादिता । सियालकोटे स्वामिना प्रेरणया स्त्रीशिक्षणार्थम् एका समिति स्थापिता अभवत् ।

लाहोरे

स्वामिभि सनातनीय-आर्यसमाजीययो मनोमिलनस्य प्रयास कृत । अत्र स्वामिनाम् अनेकानि व्याख्यानानि अभवन् । तृतीये व्याख्याने स्वामिभि सामर्थ्यस्य आत्मविश्वासस्य च महिमा गीतः । एतद्-व्याख्यान-विषये perhaps the finest lecture the Swami has given in India इति गुडविन लिखति । अत्रापि स्वामिभि प्रेरिता छात्रा दरिद्रसाहा-य्यार्थम् एका समितिम् अस्थापयन् । पञ्चाम्बु-प्रदेशे भक्तिसम्प्रदायस्य वैरल्य दृष्ट्वा तस्य पोषणार्थं वैष्णवाना सङ्कीर्तनपद्धति अत्र प्रवर्तनीया इति ते अवदन् ।

अत्रैव स्वामिन श्री तीर्थराम गोस्वामिना मिलिता । अयमेव गणित-प्राध्यापक पश्चात् स्वामी रामतीर्थ इति विख्यात अभवत् । तेषा गृहे भोजनोत्तर रक्तकण्ठे स्वामिभि 'जहाँ राम वहाँ काम नहीं,[२१] जहाँ काम, नहीं राम' इत्यादि गीति गीता । अल्पेनैव कालेन उभौ दृढ सख्यम् आपतु । प्रयाणसमये श्री तीर्थराम-महोदया स्वामिभ्य एक

२१ तुल्यताम् : 'मुखी राम त्या काम वाधू शकेना' (रामदास)

वस्त्रकोश-निधेय सौवर्णं घटीयन्त्र स्मरणीयम् इति उपायनीचक्रु । स्वामिभि तत् गृहीतम्, प्रीत्या परामृष्ट, पश्चाच्च 'अस्तु तर्हि, अत्रैव स्थापयित्वा अहम् इदम् उपयोक्ष्ये,' इत्युक्त्वा दातुरेव वस्त्रकोशे तत् निहितम् ।

लाहोरे दश दिनानि स्थित्वा ते डेहराडूनम् अगच्छन् । तत्र अस्वस्थशरीरै तै दश दिनानि विश्रमेण अतिवाहितानि । केवल ते तत्र वेदान्तसूत्राणा रामानुजीय भाष्यम् अध्यापयन् । तत दिल्ली-अलवार[22]-जयपुर-मार्गेण ते खेत्रीम् अगच्छन् । २० डिसेम्बर दिने तै राजप्रासादे वेदान्तम् अधिकृत्य व्याख्यान प्रदत्तम् । अस्मिन् व्याख्याने तै पाश्चात्त्येषु (प्लेटो-सॉक्रेटिसादिषु) भारतीयविचाराणा प्रभाव प्रदर्शित । अद्वैत-प्रतिपादनप्रसङ्गेन तै उक्तम्, यत् द्वैतप्रतिपादका ग्रन्था स्वय शङ्करा-चार्यै हठादाकृष्टा सन्ति, अद्वैतप्रतिपादकाश्च रामानुजाचार्यै । का अन्येषा कथा ? भारतस्य आधुनिकया धर्मावस्थाया विषये 'सम्प्रति भारते न कोऽपि हिन्दु, वेदान्ती वा अस्ति । सर्वे 'मा-स्पृश'वादिन सन्ति । पाकगृह देवमन्दिरायते, पाकपात्राणि च पूजोपकरणायन्ते ।' इति ते अव-दन् । सुहृद्भूतेन खेत्री नरेशेन सह कतिचित् दिनानि नी त्वा किशनगढ-अजमीर-जोधपुर-इन्दूर-खाण्डवा मार्गेण स्वामिन कलिकाता न्यवर्तन्त (जानुअरी १८९८) । अस्मिन् प्रवासे शतश जनै (विद्यार्थिभि, प्राध्यापकै, साधुभि, पण्डितै अन्यैश्च) सह स्वामिना चर्चा अभवन् । राष्ट्रनिर्माणक्षम हिन्दुधर्मस्य य शाश्वतोऽश स तै साग्रह प्रदर्शित । असख्यै जनै सार्वजनिकीषु सभासु स्वामिनाम् अभिनवा विचारा श्रुता । सामाजिकधर्मस्य परिपालनार्थं समितय नियुक्ता । एव व्याख्यानसचार

२२ अलवारे (अन्यत्र च) बहुभि स्वामिन भोजनार्थम् उपनिम-न्त्रिता । एकस्या धर्मशीलाया वृद्धाया गृहे तु स्वामिन स्वयमेव 'पुरा परिव्राजकाय मह्य त्वया स्थूला चपातिका भिक्षारूपेण परिवेषिता आसन् । ता मह्यम् अतीव अरोचन्त । अत पुनरा-गतोऽस्मि,' इति वदन्त अगच्छन् । भोजनोत्तरम् अस्या दरिद्र-वृद्धाया वृत्ते स्वामिभि गृहप्रमुखस्य हस्ते शतरूप्यकपत्र निवेदितम् ।

समाप्य अधुना कश्चित्कालं शिष्याणां प्रशिक्षणम् अवधातव्यम् इति स्वामिभिः चिन्तितम्।

स्वामिना कलिकातागमनोत्तरं कतिपयैः दिनैः बाबु नवगोपाल घोष इत्याख्यस्य श्रीरामकृष्णानाम् अन्यतमस्य भक्तस्य गृहे नवनिर्मिते रामकृष्ण-मन्दिरे मूर्तिप्रतिष्ठापना अभवत्। अस्मिन् अवसरे प्रचलिताया सकीर्तनयात्राया कण्ठावसक्त मृदङ्ग वादयन्त, मुखेन च रामकृष्ण-स्तुतिगीत गायन्त अनुयायिनः स्वामिनं समभिलन्। मूर्तिस्थापनोत्तरं तत्पुरत उपविश्य भक्तिपूर्णा स्वामिन

स्थापकाय च धर्मस्य सर्वधर्मस्वरूपिणे।
अवतारवरिष्ठाय रामकृष्णाय ते नमः॥

इति वन्दनं तत्क्षणं विरचयामासु।

अचिरमेव मठस्य नवभवनार्थं गङ्गातीरे बेलूर-ग्रामे भूमि (१५ एकर – मिता) अक्रीयत। तदर्थम् आवश्यकं धनं स्वामिनाम् उदारधी आङ्ग्लशिष्या कुमारी हेन्रीटा मुल्लर इत्यनया अर्पितम् आसीत्। पश्चात् श्रीमत्या ओल-बुल इत्यनया अमेरिकीयया शिष्ययाऽपि मठनिर्माणार्थं प्रभूतं धनं प्रदत्तम्, येन मठस्य आर्थिकी स्थितिः निश्चिन्ता अभवत। अस्मिन् वर्षे रामकृष्णजयन्त्यवसरे स्वामिभिः अब्राह्मणेभ्योऽपि त्रैवर्णिकेभ्यः भक्तेभ्य समन्त्रं यज्ञोपवीतं प्रदत्तम्, प्रतिदिनं च न्यूनतोन्यूनं शतवारं गायत्री जपितुम् उपदिष्टम्।

**भगिनी निवेदिता**

कु० मार्गारेट नोबल इत्यनया सह तस्या भारतागमनविषये १८९७ ग्रिम्नाब्दे स्वामिना पत्रव्यवहार सवृत्त आसीत्। विचारान्ते भारत-सेवार्थं भारतं गत्वा तत्रैव वस्तव्यम् इति कृतनिर्णया सा २८–१–९८ दिने भारतं प्राप्ता। स्वामिभि सा सर्वैः सह परिचायिता, ता च शनै अन्यत्र धार्याश्रमं तदनुकूलं च दैनन्दिनं जीवनं परिचाययितुं प्रारब्धम्। ११ मार्च दिने 'स्टार' प्रेक्षागृहे तस्या प्रथमं सार्वजनीनं भाषणम् अभवत्। तदानीं सभापतिभूतैः स्वामिभिः 'इदमन्यत्' चाङ्ग्लभूम्या भार-

२२ सेव्हियर-दम्पती, कुमारी मुल्लर इत्यादय अन्ये स्वामिनाम् अभिप्रेता आसन्।

लाय दत्तम् उपायनम्,' इति शब्दै सा परिचायिता । प्रथमेनैव तेन भाषणेन सा भारतीयभूम्या सह भारतीयमनांसि अपि प्रविष्टा ।[२४] ब्रह्मचर्यदीक्षाया स्वीकारपूर्वकं मार्गारेट नोबल भगिनी निवेदिता[२५] समपद्यत । 'अयि वत्से, शोभनं कृतं त्वया अत्र (भारते) आगच्छन्त्या,' इत्युक्त्वा भगवती माताजी ता पर्यभूष्णान् । अयम् एको महान् व्यतिकरः अभवत् । प्रथममेव एव पाश्चात्या स्त्री अन्तःप्रवेशम् अलभत । सा स्वामिना दयिता धर्मकन्या अभवत् ।

अस्मिन्नेव मासे स्वरूपानन्द सुरेश्वरानन्दयोः सन्यासदीक्षा सपन्ना । परिणीतवान् सन्नपि स्वरूपानन्द वैराग्याग्निना दह्यमान आसीत् । जीवितसमस्योपरि तेन प्रगाढं चिन्तितम् आसीत् । स्वामिभिः सह सजाते प्रदीर्घे सभाषणे तस्य निर्णय अभवत् । यैः सह स मठम् आगत आसीत् तेषां मुखेनैव 'मया सन्यासग्रहणं निर्णीतमस्ति,' इति सदेशं स गृहजनाय प्रैषयत् । स्वामिभिः पश्चात् 'प्रबुद्ध-भारत'स्य सपादकत्वं तस्मिन् निक्षिप्तम् । भगिन्यै प्रारम्भिका पाठा स्वरूपानन्द स्वामिनैव दत्ता । 'स्वरूपानन्दसदृशस्य कार्यकर्तुः लाभः सुवर्णराशीन् विहायापि अभिनन्दनीयः' इति पश्चात् स्वामिनः उदैरयन । एतावता कालेन श्रीमती ओल् बुल, तथा च कुमारी मॅक्-लिऑड इत्येते स्वामिनाम् अमेरिकीये शिष्ये बेलूर-मठे निवस्तु प्रारभताम् ।

३० मार्च दिने स्वामिनः दार्जिलिङ्गम् गताः । तत्र विश्रामार्थं ते कचित्कालं नेतुम् ऐच्छन् । किं तु कैश्चिदेव दिनैः कलिकातायाम् उद्भूतस्य प्लेगरोगस्य वार्ता श्रुत्वा ते कलिकाताम् आधावन् । नवावतारस्य अस्य रोगस्य प्रलयङ्कर ताण्डवं प्रवर्तमानम् आसीत् । तन्निवारणार्थं प्रयुक्तैः शासकीयैः कठोरैः नियमैः जना अधिकतरम् उद्वेजिता आसन । स्वामिभिः

२४ 'My dear friends and fellow-countrymen' इति सबोध्य तदानीं कु मुलरम् अपि भाषणं कृतवती ।

२५ जन्मनः पूर्वमेव सा तन्मात्रा प्रभवे निवेदिता (= समर्पिता) आसीत् । एतद् अजानद्भिः स्वामिभिः दीक्षोत्तरं प्रणामोत्पन्नता सा सहजस्फूर्त्या निवेदिता-शब्देन सबोधिता ।

जना आश्वासिता । स्वच्छताया आवश्यकता प्रतिपादिता । शासनस्य सहकार्येण शुश्रूषाकेन्द्र प्रारब्धम्। आवश्यकद्रव्यार्थं सति आवश्यके अचिरक्रीता मठभूमिमपि विक्रेतु ते सिद्धा आसन् । गच्छता कालेन रोगे सौम्यभावम् आपन्ने पूर्वयोजनानुसारेण ११ मे दिने अल्मोरा गन्तु ते प्रतस्थिरे।

अस्मिन् समये अनेके गुरुबन्धव स्वामिभि सह आसन् । श्रीमती ओल-बुल, कु मॅक्-लिऑड, भगिनी निवेदिता इत्येता अपि आसन् । प्रवासे पाश्चात्यशिष्यै भारतस्य भूगोल नेत्राभ्या दृष्ट, इतिहासश्च स्वामिमुखात् श्रुत । नदी वाऽस्तु, पर्वतो वाऽस्तु, नगर वाऽस्तु वृक्षराजिर् वाऽस्तु, पशु-पक्षिणो वा सन्तु – नासीत् कश्चित् भारतीय पदार्थ, यत्र स्वामिनाम् आस्था नासीत्। नासीत् किमपि नगर यस्य इतिहास स्वामिनाम अज्ञात आसीत्। ते हि न केवल भारतीय मनुष्यम्, धूले कण कणमपि अस्निह्यन्त"। पाश्चात्यै पूर्व वेदान्तप्रसारक एव दृष्ट आसीत। अधुना ते स्वामिस्य देशप्रेमी अपि दृष्ट । स्वामिमुखात् भारतीय ज्ञानवैशरूप्य श्रुत्वा ' अय कश्चित भारतस्य सचारी ज्ञानकोश एव ' इति पाश्चात्यशिष्या अमन्यन्त। नैनीताले विश्रम्य स्वामिन अल्मोराम अगच्छन । सेव्हियरदपती तत्र प्रागव क्रुतवसती आस्ताम। स्वामिन तेषाम् अतिथित्वम् अगच्छन् ।

### अल्मोराया शिष्यप्रशिक्षणम्

हिमालयस्य कुक्षिस्थ अल्मोरा-ग्राम स्वामिभि यथा स्वात्मार्थ वृत आसीत्, तथा शिष्यार्थऽपि । आत्मन स्वास्थ्यलाभार्थं यथा ते गौरी-गुरो पावन सन्निधिम् आवश्यकम् अमन्यन्त, तथैव पाश्चात्यशिष्याणा सस्कारार्थमपि । कलिकाताया प्रारब्ध पाश्चात्याना शिष्याणाम् — विशेषत निवेदिताया –प्रशिक्षण तै अत्र कठोरया रीत्या अनुवर्तितम् ।

---

२६ ' . there was not one city on which he did not look with tenderness and of whose history he was unaware ' ( ' The Life of Swami Vivekananda ' by his Eastern and Western Disciples, p 678 )

तस्याः सर्वे पूर्वग्रहा प्रमार्ष्टव्या आसन्। पाश्चात्यत्वस्य कार्त्स्न्येन त्यागपूर्वकं भारतीयीकरण संपादनीयम् आसीत्। गृहीत-ब्रह्मचर्यव्रताया तस्या पुरत स्वामिभि अनुकरणार्थं कर्मठा ब्राह्मणविधवा आदर्शत्वेन उपस्थापिता। भारतीयत्वम् आत्मसात् अकृत्वा न सा भारतीयान् यथार्थत सेवितु शक्नुयात् इति स्वामिन अमन्यन्त। नेय प्रक्रिया सुकरा आसीत्। निवेदिताऽपि तथैव तेजस्विनी आसीत्, मानमहती आसीत्, यथा स्वामिन। क्वचित् सघर्षा अभवन्। मनोमालिन्यम् अभवत्। किं तु निवेदिता सत्त्वशीला आसीत्। सा परीक्षाम् उदतरत्।

अथ सघर्षसमाप्तिवृत्तान्त स्वय भगिन्या निवेदितया निवेदितोऽस्ति। एकदा परिवारस्या काचित् पुरन्ध्री निवेदितया सह व्यवहारनैष्ठुर्यं शिथिलयितु स्वामिन अनुनिनाय। तैं अङ्गीकृतम्। साय निवेदिता-कक्षे प्राप्तै तै प्रतिपच्चन्द्रलेखा दृष्टा। ' आवामपि नवचन्द्रवन् नवजीवन प्रारभावहै, ' ते अवदन्। क्षितितले निहितजानु पुरत स्थिताया तस्या शिरसि स्वामिभि प्रसादहस्त निहित। निवेदिता लिखति—' नरेन्द्र स्पर्शमात्रेण ज्ञान प्रदास्यति इति श्रीरामकृष्णै पुरा उक्तम् आसीत्। अह तस्य निदर्शनमिव।' स्वामिभि शिरसि स्पृष्टमात्रे निवेदिता कुत्रापि अनन्ते आनन्दे विसृष्टदृष्टिम् आत्मानम् अलभत"।

अलमोराया प्रत्यह ये ज्ञानसङ्क्रान्तिबहुला प्रात सवादा अभवन् ते निवेदितया ' Notes of Some Wanderings with Swami Vivekananda ' इत्याख्ये पुस्तके सगृहीता सन्ति। रमणीयात् अस्मात् ग्रन्थात् उद्धरणोत्सुकानामपि अस्माकं ग्रन्थविस्तरभिया लेखनी सङ्कोचयत्यऽस्ति।

५ जून दिने द्वे निधनवृत्ते तेषा कर्णपथम् आगते। पवहारी बाबा, येभ्यो रामकृष्णादृते न कोऽपि श्रेष्ठ आसीत्, अवतार समाप्य निजधाम गता। उदकमण्डे वर्तमान तेषा निष्ठावान् सहायक, स्वाम्यर्थं त्यक्तजीवित ' माय फेथफुल ' गुडविन २ जून दिने लोकान्तर गत। स्वामिन व्यथितचित्ता अभवन्। एका सान्त्वनकरी कविता विरचय्य ते ता गुड-

२७ "...I found myself gazing deep into an Infinite Good..."

दिन-मात्रे प्रेषयन्। ते दुःख सग्रम्य गृहित प्रयतितम्। तथापि तत् स्पष्टदर्शनम् आसीन्। स्वामिभि अल्मोरा परित्यज्य कश्मीर गन्तु व्यवसितम्। ११ जून दिने ते अल्मोराम् अजहु*।

अल्मोरात प्रस्थिते स्वामिभि मध्येमार्गम् एक पर्वत सहप्रवासिभ्य प्रदर्शित। स किन्नरै अध्युषितोऽस्ति इति श्रूयते। 'अस्या' सिंहलमया श्रवणात् पूर्वमेव मया एक किनरो दृष्टोऽस्ति,' इति स्वामिन अवदन्। अस्मिन् पार्वते देशे स्वामिना शिवभक्ति केनापि अपूर्वेण उन्मेषेण उल्ललास। शिवमयत्वमिव आपन्नैस् तै विषयो नु शिवकथा शिष्येभ्य कथिता। मार्गोपान्तवर्तिना श्यीवृक्षाणाम्, मार्गगामिणा च यात्रिकाणा दर्शने ते अरमन्त। कथाप्रसङ्गेन कश्मीरस्य इतिहास ते निवेदित। एकदा केनापि उपोद्घातेन चेङ्गीजखानविषये 'न स लुण्ठाकमात्र आसीत। स जगत् एकीकर्तुम् ऐच्छत्। एष एव आत्मा सिकन्दर-चेङ्गीजखान-नेपोलियनरूपे आविर्भूत स्यात्,' इति ते अवदन्।

पूर्वोक्तेन मार्गेण श्रीनगरं गत्वा ते कश्मीरे इतस्ततः व्यचरन्। ४ जुलै अमेरिकायाः राष्ट्रियोत्सवदिवसः। तस्मिन् दिने स्वामिभिः स्वीयान् अमेरिकीयान् मित्रान् तोषयितुं महत्या युक्त्या अमेरिकीयध्वजं रहः सपाद्य प्रातःकालिके चायपानावसरे स उच्छ्रितः। '४ जुलै प्रति' इत्याख्या कविताऽपि स्वामिभिः प्रणीय पठिता। तस्याः कवितायाम् अनन्ते विलयपूर्विका निजा वैयक्तिकी मुक्तिरपि स्वामिभिः प्रार्थिता आसीत्। अहो दैवयोगः! चतुर्भिः वर्षैः ४ जुलै दिने एव स्वामिनः अनन्ते विलीना अभवन्।

## अमरनाथेन अमरवरदानम्

अमरनाथः यात्रिकान् सदैव आकर्षन् स्थितोऽस्ति। १० जुलै दिने स्वामिभिः एकाकिभिरेव तत्र गन्तुं प्रयतितम्। किं तु हिमविप्लवन मार्गरोधकारणात् तेषां निवर्तनीयम् आसीत्। २८ जुलै दिने अच्छावले वर्तमानैः स्वामिभिः यात्रिकैः सह अमरनाथगमनसंकल्पः उद्घोषितः। स्वामिनः शिष्यादयः पहल्ग्रामे स्थिताः। भगिनी निवेदितया सह स्वामिनः २०००–३००० सख्यान् यात्रिकान् उपगम्य तैः सम्मिलिताः। सर्वान् यात्रिकाचारान् यथोक्तं परिपालयन्तः प्रदर्शितादरैश्च यात्रिकैः सह रात्रौ धर्मचर्चां कुर्वन्तः स्वामिनः प्रयाणकं प्रतिप्रयाणकं २ ऑगस्ट दिने अमरनाथं प्रापुः। तत्र जलप्रवाहे स्नात्वा भस्मचर्चित-सर्वाङ्गाः कौपीनमात्रवाससः स्वामिनः गतत्रा कण्ठेः शिवजयकारं गर्जन्तः गुहां प्राविशन्। कर्पूरगौरं हिममयं शिवलिङ्गं दृष्ट्वा अष्टमात्त्विकोद्रेकाम् तैः दण्डवत् प्राणमन्। तैः भगवान् शिवः साक्षात् दृष्टः[२९]। 'अमरनाथेन मह्यं अमरवरदानं प्रदत्तम्, येन कार्यपूर्तौ स्वेच्छयैव अहं देहं विसृजयामि' इति ते पश्चात् सहासम् अब्रुवन्। दृष्टहिमलिङ्गमात्रा भगिनी निवेदिता

२९ " Shiva himself had appeared before him ... 'he entered the cave and came face to face with the Lord Himself' " ( The Life of Swami Vivekananda ' by his Eastern and Western Disciples, pp 718–719 )

तु स्वामिना साक्षाच्छिवदर्शन श्रुत्वा अनल्प दुर्मनायिता आसीत्। अस्मिन् समये भावावेगवशात् स्वामिना हृदय विगमोन्मुखम् आसीत्। केवल तत् विस्तीर्य अत्यन्ताय तथैव अतिष्ठत्।

८ ऑगस्ट दिने प्रस्थाय सर्वे श्रीनगरम् अगच्छन्। एपु दिनपु स्वामिन हिन्दुधर्म क्रियाशीलम् आक्रमक च (active and aggressive) कर्तुम् ऐच्छन्, तस्य 'मा-स्पृश'वाद निरस्य तस्मै 'मिशनरी' रूप दातुम् अभ्यलपन्। क्षमा-प्रतीकारविषये ते अवदन्, 'क्षमा शक्तस्य भूषणम्। न दुर्बलस्य। 'सन्यासि-गृहस्थयो धर्मभद' अप्रतीकार सन्यासि-धर्म। प्रतीकार गृहस्थधर्म,' इति ते व्याख्यन्। कश्मीरे एको मठ स्थापनीय, सस्कृत महाविद्यालयश्च उद्घाटनीय इति स्वामिनाम् अभिलाष आसीत्। कश्मीरे नरेशेन तदर्थं भूमिदान प्रतिश्रुतम् आसीत्, तस्य च निमन्त्रणानुसारेणैव स्वामिन तत्र गता आसन्। बह्वी चर्चा अभूत्। अन्ते तु आङ्ग्लशासनस्य तत्रस्थ-प्रतिनिधे प्रत्याख्यानवशात् नरेश भूमिदान असमर्थ अभवत्। स्वामिन श्रीनगर विहाय प्रस्थिता।

सहारक्रीडना प्रमत्तनर्तना

अमरनाथ-काले स्वामिन शिवभावेन आविष्टा आसन्। अधुना ते अम्बादर्शनार्थम् अताम्यन्। नावि तै कैस्यचित् मुस्लिम-नाविकस्य चतुर्वर्षा कन्या उमारूपेण पूजिता। 'यत्र यत्र मनो याति तत्र तत्र जगदम्बाया जीवत्सानिध्यम् अनुभवामीव,' इति ते सकृत् अवोचन्। तस्या साक्षात्कारार्थम् ते इदानीम् उन्मत्ता अभवन्। अस्या अवस्थाया उत्कटा कोटि गतैस् तै अन्ते स साक्षात्कार आसादित। तै अभिलषित सहारक्रीडनाया प्रमत्तनर्तनाया काल्या रूप साक्षात्कृतम्। तेन दिव्यानुभवेन विद्युद्दोषस्पृष्टैरिव कम्पमानै गात्रै तदानी तत्क्षण लेखनी गृहीत्वा तै 'Kali the Mother' (जगज्जननी काली) इत्याख्या कविता लिखिता। कवितासमाप्तौ लेखनी तेषा हस्तात् गलिता, ते स्वय नि शपक्षीणबला भूम्याम् अवासीदन्, काष्ठवच्च कियन्तमपि कालम् अशेरत। स्वामिरचितानाम् उत्कृष्टतमाना कवितानाम् अन्यतमाया अस्या कविताया एता पद्यनय पठ्यन्ताम्—

For Terror is Thy name
Death is in Thy breath
And every shaking step
Destroyes a world for e er
Thou 'Time,' the All-Destroyer !
Come, O Mother, come !
Who dares misery love
And hug the form of Death
Dance in Destruction's dance
To him the Mother comes

जगदम्बाया उग्रेण कालीरूपेण स्वामिना मन गृहीकृतम्। एतेषु दिवसेषु ते 'भय-दुःख-विपत्ति-विनाशेषु अपि जगदम्बाया आविर्भाव पश्यत, न केवल सौख्य-माधुर्येषु"। तस्या चण्डिकाया पूनर्येव अमरत्वम् आसादयितु शक्यम्। मृत्यु ध्यायत। चण्डिका पूजयत। ब्रह्मण सा अभिन्ना। तस्या शापोऽपि वर,' इति उपदिशन्ति स्म।[30]

**समाप्तो मे देशाभिमान**

उपर्युक्तात् प्रसङ्गात अनन्तर स्वामिन सहसा एकाकिन क्षीर-भवानीम् अगच्छन्। तत्र कतिचित् दिनानि उषित्वा ते जप-होमादिकम् अकुर्वन्। तीव्रया तपस्यया आत्मानम अक्लेशयन्। तत्रापि तै कुमारी पूजन कृतम्। ६ ऑक्टोबर दिन ते श्रीनगर प्रति न्यवर्तन्त। तदानी ते कात्स्न्र्येन रूपान्तरिता आसन्। समाप्त आसीत् सर्व कार्योत्साह। तै तत्र घटित एको निजानुभव निवेदित। एकदा तत्र आक्रामकै मुस्लिमै पुरा कृत देवीमन्दिरस्य विध्वस दृष्ट्वा व्यथितचित्तै स्वामिभि 'कथ नाम अप्रतिकुर्वन्तो जना इदम असहन्त? अह चेत् तदानीम

३० 'Learn to recognise the mother as instinctively in evil, terr or, sorrow and annihilation as in that which makes for sweetness and joy'

'कालोऽस्मि लोकक्षयकृत् प्रवृद्ध,' 'मृत्यु सर्वहरश्चाहम्' इत्यादि-गीताद्युक्तीनाम् अयम् अनुवाद इव।

अभविष्यम्, नाहमिदम् अन्वमस्ये । देव्या रक्षणपरोऽहं नाम प्राणत्यागम् अकरिष्यम्,' इति चिन्तितम् आसीत् । "एवं चिन्तयति मयि" स्वामिन अवदयन्, "मया देव्या अशरीरिणी वाक् श्रुता । देवी माम् अपृच्छत्, 'यदि नास्तिकः मम मूर्ति भ्रष्टना नीता, किं तव अनेन ? अपि त्वं मा रक्षसि, उत अहं त्वा रक्षामि ?'" इदं वृत्तान्त निवेद्य स्वामिन दीर्घम् उष्णं च निःश्वस्य उदेरयन्, 'नाधुना हरिः ॐ । इदानीं केवलं जगदम्बा ! समाप्तोऽस्ति मे देशाभिमान"।'

कश्मीरत प्रस्थाय स्वामिन १८ ऑक्टोबर दिने कलिकाता प्राप्नुवन् ।

कलिकाताम् आगता स्वामिन वैद्यनाथगमन वर्जयित्वा द्वितीयम् अमेरिकागमन (जून १८९९) यावत् स्वस्थान एव तस्थुः । एकं तावत्, तेषां शरीरम् अस्वस्थम् आसीत् । ते श्वासकृच्छ्रव्यथाम् अन्वभवन् । वामनेत्रे रक्तबिन्दु सचलित आसीत् । अत उपचारार्थं स्थानस्थिति आवश्यका आसीत् । अन्यत्, नवनवा ब्रह्मचारिण मठ प्राविशन् । तेषां प्रशिक्षणम् अवधारणीयम् आसीत् । बेलूर-मठस्य रचना अग्रत सरी आसीत् । तत्र ध्यानं प्रदातव्यम् आसीत् ।

१२ नोव्हेम्बर दिने निवेदिताया कन्या-विद्यालयस्य प्रारम्भ अभवत् । शिक्षण-विशेषज्ञा भगिनी विशेषत स्त्रीशिक्षणस्य हेतोरेव स्वामिभि अत्र निमन्त्रिता आसीत् । ९ डिसेम्बर दिने बेलूर-मठस्य वास्तुशान्ति अभवत् । श्रीरामकृष्णाना प्रतिमा तत्र प्रतिष्ठापिता अभवत् ।

३१ 'All my patriotism is gone'—पश्चात् कलिकाताया स्वामिभि अन्योऽप्येक क्षीरभवानीगत अनुभव निवेदित । विध्वस्तमन्दिर-स्थाने नूतन मन्दिर निर्मातव्यम् इति चिन्तयन्त एव स्वामिन 'अयि वत्स ! यदि तादृशी मे इच्छा स्यात्, अहमेव शतशो मन्दिराणि निर्मातुं समर्थाऽस्मि । अस्मिन्नेव स्थाने अस्मिन्नेव क्षणे सप्तभूमिक सुवर्णमन्दिर निर्मातुम् अहं समर्था अस्मि,' इति देवी-शब्दम् अशृण्वन् । एतं वृत्तान्तं निवेद्य स्वामिन अब्रुवन्, 'तदा-प्रभृति परित्यक्तमस्ति मया कार्ययोजनाना चिन्तनम् । यथा जगदम्बा इच्छति, तथैव भवतु ।'

अद्यापि भवनस्य निर्मितिः समाप्ता नासीत्, तथापि अन्तरान्तरा तत्र गत्वा स्वामिनः न्यवसन्। अयं मठः एकं पुण्यक्षेत्रं भविष्यति इति स्वामिनः उदप्रेक्षन्त। यदा मठः कात्स्र्न्येन विकसितो भवेत्, तदा मध्ये सन्यासिनः निवत्स्यन्ति, परितः गृहस्थाः, दक्षिणतः पाश्चात्यानाम् आवासः स्यात्, शिक्षामन्दिरे (Temple of Learning) गुरुकुलपद्धत्या अध्ययनं प्रचलिष्यति, मठे अन्नदानं विद्यादानं (व्यावहारिक) ज्ञानदानं (आध्यात्मिक) च इति त्रिविधं दानं भवेत् इत्यादयः अनेकाः कल्पनाः अस्मिन् काले कस्यचित् शिष्यस्य समीपे स्वामिभिः प्रकटीकृताः। अद्वैतप्रचारार्थं सर्वमिदम् ते आवश्यकम् अमन्यन्त। 'क्रियया अद्वैतप्रकटनात् ध्यानेन तस्य स्वयम् अनुभवनम् एव मह्यम् अधिकतरं रोचते,' इति शिष्येणोक्ते 'कोऽर्थः सर्वदा जडसमाधौ अवस्थानेन ? अद्वैतात् स्फूर्तिमासाद्य कुतो न शिववत् कंचित्कालं नर्तितव्यम्, कंचित्कालं च समाध्यवस्थायां स्थातव्यम् ?' इति स्वामिनः अपृच्छन्।

बेलूर मठ

२–१–१८९९ दिने नीलाम्बर मुखर्जीनाम् उद्यानगृहात्[१] बेलूरं प्रति मठः सङ्क्रान्तोऽभवत्। एतावता कालेन स्वामिना मठनिवासगता नियमसरणिः स्थिरीभूता आसीत्। अन्नशुद्धिविषये ब्रह्मचर्यपालनविषये च मठनिवासिभिः परमदक्षैः भवितव्यम् इति स्वामिनां कठोरो नियम आसीत्। बहिर्भूतं संसारिजगत् तैः यथाशक्यं परिहर्तव्यम्, तद्धि ब्रह्मचारिणां कृते भयसङ्कुलम् (' everything in the world is fraught with fear ) इति ते अमन्यन्त। नियमपालने तेषाम् आग्रह आसीत्। 'सर्वोऽपि नेता भवितुम् इच्छति, न अनुयायी,' इति ते वदन्ति स्म। 'प्रथमम् स्वात्मनि विश्वसिहि, पश्चात् ईश्वरे,' इति ते आत्मविश्वासमन्त्रम् अददुः। अल्पस्वल्पं कार्यमपि सावधानतया सौष्ठवेन च कर्तव्यम् इति ते आगृह्णन्। 'यः तमाखुना 'चिल्म्'-पूरणं सम्यक् जानाति स ध्यानाभ्यसनमपि जानाति। यश्च सुष्ठु पक्तुं न जानाति, न स उत्तमः सन्यासी भवितुं शक्नुयात्,' इति ते एकदा अब्रुवन्। उद्यानस्यादितान्

[१] अलमबाजारतः अत्र मठः सङ्क्रान्त आसीत्।

शारीरान् व्यापारान् कर्तुं ते शिष्या प्रचोदिता । 'स्नायुसवर्धन प्रारभध्वम्, पुत्रका !' ते अवोचन्, 'शरीरदण्डन सन्यासिन कुर्वन्तु नाम । कार्यकर्तृणा कृते नु वज्रसहनन शरीरम् (muscles of iron and nerves of steel) आवश्यकम् ।' स्वामिन २००० कार्यकरान् यून, ३०० दशलक्षमितानि च रूप्यकाणि अपेक्षन्त । भारतस्य आध्यात्मिक-पुनर्जन्मार्थं अपेक्षिताया अस्या सामग्र्या अभावेन ते कदाचित् निराशा अपि अभवन् । तथापि 'यथा तथा कर्म कर्तव्यम् । कुर्वन्नेवेह कर्माणि अह जीवित समापयिष्यामि,' इति ते अवदन् ।

१९ डिसेम्बर दिने स्वामिन वैद्यनाथ गता आसन् । तत कतिपयदिवसे निवृत्तमात्रे तं स्वामिनो शारदानन्द-तुरीयानन्दौ प्रचारकार्यार्थं गुर्जरदेश प्रेषितौ । पूर्ववङ्गे ढाक्का प्रति तं स्वामिनौ विरजानन्द प्रकाशानन्दौ प्रेषितौ । आदौ तावत् विरजानन्द आत्मनि अप्रत्ययात् गन्तुम् अनुत्सुक आसीत् । स साधनार्थं कचित् अवधिम् अयाचत । तत् श्रुत्वा स्वामिन 'निजमुक्तिमेव यदि कामयेथा, तर्हि नरक गमिष्यसि । परतत्त्वप्राप्ति चेदिच्छसि, आदौ अन्येषा मुक्त्यर्थं प्रयतस्व,' इत्येवमादिक कठोरेण स्वरेण अवदन् । पश्चात् सौम्यीभूय, युक्तिवचोभि तम् आश्वास्य, 'अह निजा शक्ति त्वयि सक्रमयिष्यामि, यत भगवान् सदैव तव पृष्ठवर्ती भविष्यति,' इत्युक्त्वा शक्तिसक्रान्त्या आहितबल त प्रकाशानन्देन सह स्वामिन प्रेषयामासु । एव्वेव दिनेषु श्री नाग-महाशया स्वामिनो द्रष्टुम् आगता । एते नाग-महाशया श्रीरामकृष्णाना परमभक्ता आसन् । तं आगत्य जीवच्छिवरूस्य दर्शनेन जनित आनन्द प्रकटीकृत । स्वामिना शरीर रत्नमञ्जूषेव कार्यचित्, अत स्वास्थ्यरक्षणे स्वामिभि सर्वात्मना अवहितै भवितव्यम् इत्यपि ते प्रेम्णा उपादिशन् ।

मायावत्याम् 'अद्वैताश्रम'

पाश्चात्यशिष्याणा प्रशिक्षणार्थ-निवासाय हिमालये मठस्थापना नाम स्वामिनाम् एक चिरसचित अभिलाष आसीत् । पुरा आल्मपवने यथाप्रसङ्गेन स्वामिनाम् इमम् अभिप्राय ज्ञा ना सेव्हियर दम्पतीभ्याम्

अथ कार्यभार स्वेच्छया अङ्गीकृत आसीत् । तदनुसारेण अधुना ताभ्या स्वामिना स्वरूपानन्देन सह अल्मोरा-विभागे सचर्य बहुनिरीक्षणोत्तर मायावती इत्याख्य स्थान वृतम् । ६८०० फूटोत्सेधम् इद स्थानम् अचिरमेव श्रीरा १८ मार्च दिने (श्रीरामकृष्ण-जयन्त्या) तत्र तौ निवासार्थं जग्मतु । अत्र मूर्तिपूजादिर किमपि द्वैतचिह्न मास्तु, केवलम् अद्वैतस्यैव अभ्यास अनुष्ठीयताम् इति सूचना स्पष्टं सार्द्रं स्वामिभि कृता"।

मार्च-मासे पुनरपि कलिकातायां प्लेग प्रादुर्भूत । पुनरपि रामकृष्ण-सघेण निवारक-यन्त्रणा उत्थापिता । भगिनी निवेदिता, तथा च स्वामी सदानन्द इत्येतयोर् हस्ते इद कार्यं निक्षिप्तम् । २१ एप्रिल दिने स्वामिभि कृतम् आवाहन समान्य विद्यार्थिभि एका माहात्म्यसमिति निर्मिता । समाजसेवैव धर्मं इति या स्वामिना दृढा मति आसीत्, तन्निदर्शन एक एतत्कालिक प्रसङ्ग श्री सखाराम गणेश देऊसकर महाभागन (तदानीतनेन हितवादी-सपादकेन) निवेदितोऽस्ति । एकदा ते द्वाभ्या मित्राभ्या सह (ययोर अन्यतर पञ्चाम्बुदेशीय आसीत) स्वामिन द्रष्टुम् अगच्छन् । पञ्चाम्बुगता शिक्षणावस्था, अतथान्यपरिस्थिति इत्यादिविषये चर्चा अभवत् । प्रस्थानसमय स पुरुष 'धर्मकथा श्रोतु-मना अहमत्र आगमम् । दौर्भाग्यतस्तु लौकिकविषयिकैव चर्चा अभवत् । व्यर्थं गतम् इद दिनम्, ' इति सप्रश्रयमपि खेदपूर्वम् उवाच । तत् श्रुत्वा सहसा गम्भीरा भूत्वा 'महाशय ! यावत्पर्यन्त मद्देशगत य कश्चित् श्वाऽपि अनर्वञ्चितोऽस्ति, तावत्पर्यन्त तस्मै अन्नदानमेव अह मम धर्मम् अवगच्छामि । अन्यत् सर्वम् अधार्मिकम्, आधर्मिक वा, ' इति स्वामिन उदीरयामासु । त्रयोऽपि नि शब्दा अभवन ।

पुनरपि पश्चिमागमनसकल्प स्वामिभि प्रागव डिसेम्बर मासे (१८९८) उद्घोषित आसीत् । तेषु अनुपस्थितेषु तत्र स्वामिभ्याम्

---

३३ 'Here will be taught and practised nothing but the Doctrine of Unity, pure and simple, and though in entire sympathy with all other systems, this Ashrama is dedicated to Advaita and Advaita alone,

अभदानन्द-शारदानन्दाभ्यां शोभनं कर्म अनुष्ठितम् आसीत्। अस्मिन् समये तैः स्वामिनः तुरीयानन्दम् आत्मना सह नेतुं व्यवसितम्। 'पुरा पाश्चात्यैः युयुत्सु क्षत्रियः[३४] दृष्टोऽस्ति। अधुना ते शमप्रधानं ब्राह्मणं पश्यन्तु' स्वामिनः अचिन्तयन्। वस्तुतः तुरीयानन्दः विविक्तप्रियः ध्यानाभ्यासरतश्च आसीत्। स्वामिभिः युक्तिवचोभिः तस्य मनःपरिवर्तनं कर्तुं बहु प्रयतितम् आसीत्। किं नु सर्वं भस्मनि हुतायितम् आसीत्। अन्ते तं कण्ठे आश्लिष्य, तस्य च वक्षसि शिरो निधाय, 'हरिभाई, किं न पश्यसि यद् एषोऽहं गुरुदेवादिष्टं कार्यम् अनुतिष्ठन् प्रत्यहं कणशः क्षणशश्च क्षीयमाणः आसन्नमृत्युः अस्मि? किं तत्र मम साहाय्यम् अनाचरन् एवमेव उदासीनवत् प्रेक्षमाणः स्थास्यसि?' इति आर्तरवेण स्वामिभिः विलपितम् आसीत्। तदा विश्रान्तिविरोधेन, गतसन्देहेन च तुरीयानन्देन धर्मप्रवणेन भूत्वा स्वामिकार्ये आत्मा प्रक्षिप्तः आसीत्। अतः स स्वामिनः अनुगन्तुं सिद्धोऽभवत्। कन्याशालायाः कार्यनिमित्तम् आङ्गलभूमिं प्रस्थिता निवेदिता अपि आङ्गलभूमिं यावत् तम् अन्वगच्छत्। भगवत्याः प्रीतिभोजनं कृतप्रस्थापनाः स्वामिनः 'मा अत्युच्चं ध्ययम् उद्दिशत। आदर्श-व्यवहारयोः समन्वयं कुरुत,' इत्येवंवादिनः शिष्यान् उपदिश्य २० जून दिने पश्चिमां गन्तुं 'गोल्कोण्डाम्' नौकाम् आरुरुहुः।

* * *

३४ = स्वयं स्वामिनः

## १६. पुनरपि विदेशगमनम्

कलिकाताताः प्रस्थिताः स्वामिनः मद्रास-कोलम्बो-एडन-मार्गेण ३१ जुलै दिने लण्डनं प्रापुः। मध्येमार्गं भगिनी-निवेदितया सह तेषां कियन्ति नु सम्भाषणानि अभवन्। अनन्तान् विषयान् उद्दिश्य तेषां विचारौघाः शब्दत्वम् आपद्य तेषां मुखकमलात् निःसस्रुः। भगिन्या ते The Master As I Saw Him इत्याख्ये पुस्तके अक्षरीकृताः सन्ति। अस्मात् विचारभाण्डागारात् उद्धरणं ग्रन्थगौरव-भयात् परिहृत्यापि एकं वचनं स्वामिनां वैयक्तिकजीवन-गामितया अत्र निर्दिश्यते। एकदा योगभ्रष्टस्य गतिं व्याच-क्षाणाः स्वामिनः 'तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम्,' इति गीतोक्तेः व्याख्यानावसरे सहसा ऊचुः, 'मार्गोट्[1] अहं पूर्वजन्म स्मरामि'! '

प्रस्थानसमये 'उद्बोधन' पत्राय लेखप्रपणं स्वामिभिः अङ्गीकृतम् आसीत्। अस्याः सागरयात्रायाम् इदमपि कार्यं तैः कृतम्। प्रसन्नया लीलामय्या शैल्या निबद्धाः, अन्तरान्तरा च तांस्तान् गम्भीरान् विचारान् स्पृशन्तः एते पत्रलेखाः पश्चात् 'परिव्राजक' इत्याख्ये पुस्तके सङ्गृहीताः अभवन्। स्वामिनस्तु चेत् तथा अभ्यरुप्स्यन्, ते पत्रीसमापनामा 'मार्क ट्वेन' भवितुम् अशक्ष्यन् इति एतद्विषये तेषां चरितकाराः 'पौरस्त्यपाश्चात्त्याः शिष्याः' अभिप्रयन्ति (पृ ८०१)।

---

१ पुरापि एकदा भारतं प्रति निवर्तनात् अचिरेणैव पुनर्जन्म-विषयकभाषणप्रसङ्गेन केनचित् 'स्वामिन्, अपि भवान् निजानि जन्मान्तराणि जानाति?' इति पृष्टे स्वामिभिः झटिति 'आम्, जानामि,' इति प्रत्युत्तरम् आसीत्। तद्विषये पर्यायेण प्रार्थितम् तु तैः '[illegible] जानामि। जानाम्येव। किन्तु [illegible] इदं [illegible]' इत्याख्यानम् आसीत्।

लण्डने नौकावतरे तेषां स्वागतार्थम् अनेके पूर्वपरिचिताः समागताः आसन्। तन्मध्ये डेट्रॉइटतः अन्यतमया सख्या सह आगता श्रीमती फुड्के अपि आसीत्। कस्मिंश्चित् भारतीये नियतकालिके पत्रे अस्वस्थशरीराणां स्वामिनां विदेशप्रयाणं श्रुत्वा तद्गतचिन्तया तेषां दर्शनमात्रहेतुना एतावन्तं दीर्घं सागराध्वानं प्लुत्वा सा आगता आसीत्। विम्बल्डन इत्यत्र सप्ताहद्वयं विश्रम्य अमेरिकीयाणां मित्राणां प्रार्थनाम् अङ्गीकृत्य १६ ऑगस्ट दिने तुरीयानन्देन तथा च श्रीमती फुड्के इत्यादिभिः सह स्वामिनः अमेरिकायै प्रतस्थिरे। अक्षुब्धः सागरः अनायासतरणीयः आसीत्। रात्रौ ज्योत्स्नास्नातं विश्वं नेत्राभ्यां पिबन्तः ते यात्रिका होरात्होरं तस्थुः। ''यदा तावत् इयं मायापि एवं रमणीया, का कथा तदधिष्ठानस्य परमतत्त्वस्य!'' इति स्वामिनः अनेकदा अवदन्," इति श्रीमती फुड्के लिखति।

स्वामिनः न्यूयॉर्कं प्रापुः। लेगेटदम्पती-प्रभृतिभिः तेषां हार्दं स्वागतं विहितम्। पूर्वपरिचिताः मिलिताः। स्वामिभिः तथा च तेषां भक्तिमद्भिः पाश्चात्त्यैः शिष्यैः इत्युभयैरपि पुनर्मिलनानन्दः अनुभूतः। कुशलप्रश्नाः निर्वृत्ताः। तदनन्तरं सपरिवाराः स्वामिनः लेगेट-दम्पत्योः 'रिजले मॅनॉर' इत्याख्यं पार्वतं निवासं गत्वा तत्र भाविकार्यादेशं प्रतीक्षमाणाः तस्थुः। मासेन भगिनी निवेदिताऽपि आगत्य तैः सङ्गता। अभेदानन्दः दूरे आसीत्। स तैः तन्नीसदेशं प्रेषयित्वा आहूतः। तन्मुखात् वेदान्त-सोसायटया कार्यजातं श्रुत्वा ते अमोदन्त। तुरीयानन्देनापि शीघ्रमेव मॉण्ट क्लेर इत्यत्र कार्यं प्रारब्धम्। स्वामिनाम् अमेरिका-प्राप्त्युत्तरं त्रिभिः सप्ताहैः लिखिते पत्रे कश्चित् अमेरिकीयः ब्रह्मचारी Swami Turiyananda has endeared himself to all who have met him, and his work is opening out to him in a hearty welcome from students of Vedanta इति लिखति।

देहान्तस्य पदरवः

समीपम् उपसर्पतः देहान्तस्य पदरवं स्वामिनः अन्तरान्तरा अशृण्वन् इव। एकदा ते अभेदानन्दम् अवोचन्, 'समाप्तप्रायोऽस्ति मम जीवितावधिः। अधिकतोऽधिकं त्रिचतुराणि वर्षाणि जीविष्यामि।'

तत 'अलम् ईदृशम् उक्त्वा । ननु दृश्यते भवत शरीरस्वास्थ्ये विशेष । अचिरेणैव भवान् पूर्ववत् प्रत्यागतबलो भविष्यति,' इति अभेदानन्देन उक्ते स्वामिन अब्रुवन्, 'भ्रात । न त्वम् अवगच्छसि । मम आत्मा इदानी तथा विस्तीर्णोऽस्ति यथा अय रक्तास्थिपञ्जरः न तम् इत पर बहुकाल धारयितु शक्नुयात् ।'

**व्याख्यानविक्रमः**

५ नोव्हेम्बर-पर्यन्त स्वामिन 'रिज्ले मॅनॉर' निवासे न्यवसन् । तत न्यू-यॉर्कम् आगत्य, तत्र सप्ताहद्वयम् उषित्वा ते कॅलिफोर्निया राज्यम् अगच्छन् (२२ नोव्हम्बर) । तेषा पूर्वतनेषु सचारेषु अय प्रदेश अदृष्ट आसीत् । लॉस एन्जलस, ओक्लॅण्ड, सॅन फ्रॅन्सिस्को, अलामेडा, पासाडेना इत्यादिषु स्थानेषु ते मासार्धमासम् उषित्वा व्याख्यानानि अवदु । कॅलिफोर्नियाया ते आहत्य षण् मासान् आसन् । अस्मिन् काले शताधिकानि व्याख्यानानि प्रदाय व्याख्यानविक्रमस्य कश्चित् उच्चाङ्क इव तै निर्मित । कृष्ण-बुद्ध-ख्रिस्त-महम्मदाना सदेशा, मनस शक्ति, ध्यानम्, मन शिक्षण, प्राणायाम, मनुष्य-निसर्गा, भक्ताभगवन्तौ, धर्माचरणम्, भारते कला-विज्ञाने, जीवेश्वरौ, उपासना, वेदान्त (तस्य सभवनीया भविष्यत्कालिकी विश्वधर्मता), रामायण-महाभारते, विश्व-रचना, प्रह्लाद-जडभरतादीना कथा इत्यादय विषया आसन् । दुर्दैव-वशात् भूयसा नैतानि व्याख्यानानि पत्रार्पितानि अभवन् । 'लॉस एञ्जल्स'-गतानि व्याख्यानानि उपवर्णयत् 'युनिटी' इत्याख्य नियत-कालिकम् एवम् अभिप्रैति- 'There is combined in the Swami Viveka nanda the learning of a university-president the dignity of an archbishop, with the grace and winsomeness of a free and natural child' अय व्याख्यानातिरेकस्तु न स्वामिना शरीरस्वास्थ्याय आसीत् । सॅन फ्रॅन्सिस्को, ओक्लॅण्ड, अलामेडा इत्यादिषु नगरेषु वेदान्तकेन्द्राणि उद्घाटितानि अभवन् ।

एकदा चलेषु लक्ष्येषु गोलिकासधानम् अभ्यस्यन्त कश्चित् युवक-गण स्वामिन अपश्यत् । तेषा प्रयत्नवैफल्येन जनितहासान् स्वामिन प्रति तेषाम् अन्यतम लक्ष्यवेधस्य आह्वानम् अददात् । स्वामिभि बन्दूक

गृहीत्वा क्रमेण एकमनु अन्यत् उपदशानि लक्ष्याणि विद्धानि। 'नूनम् अभ्यस्तो भवान्," इति तेन सादरम् उक्ते 'अथ मे प्रथमावसर ' इत्युक्त्या तान् अधिकतर विस्मयान्वितान् आपाद्य स्वामिन उपसजहर 'अत्र मन प्रणिधान कारणम्।'

कॅलिफोर्नियाया वर्तमाने स्वामिभि आश्रमार्थं भूमिदान लब्धम्। कुमारी मिनी सी बूक इत्याख्या तेषाम् अन्यतमा शिष्या सान्ता क्लारा इत्याख्ये प्रदेशविशेषे निविष्टा तस्या १६० एकर-मिता भूमि स्वामिभ्य आर्पयत्। जनसपर्कात् सर्वत दूरस्थितम् इद स्थान स्वामिभ्य अरोचत। 'शान्त्याश्रम ' इति तस्य स्थानस्य अन्वर्थक नाम अक्रियत। पश्चात् २ ऑगस्ट (१९००) दिने तुरीयानन्द द्वादशभि शिष्यै सह तत्र गत्वा ध्यानाधिकम् अध्यापयितु प्रारभत।

'प्रभो! एषोऽहम् आगच्छामि'

व्याख्यानातिरेकेण जनियाया श्रान्तेर् हेतोर् वा, सदैव प्रयत्नेन नियन्त्रिताया निवृत्त उच्छलनात् वा, एतत्कालिकेषु स्वामिना वचनोद्गारेषु सर्वकर्मपरित्यागपूर्वक अनन्ते विलयनेच्छा दरीदृश्यते। १८ एप्रिल दिने तै कुमारी मॅक् लिऑड इत्यस्यै प्रेषितस्य पत्रस्य कश्चित् अश अत्र उदाहरणरूपेण समुद्ध्रियते—

कर्म स्वभावत एव गहनम्। मम कर्मण यथा अत्यन्ताय विराम सपद्येत, मम च कार्त्स्न्येन जगदम्बाया विलय स्यात्, तथा प्रभु प्रार्थयस्व। तस्या कर्म सा जानाति शरीरस्वास्थ्यादपि आत्मस्वास्थ्यम् अनुभवामि। युद्धानि जितानि, हारितानि च। सर्वं वस्तुजातम् उपसहृत्य सप्रति त महान्त त्रानार प्रतिपालयामि। शिव, हे शिव, मम नौका तीर प्रापयस्व! अधुनाऽपि अह स एव बालोऽस्मि, येन पुरा दक्षिणेश्वरे वटवृक्षस्य अधस्तात् रामकृष्णानाम् अद्भुता वा दा वर्णीकृतप्राणेन श्रुता। तदेव मम स्वाभाव्यम्, यदिद कर्माचरणम्, परोपकारादिक वा, तत् सर्वम् आरोपितम्। अधुना पुनरपि गुरुदेवशब्द शृणोमि। भिद्यन्ते पाशा। शुष्यति स्नेह। नीरस भवति कर्म। समाप्तमस्ति जीवनाकर्षणम्। गुरुदेवशब्द विहाय न किमपि भाति। 'एषोऽहम् आगच्छामि। प्रभो! एषोऽहम् आगच्छामि।' "

कॅलिफोर्नियाया वर्तमानैः स्वामिभिः पॅरिस-नगर्यां सपत्स्यमानायाः धर्मेतिहास-परिषदः (Congress of the History of Religions) निमन्त्रणं प्राप्तम्। सर्वधर्म-परिषदः स्थाने इयं धर्मेतिहास-परिषद् आयोजिता आसीत्। धर्मतत्त्वानां विचारस्थाने धार्मिकसम्प्रदायानां केवलम् उद्भव-विकासयोः उपरि परिषदि चर्चा भवित्री आसीत्। स्वामिभिः परिषदि सम्मिलनं निर्णीतम्। वेदान्तकार्यस्य कॅलिफोर्नियायाम् अनुवर्तनार्थं तुरीयानन्द-प्रेषणं प्रतिश्रुत्य ते न्यूयॉर्कं गताः। तत्र कुमारी वाल्डो प्रभृतीनां भक्तानां सहवासम् अनुभूय, ताश्च आपृच्छ्य ते डेट्रॉइट गताः। तत्र कु. ग्रीनस्टिडेल इत्यस्या गृहे ते सप्ताहं व्यथाप्यन्। ततः पुनरपि न्यूयॉर्कं निवृत्य २० जुलै दिने ते पॅरिस-नगरीं गन्तुं प्रतस्थिरे।

तदानीं लेगेट-दम्पती पॅरिसे अवसताम्। तयोः सकाशात् प्रागेव सम्प्राप्तं निमन्त्रणम् अनुसृत्य स्वामिनः तेषाम् अतिथित्वम् अगच्छन्। पश्चात्तु फ्रेञ्च-भाषायाः श्रवण-भाषणयोः अभ्यासार्थं ते फ्रेञ्चमात्र-भाषिणः मोस्यू झूल्स ब्वा इत्यस्य गृहे वस्तुं गताः। धर्मेतिहास-परिषदि भाषणभाषण-विवादार्थम् आवश्यकस्य फ्रेञ्चभाषा-प्रभुत्वस्य सम्पादनार्थं तैः मासद्वयम् अभ्यासः कृतः[2]।

धर्मेतिहास परिषदि

वैदिको धर्मः निसर्गपूजाया विकासो वा न वा इत्यत्र विषये पाश्चात्यैः प्राच्यविद्यापण्डितैः सह विवदनं तेषु निक्षिप्तम् आसीत्। परिषदि अनेकवारम् उपस्थितैरपि स्वामिभिः प्रकृते अस्वास्थ्यहेतोः केवलं द्विरेव भाषणं कृतम्। शालग्राम-पूजा तथा च शिवलिङ्ग-पूजा इत्येनयोः विकासक्रमः गुस्ताव्ह ऑपर्ट इत्याख्येन जार्मण्य-पण्डितेन स्वीये निबन्धे प्रपञ्चित आसीत्। उभयोरपि मूले लिङ्गपूजाऽस्ति इति प्रदर्शयितुं तेन प्रयतितम् आसीत्। स्वामिभिः अस्य सिद्धान्तस्य प्रत्याख्यानं कृतम्। शिवलिङ्गस्य प्रभवः यूपस्तम्भः स्यात् इति तैः समसूचितम्। यथा यज्ञगताः ते ते विशेषाः तेषु तेषु शिवविभूतिविशेषेषु पश्चात्

२ स्वामिभिः फ्रेञ्चभाषाया अभ्यासः पुरा परिव्राजकावस्थायां भारते पोरबन्दरे एव प्रारब्ध आसीत्। (दृश्यतां पृ १०९)

-सङ्क्रान्ता आसन् (ज्वाला जटासु, सोमवाहन वृषभ शिववाहने वृषभे) तथैव यूपस्तम्भस्य शिवलिङ्गत्वापत्ति न असम्भवनीया इति स्वामिन अमन्यन्त। शिवलिङ्गस्य बौद्ध स्तूपप्रभवत्वमपि स्वामिभि पर्यायान्तरत्वेन ससूचितम्। शालग्रामशिला अपि बौद्धाना स्तूपगतं धातुगर्भ सदृशा स्वाभाविक्य शिला सन्ति, शालग्रामस्य तथा च शिवलिङ्गस्य इत्युभयोरपि शिश्नपूजामूलकत्वेन स्पष्टीकरणम् उत्प्रेक्षाविजृम्भणमात्रम्, य. कोऽपि च अत्र शिश्नरूपावभास स उत्तरकालिक-बौद्धधर्मप्रभाव-निमित्तक, अतश्च पश्चात्कालिक इति स्वामिन प्रत्यपादयन्।

द्वितीय व्याख्यान स्वामिभि बौद्धधर्मस्य, अन्येषा च भारतीयाना धर्माणा वेदप्रभवत्व प्रदर्शितम्। गीता महाभारते न पश्चात् निवेशिता-ऽस्ति, सा आदित एव तस्य अविभाज्य अवयवोऽस्ति, गीता गौतमबुद्धात् प्राचीना अस्ति इति उक्त्वा यदि सा बुद्धोत्तरकालगामिनी अभविष्यत्, कथमिव सर्वधर्माणा समन्वयकारिणी सा बुद्ध बौद्धधर्म च न निरदेक्ष्यत् इति ते अपृच्छन्। भारतीयकलासु नाट्ये, गणित-ज्योतिषादिषु च शास्त्रेषु ग्रीकाणा प्रभावोऽस्ति इत्यस्य मतस्यापि ते खण्डन कृतम्।

म्लेच्छा हि यवनास्तेषु सम्यक् शास्त्रमिद स्थितम्।
ऋषिवत् तेऽपि पूज्यन्ते किं पुनर्दैवविद् द्विज ॥

इत्येकमात्रश्लोकबलेन न ज्योतिषशास्त्रस्य ग्रीकप्रभवत्व स्थापयितु शक्यते, म्लेच्छानाम् आर्य-शिष्याणा प्रोत्साहनार्थं कृता इय स्तुतिर्निर्गता सम्भवति इति ते अवदन्। अस्तु मॅक्स-म्यूलरस्यैव युक्तिवाद स्वीकृत्य यावत्पर्यन्तम् एकोऽपि ग्रीकवेत्ता हिन्दु न शास्त्रे दर्शयितुम्,

अयुक्त तावत्काल हिन्दूना शास्त्रादिषु ग्रंवस्य प्रभावस्य कथामपि वर्तुम् इति ते सावधारणम् अवोचन् ।

**गौतमबुद्ध-रामकृष्णयो अभेदः**

पॅरिस-नगरे अनेकै पूर्वपरिचितै कुमारी मॅक्-लिऑड्, मादाम काल्व्हे, मादाम साराह् बेर्नहार्ट इत्यादिभि सह, कैश्चित् च नवीनै सह स्वामिना मेलनम् अभूत्। एतन्मध्ये स्वीयै गवेषणै विस्मापित-पाश्चात्यदेश डॉ जगदीशचन्द्र वसु अपि आसीत्। डॉ वसु महाभाग तदानीमेव सम्पद्यमानाया वैज्ञानिक-परिषदि सम्मिलितु तत्र आगत आसीत्। स्वामिन तद्विषये नितान्तम् अभिमानपूर्णा आसन्, त च 'the pride and glory of Bengal 'इति शब्दै निर्दिशन्ति स्म। परिषदुत्तर स्वामिन श्रीमत्या ओल-बुल इत्यस्या निमन्त्रणानुसार ब्रिटनी-प्रदेशे तस्या कुटी गत्वा तत्र कानिचित् दिनानि विश्राममम् अन्वभवन्। कतिपयदिनपूर्वं भगिनी निवेदिता आङ्ग्लभूमिं गता आसीत्। ता प्रस्थापयन्त स्वामिन 'Go forth into the world, and there, if I made you, be destroyed ' If Mother made you, live ' ' इत्यूचु । अस्मिन् काले तेषा मनसि भगवान बुद्ध तस्य च मतानि सदैव आवर्तन्त। बौद्धधर्म-हिन्दुधर्मयो भेद स्पष्टीकुर्वन्तस् ते एकदा अवोचन्, "बौद्धधर्म आह, 'सर्वोऽयं भ्रम इति अनुभवत।' हिन्दुधर्मस्तु आह, 'भ्रमस्य अधिष्ठानभूत सत्यम् अनुभवत।'" स्वामिन बुद्ध बौद्धधर्मं च हिन्दुधर्मं एव अन्तरभावयन्। निर्वाणोन्मुखेन दक्षिणपार्श्वशायिना तथागतेन अन्तिमक्षणे उपदेशार्थं प्राप्तेभ्य जनेभ्य अपि कूर्परम् अवष्टभ्य अर्धोत्थितेन सता धर्मोपदेश कृत इति वार्ता कथयित्वा स्वामिन सहसा अवोचन्, ' इद मया स्वय दृष्टमस्ति— श्रीरामकृष्ण-विषये। आसन्नमृत्युभिस् तैरपि उपदेशार्थम् आगत कश्चित् पुरुष उपदिश्यैव प्रतिप्रेषित।' स्वामिना मनसि गौतम-रामकृष्णयो अभेद इव आसीत्। शकराचार्यबुद्धि—गौतमहृदययो सगम ते मानवस्य परमादर्शम् अमन्यन्त, एतादृश च आदर्शसंगम निजे गुरुदेवे देहवद्धमिव अपश्यन्।

**अनुभवग्रन्थस्य अन्तिमानि पृष्ठानि**

फ्रान्सदेशे निवसता स्वामिना मासत्रयप्राय काल व्यतीत।

तस्मिन् शिशिरर्तौ मादाम काल्वे गायन-कार्यक्रम स्थगयित्वा ईजिप्त-देश गन्तुम् ऐच्छत् । तया स्वामिनोऽपि सह गन्तु प्रार्थिता । नवदेश-दिदृक्षव स्वामिन कु जोसेफाईन मॅक्-लिऑड् इत्यनया अनुगता २४ ऑक्टोबर दिने प्रस्थाय व्हिएन्ना-द्वारा रेलयानेन कॉन्स्टॅण्टिनोपल गत्वा तत्र नौकया अथेन्स, ततश्च ईजिप्तम् अगच्छन् । तै कैरो इत्यनस्य सग्रहालयो दृष्ट, स्फिङ्क्स तथा च पिरॅमिड्स इत्यादिकमपि अवलोकितम् । किं तु अधुना ते एतादृशेभ्य दर्शनेभ्य व्यावृत्त-कौतूहला अभवन् । सर्वस्यापि अस्य नश्वरस्य वैभवस्य मायामयत्व तेषा मनसि गभीरम आस्पदम् अकरोत् । मत्तस्य पॅरिसगतेभ्य अन्तिमदिवसेभ्य आरभ्यैव ते अन्तर्मुखा सवृत्ता आसन् । बाह्यतो व्यापृता अपि शून्यमनस्का आसन् । ' and here in Egypt it seemed as if he were turning the last pages in the Book of Experience ' इति 'पौरस्त्यपाश्चात्या शिष्या ' लिखन्ति (पृ ८२५) । तै सहसा भारतगमनस्य निर्णय कृत । तत्र अन्यदपि एक कारणम् आसीत । भारते तेषा अन्यतम पाश्चात्यो ऽनुयायी कॅप्टन सेव्हियर लोकान्तर गत आसीत् । स्वामिभि तत् ज्ञातम आसीत् । (कथम ? त एव जानन्ति ! ) प्रथमोपस्थिता नावम् आरुह्य ते प्रस्थिता, डिसेम्बर मासस्य च प्रथमे सप्ताहे भारत प्राप्ता । ९ डिसेम्बर दिने ते मध्यरात्रे अनपेक्षितागमना बेलूरमठ गुरुबन्धुमध्ये आसन् ।

'He had brought his body back to the funeral pyre, ' (स्वामिन देहविसर्जनार्थमिव पुनरागता ) इति शब्दै रोमा रोला (पृ १५६) इमम् अध्याय समापयति ।[५]

---

५ पुरा पश्चिमाया प्रथमयात्रात निवृत्तै स्वामिभि शक्त्युपासना, सघटनशीलता लोकतन्त्र च इत्यादिहेतो पाश्चात्या प्रशसिता आसन् । इदानीं तु सर्वस्यापि अस्य पृष्ठत स्वार्थप्रेरिता वाणिज्य-वृत्ति अवलोक्य ते उद्वेजिता अभवन् ।

## १७. महासमाधिः

स्वामिनां हृदयस्य आपद्दशा शोचनीयेव आसीत्। कॅप्टन सेव्हियर महोदय २८ ऑक्टोबर दिने हिम्न-लोकगामी सजात आसीत्। स्वामिन मायावती-आश्रम गन्तु प्रस्थिता। अभूतपूर्व शैत्यम् अनादृत्य ते तत्र ३ जानुअरी (१९०१) दिने सम्प्राप्ता। सेव्हियर-विषये भाषणप्रसङ्गे स तं 'हुतात्मा' (martyr) इति शब्देन सम्मानित। आश्रमदर्शनेन ते सन्तुष्टा अभवन्। मायावत्या 'धर्मधर'-विभाग तेभ्य बहु अरोचत। 'उत्तरायुषि निवृत्तोऽहम् अत्रैव जलाशयोपकण्ठे ग्रन्थलेखनेन गीत-गुञ्जनेन च काल नेष्यामि' इति ते सकृत् अवदन्। शारीरम् अस्वास्थ्यम् अविगणय्य अत्र तै 'प्रबुद्धभारत'-पत्रे किंचित् लेखनमपि कृतम्। सामाजिक-परिषद् सम्मेलने अध्यक्षीये भाषणे न्यायमूर्तिभि रानडे महोदयै सन्यासविषयका केचन विचारा प्रकटीकृता आसन्। तेषा देशभक्ति विचारौदार्यं च अङ्गीकृत्यापि तै कृतायाः सन्यासिनिन्दाया खण्डन स्वामिभि अन्यतमे निबन्धे कृतम्। अत्रैव नासदीयसूक्तस्य अनुवादोऽपि तै कृत। मायावती-आश्रमे कतिचित् दिनानि उषित्वा स्वामिन २४ जानुअरी दिने वेलूरमठ न्यवर्तन्त।

### पूर्ववङ्ग-तीर्थयात्रा

वेलूर-मठ निवृत्ता स्वामिन व्याधिग्रस्तत्वात् निषिद्धश्रमा सन्त आश्रमकार्यम् अवलोकयन्तः तस्थु। नूतना ब्रह्मचारिण प्रविष्टा आसन्। स्वामिनां सकल्पानुसारेण मठकार्यम् अग्रेसरम् आसीत्। दर्शनार्थिनाम्, उपदेश शुश्रूषा च न कदापि न्यूनता आसीत्। एव सप्त सप्ताहानि स्वामिन मठे अवात्सु। तत्र पूर्ववङ्गस्थाना जनाना

साग्रहाणि निमन्त्रणानि मानयितुं भुवनेश्वरीदेव्याश्च असम-पूर्ववङ्गयोः तीर्थयात्राभिलाषं पूरयितुं तत्रभवत्या सह स्वामिनः १८ मार्च दिने प्रस्थिताः। ते ढाक्का, चन्द्रनाथ, कामाख्या, गोलपारा, गोहाटी इत्यादीनि स्थानानि अगच्छन्। व्याख्यानानि अददुः। ब्रह्मपुत्रे सस्नुः। ततश्च ते निसर्गरमणीयं शिलॉङ्गम् अगच्छन्। अत्र तु तेषां प्राकृतिकम् अस्वास्थ्यम् अधिकतरमेव अवर्धत। मधुमेहेन ते पूर्वमेव ग्रस्ता आसन्। अधुना श्वासकृच्छ्रम् (asthma) पुनरपि तान् अपीडयत्। एकदा एवमेव श्वासकृच्छ्रेण आक्रान्ताः ते समीपवर्तिनमिव मृत्युम् आकलयन्तः 'ततः किम्? मया तावत् प्रदत्तम् अस्ति, यावत् १५०० वर्षाणि पर्याप्तं स्यात्,' इति उदीरयामासुः। प्रदत्तसंदेशाः ते आत्मानं कृतकृत्यम् अमन्यन्त। शुष्कवायु-शिलॉङ्गमपि प्रकृतिस्वास्थ्यार्थं अनुपकारकं दृष्ट्वा स्वामिनः मे मासस्य द्वितीये सप्ताहे बेलूर-मठं न्यवर्तन्त। अथ तेषाम् अन्तिमः सार्वजनिकः सचारः आसीत्।

कदाचित्... कदाचित्...

इदानीं मठं निवृत्ताः स्वामिनः व्यायामापेक्षिणः शारीरिककार्यस्य सर्वथा अशक्यत्वात् कदाचित् दर्शनागतेभ्यो जनेभ्यः उपदेशवचनानि श्रावयन्तः, कदाचित् तांस्तान् मठव्यापारान् निःशब्दम् अवलोकयन्तः, कदाचित् इतस्ततः ध्यानमग्नाः निर्विचारं वा सचरन्तः, कदाचित् पुस्तकानि पठन्तः, कदाचित् गुरुबन्धुभिः सह मन्त्रणां कुर्वन्तः, कदाचित् वातायनशरणाः मन्दिरशिखराणि वा अवलोकयन्तः भाविकार्याणि वा चिन्तयन्तः, कदाचित् 'व्याघ्र'संज्ञकेन शुना 'हंसी'नाम्न्या अजया 'मातु' इति कृतनामधेयेन अजशावेन वा सह क्रीडया आत्मनैव आत्मानं रमयन्तः, कदाचित् गीतानि गुञ्जन्तः, कदाचित् अन्यैः सह संकीर्तनानि गायन्तः, प्रत्यहं क्षीयमाणेन स्वास्थ्येन गुरुबन्धूनाम् अन्येषां च चिन्ताविषयभूताः तैश्च अहमहमिकया सेव्यमानाः प्रायः सप्त मासान् व्यथाम्यन्।

व्याधिः प्रत्यहं वर्धमान एव आसीत्। स्वामिनां पादौ उच्छूनौ अभवताम्, येन पादचारः दुष्करः अभवत्। नष्टप्रायैव च निद्रा। ते अधुना जीवने गतरसा इव अभवन्। तथापि 'I shall die in harness' (कुर्वन्नेवेह कर्तव्यकर्माणि अहं मरिष्यामि) इति ते एकदा शरच्चन्द्रम्

अब्रुवन्। कृत्स्नविश्रामार्थं प्रार्थितास्ते 'अयि पुत्रक ! कुतो मे विश्राम ? यत्तत् रामकृष्णे काली इति कृतसञ्ज्ञक किमपि, तेन रामकृष्णनिर्याणात् पूर्वं त्रिचतुराणि दिनानि आरभ्य गृहीत इव अस्मि। तत् मा सतत कर्मणि प्रेरयत् आस्ते, न च मह्य विश्रामस्य नामापि ग्रहीतुम् अवसर ददाति,' इत्यवादिषु ।

मातु उपयाचितपूरणम्

अस्मिन् वर्षे स्वामिभि मठे दुर्गापूजा महता वैभवेन सपादिता। दरिद्राणा कृते अन्नसत्रेण कृतम्। लक्ष्मीपूजा कालीपूजा च कृता। अस्मिनव अवसरे स्वामिभि स्वमातु एक बहुकालपूर्वं सकल्पितम् उपयाचितमपि पूरितम। एकदा बाल्ये नरेन्द्र केनापि असाध्येन रोगेण आक्रान्त आसीत्। तदानी मम पुत्रो नीरोगो भवतु, तेन तव यथोक्ता पूजा कारयिष्यामि, स च तव पुरत भूम्याम् आवर्तयिष्यामि इति भुवनेश्वरी-देव्या काली उपयाचिता आसीत्। एतावन्त कालम इद विस्मृतया तया इदानी तत् स्मृत्वा स्वामिन तस्य उपयाचितस्य विषय निवेदिता। मातृभक्ता स्वामिन कालीघाट गता, गङ्गाया स्नाता, आर्द्रवासस कालीमन्दिर प्राविशन्, देवीपुरतश्च भूम्या त्रि आवर्तन्त।

अस्मिन् वर्षे (१९०१) डिसेम्बरस्य उत्तरार्धे राष्ट्रसभाया (कांग्रेस) अधिवेशन कलिकातायाम् अभवत। तेन निमित्तेन कलिकाता गता अनके जना स्वामिन द्रष्टु बलूर-मठम् अगच्छन। स्वामिन तै सह प्राय हिन्दीभाषया व्यवहारम अकुर्वन्। चर्चितेषु विषयेषु अन्यतम आसीत् सस्कृत-महाविद्यालयस्य स्थापना। समाप्ति गच्छति अस्मिन् वर्षे द्वौ जापानीयो रेव्हरण्ड ओदा तथा च श्री ओकाकुरा इत्येतौ, भारतम् आगत्य स्वामिनश्च उपगम्य जपान सकल्पिताया धर्मपरिषदि समिलितु तान् प्रार्थयेताम्। पश्चात् श्री ओकाकुरा इत्यस्य प्रार्थनानुसारेण स्वामिन जानुअरी मासे (१९०२) तेन सह बुद्धगया जग्मु (तेषाम अन्तिमे वर्षापनदिने), ततश्च वाराणसीम्। स्वामिभि निज-भ्रमणारम्भ (नरेन्द्रावस्थायाम्) बुद्धगयागमनन कृत आसीत् (पृ. ७३)। अत समाप्तिरपि तत्रैव कर्तव्या इति उचितमेव इति भगिनी निवेदिता निपुणम् अभिप्रैति। परिषदि उपस्थानार्थं स्वामिन पुन पुनर निर्बध्य

ओंकारा महोदय वाराणसीत प्रस्थित । स्वामिन कंचित्काल तत्रैव अवसन् । स्वामिना प्रेरणया तत्र स्थानिकै युवभि यात्रिकाणा साहाय्यार्थम् एका समिति स्थापिता[1]। कतिचित दिनानि तत्र उपित्वा स्वामिन पुनरपि वेलूर-मठ न्यवर्तन्त ।

### दरिद्रनारायण सेवनम्

एपु दिनेषु केचित् सन्ताला कर्मकरा प्रत्यह कर्मार्थं मठम् आगच्छन्ति स्म । स्वामिन तै सह मिश्रीभूय सुखदु खालाप कुर्वन्ति स्म । एकदा स्वामिभि सर्वेऽपि ते आहूय मिष्टान्नेन सतर्पिता । 'यूय नारायणा स्थ । अद्य युष्मान् भोजयित्वा मया साक्षात् नारायण एव भोजित ,' इति स्वामिन तान् अवदन् । पश्चात् ते स्वमपि समीपस्थ शिष्यम् अवदन्, 'मया तेषु साक्षात् परमात्मा दृष्ट ।' दीनसेवैव धर्म इति स्वीय सिद्धान्त ते अन्त यावत् प्रतिपादयन्तस् तस्थु । एकदा ते अवोचन्, 'अलम् एतेन वेदान्ताध्ययनेन ध्यानाभ्यासेन च । तद् अन्यस्मिन् जन्मन्यपि कर्तुं शक्यम् । (Let the reading of the Vedanta and practising of meditation and the like be left for the next life ) इद तु शरीर सेवाया व्यापारयत । तेनैव युष्माक मा प्रति उपसत्ते सार्थक्य स्यात् ।' अनन्तर ते अब्रुवन्, "कियया नु तपस्याया अनन्तर मया इद पर तत्त्व ज्ञातमस्ति —परमात्मा सर्वेषु भूतेषु स्थितोऽस्ति । नास्ति अन्य परमात्मा नाम । य भूतानि सेवते, नून स परमात्मान सेवते ।' "

अस्मिन् वर्षे (१९०२) स्वामिन रामकृष्ण-जयन्ती-कार्यकलापे सम्मिलितु नाशक्नुवन् । पादश्वयथुना ते शय्यानिपातिता आसन् । द्वितीयभूमिभागगतात् स्वकक्षात् वातायनेन ते आगच्छन्ति सर्वान्नेव दृष्टानि । तेषाम् अनुपस्थानेन सर्वे दु खिता अभवन् । स्वामिभिस्तु 'जातस्य अस्य शरीरस्य नाश ध्रुव एव । यदि युष्माभि मे विचारा आत्मसात् कृता स्यु , न मे व्यर्थ जीवितम् । त्यागमेव परम तत्त्वम्

1 भगिनी निवेदिताया भारते आगमनम्, तस्याश्च मद्रासे २ फेब्रुअरी दिने कृत भाषण 'अमृतबाजार' पत्रिकात स्वामिना वाराणस्यां विदित अभवत् ।

इति जानीत,' इत्यादिकम् उक्त्वा शिष्या सान्त्विता । निरञ्जनानन्द-प्रभृतीना साग्रहा प्रार्थनाम् अङ्गीकृत्य स्वामिभि कविराज महानन्द सेनगुप्त इत्याख्याना सुविदिताना भिषग्वर्याणा चिकित्सा प्रारब्धा । पथ्यापथ्य कठोरम् आसीत् । जलपान—लवणभक्षणादिक वर्जनीयम् आसीत् । स्वामिभि २१ दिनानि जलबिन्दुरपि न गृहीत । परित्यक्त-देहात्मभावाना तेषा न तत् कठिनम् आसीत् ।

**ब्रह्मचर्य महिमा**

अस्या चिकित्सायां प्रारम्भात् कतिपयदिनपूर्वं Encyclopaedia Britannica इत्याख्यस्य ज्ञानकोशस्य पठन स्वामिभि प्रारब्धम् आसीत् । एकदा तस्य बृहदाकाराणि पञ्चविंशति खण्डानि दृष्ट्वा 'अशक्यम् एकस्मिन् जीविते इद सर्वम् आत्मसात् कर्तुम्,' इति शरच्चन्द्र चक्रवर्ती नाम तेषा शिष्य अब्रवीत् । तदा 'अस्य प्रथमेभ्य दशभ्य खण्डेभ्यः यत्किमपि मा पृच्छ,' इत्युक्त्वा स्वामिभि यद्यत् शरच्चन्द्र अपृच्छत् तस्य तस्य यथावत् उत्तर दत्तम् । पठितदशखण्डेस् ते अनेकदा मूलगता पदक्रमयोऽपि अनुज्झिताक्षरम् उद्धृता । शरच्चन्द्रे विस्मयेन अपहृत वाचि स्थिते 'ब्रह्मचर्यमहिमा अयम्,' इत्युक्त्वा 'ब्रह्मचर्यस्य अभावात् प्रतिदिनम् अस्मद्राष्ट्रस्य बुद्धिबले क्षीयेते, राष्ट्र च हीनपौरुष भवति' इति ते परिदेवयाचक्रु । क्षीणबला अपि स्वामिन मठस्य अनुशासन-विषये कठोरा आसन् । नियमाना परिपालन भवति वा न वा इति ते जागरूकतया पर्यवेक्षन्त । एकदा ध्यानस्य नियतकाले ते ध्यानागारम् अगच्छन । नैके जना अनुपस्थिता आसन् । स्वामिनाम् आगमनम् अनुद्रक्षितम् आसीत् । स्वामिभि एकैकम् आहूय, अनुपस्थितिकारण च पृष्ट्वा, ये दोषिण निर्णीता ते 'अद्य मठ भोजन न लप्स्यते । बहिर्गत्वा माधुकरीवृत्त्या अन्न सपाद्यताम्,' इति दण्डिता ।

**अन्त्ययो मासयो (मे जून)**

अनके अल्पस्वल्पा प्रसङ्गा अघटन्त य स्वामिनाम अवतार समाप्ते सूचका आसन । न तु तस्मिन् काले तेषा साभिप्रायता कस्यापि प्रत्यभात् । एकदा स्वामिभि सद्य आगत्य मेलनार्थं सर्वेभ्योऽपि स्वदत्त विदेशस्येभ्य शिष्येभ्य पत्राणि प्रेषितानि । गुरुबन्धून् स्वावलम्बनम्

धार्मयितुम् आदिश्य ते मठकार्येभ्य आत्मानं संहृत्य प्रविशन्ति । अन्तिमदिनात् एकसप्ताहपूर्वं ते पञ्चाङ्गम् आनाय्य तत् सौक्ष्म्येण अधीतम् । अनेकवार तस्य अध्ययनोत्तर तैः ४ जुलै दिवस देहविसर्जनार्थं निर्धारितः इति पश्चात् विदितम् अभवत् । १ जुलै दिने मठपरिसरे गङ्गातीरे इतस्तत सचरद्भिः तैः एक स्थान प्रेमानन्दाय प्रदर्श्य 'यदा अह देहविसर्जन करिष्यामि, अत्र दहन क्रियताम्,' इत्युक्तम् । बुधवासरे (२ जुलै) तैः उक्तम्, 'अह मरणार्थं सिद्धतासपादनपरोऽस्मि,' इति भगिनी निवेदिता लिखति । तस्मिन्नेव दिने एकादशीनिमित्तम् उपोषितैः तैः अन्यसमस्य शिष्यस्य[२] भोजनोत्तर प्रक्षालनार्थं तस्य हस्तयो उपरि जल दत्तम्, स्वय च तौ वस्त्रेण प्रमार्ष्टौ । 'ननु, स्वामिन् ! विपरीतम् इदम् । वस्तुत मयेद भवदर्थे कर्तव्यम,' इति स्वभावत एव शिष्येण अपराद्धेन इव उक्ते येशु स्वशिष्याणा पादप्रक्षालनम् अकरोत्,' इति स्वामिन अवोचन् । 'ननु तत्तावत् अन्तकाले,' इति जिह्वाग्रप्राप्त-शब्दान् शिष्य तथैव अगिलत् ।

अन्तिमो दिवस

४ जुलै, शुक्रवासर । अद्य स्वामिभि अष्ट-वादनत एकादशवादन यावत् ध्यानम अनुष्ठितम् । अस्मिन् समये तैः सर्वाणि वातायनानि द्वाराणि च दृढ पिहितानि आसन् । (पुरा एव कदापि नाभूत ।) तत अधो वर्तमाना मठवासिन तैः गीयमान 'श्यामा' गीतम् अशृण्वन् । तत अधोभूमिम् अवतीर्य इतस्तत सचरता तेषा मुखात् स्वगतमिव उच्चारिता एव शब्दा निर्गता 'यदि द्वितीय विवेकानन्द अभविष्यत् केवल स एव अज्ञास्यत्, यदनेन विवेकानन्देन कृतमस्ति । —तथापि, यथाकाल कियन्तो नु विवेकानन्दा जायेरन् अपि ।' एता प्रौढोक्तिं श्रुत्वा प्रेमानन्द विस्मित अभवत् । तस्मिन् दिने निजा नित्यसरणिं विहाय गुरुबन्धुभि सह स्वामिभि भोजन कृतम् । किं च तदानी तैः भोजने विशेषा रुचि प्रदर्शिता । भोजनोत्तर तैः शुद्धानन्दम् आदिश्य शुक्लयजुर्वेदसहिता, आनायिता त च

२ = भगिनी-निवेदितायाः (वि वि पडसे, 'स्वामी विवेकानंद' पृ ३६५, 'विवेकानंदकन्या निवेदिता' पृ १०८)

सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो भेकुरयो नाम। स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहा ॥

इतीमं मन्त्रं (माध्यं. स. १८.४०) सभाष्यं पठितुं ते आदिशन्। तदुपरि महीधरस्य व्याख्यानं श्रुत्वा 'नेदं व्याख्यानं मह्यं रोचते। एतादृशानां मन्त्राणां गूढार्थम् अन्विष्य तस्य प्रकाशने युष्माभिर् मच्छिष्यैः आदृतैः भवितव्यम्' इति ते अवोचन्। एक-वादनावसरे तैः व्याकरणपाठः प्रदत्तः। किंचिदूनं होरात्रय तैः लघुकौमुदी अध्यापिता। स्वभावत एव सूक्ष्मम् इमं विषयं ते सरसताम् आपाद्य अध्यापयितुं प्रयतन्ते स्म। पाठोत्तरं ते प्रेमानन्देन सह पादचारार्थं सुदूरं गताः। अस्मिन् समयेऽपि तैः स्वीया संस्कृतमहाविद्यालयस्य स्थापनेच्छा प्रकटीकृता। पादचारात् निवृत्तास् ते गुरुबन्धुभि. अन्यैश्च सह कंचित्कालम् आलपन्तस् तस्थु.। 'यदि भारतम् ईश्वरस्य अन्वेषणपरं तिष्ठेत्, तर्हि तत् अमरं भविष्यति। यदि तु तत् राजनीतौ समाजसंघर्षे च रमेत, तर्हि तत् विनश्येत्,' इति तेषाम् अन्तिमाः शब्दाः आसन्। स्वामिभिः सह इदम् अन्तिमं संभाषणम् अस्ति इति न स्वप्नेऽपि केनचित् चिन्तितम्।

**महासमाधिः**

सप्त-वादनावसरे स्वामिनः स्वकक्षं न्यवर्तन्त। अक्षमालाम् आनाय्य 'न केनापि ममाज्ञां विना आगत्य अन्तरायः कर्तव्यः' इत्यादिश्य द्वाराणि पिधाय गङ्गाभिमुखश्च उपविश्य तैः जपः ध्यानं च प्रारब्धम्। एकहोरानन्तरं तैः शिष्यम् आहूय द्वाराणि उद्घाटयितुं आत्मानं च वीजयितुं कथितम्। स्वामिनः शय्यायां शयिता. आसन्, ध्यानमग्ना वा सुप्ता वा। शिष्यः वीजयन् पादौ च संवाहयन् तस्थौ। प्राय. नव-वादनवेलायां स्वामिनां किंचिदिव हस्तकम्पः समजायत, तैश्च द्विवारं दीर्घं श्वसितम्। कंचित् निमेषं एवमेव ते द्वि दीर्घम् अश्वसन्। ततश्च तयोर् दृष्टि. भ्रुवोर् मध्ये स्थिरा अभवत्। किमपि च दैवं तेज. मुखं व्याप्नोत्। शिष्य. किमपि आशङ्क्य अन्यान् आह्वातुम् अधः अधावत्। विदितवृत्तान्ताः मठवासिन स्वामिकक्षम् अत्वरन्त। कदाचित् स्वामिन. समाधिमग्ना. स्यु. इति बुद्ध्या नित्यानन्द-निश्चयानन्दाभ्यां स्वामिनां नामग्रहणम् उच्चैः प्रारब्धम्। स्वामिनस्तु नववादनोत्तरं दशभिर् मिनिटैः अनन्ते विलीना आसन्।

अत्रान्तरे केनचित् गत्वा डॉ महेन्द्रनाथ मजुमदार महोदया आनीता । तैं कृत्रिमश्वसनादय उपाया प्रारब्धा । सर्वं तु व्यर्थम् । अन्ते मध्यरात्रावसरे तैं स्वामिना प्राणोत्क्रमणम् उद्घोषितम् । अन्येऽपि वैद्या प्राप्ता । मृत्युकारणविषय तु न तेषाम् ऐकमत्यम् अभवत् । स्वामिभि स्वेच्छयैव देहविसर्जन कृतम् इति तु मठवासिना दृढा मनि आसीत् । प्रभाते दृष्टम् यत् स्वामिना नत्रे आरक्ते आस्ताम्, तेषा च मुखनासिकाभ्या किंचित् रुधिर स्रुतम् आसीत् । मस्तिष्कगता रक्तवाहिनी छिन्ना स्यादिति वैद्या अब्रुवन् । भक्ता ब्रह्मरन्ध्रभेदम अमन्यन्त ।

सद्यत् प्राणोत्क्रमणे निश्चिते सर्वत्र वार्ता प्रेषिता । स्वय मठवासिनामपि इदम् अत्यन्तम् अनपेक्षितम् आसीत्, का कथा अन्यषाम् ? प्रभाते जना सपतितुम् आरभन्त । भगिनी निवेदिता आगत्य धर्मपितु मस्तकम् अङ्के निधाय नि शब्द वीजयन्ती तस्थौ। कर्मवीराणा विवेकानन्दाना शान्तससारस्खलन पार्थिवदेह शय्यायां निश्चेष्ट आसीत् । जीवविहग रक्तास्थिपञ्जरात नि सृत्य अनन्ते आकाश स्वैरविहारपर आसीत् । निर्विकल्प-समाधे प्रथमानुभवात् प्रभृति तस्य पुन प्रत्ययार्थं ताम्यन् जीवात्मा परमात्मनि विलीन आसीत् । जगदम्बाया निष्पापोऽयम् अर्भक पुनरपि तस्या अङ्के सुखसुप्त आसीत् । मरणसमये स्वामिना वय ३९ वर्षाणि, ५ मासा, २४ दिनानि आसीत् । 'नाह चत्वारिंशत्तम वर्षं समापयिष्यामि इति स्वामिना वाणी अवितथा सिद्धा आसीत् ।

कदाचित स्वामिन अद्यापि समाधित निर्वतिष्यन्ते इति आशासानाना मुग्धाना भक्ताना समाधानार्थं स्वामिना देह मध्याह्न यावत् तथैव स्थापित आसीत । तत उत्तर तु प्रतीक्षितुम् अनुचित मत्वा स्वामिना पार्थिवदेह अपराह्ण बहि आनीयत । तत्र घण्टा शङ्खादिषु निनदत्सु नीराजनसहितम् आरात्रिकम् अभवत् । ततश्च स्वामिभि आत्मन अन्त्यसस्कारार्थं प्रागेव निर्धारित स्थान प्रति महायात्रा प्रस्थिता । तदानी जनाना मुखात् एव जयकारः पुन पुन उदचरन्–

जय श्रीगुरुमहाराजकी जय । जय श्रीस्वामीमहाराजकी जय ।
जय श्रीसनातनधर्मकी जय ।

* * *

श्रीरामकृष्णस्तवनम् –

## तस्मात् त्वमेव शरणं मम दीनबन्धो

ॐ ह्रीम् ऋतं त्वमचलो गुणजित् गुणेड्यो
नक्तदिवं सकरुणं तव पादपद्मम्
मोहङ्कषं बहुकृतं न भजे यतोऽहं
तस्मात्त्वमेव शरणं मम दीनबन्धो ॥ १

भक्तिर्भगश्च भजनं भवभेदकारि
गच्छन्त्यलं सुविफलं गमनाय तत्त्वम् ।
वक्त्रोद्धृतन्तु हृदि मे न च भाति किंचित्
तस्मात्त्वमेव शरणं मम दीनबन्धो ॥ २

तेजस्तरन्ति तरसा त्वयि तृप्ततृष्णाः
रागे कृते ऋतपथे त्वयि रामकृष्णे ।
मर्त्यामृतं तव पदं मरणोर्मिनाशं
तस्मात्त्वमेव शरणं मम दीनबन्धो ॥ ३

कृत्यं करोति कलुषं कुहकान्तकारि
ष्णान्तं शिवं सुविमलं तव नाम नाथ ।
यस्मादहं त्वशरणो जगदेकगम्य
तस्मात्त्वमेव शरणं मम दीनबन्धो ॥ ४

विवेकानन्द.

# जय जय नरदेव

आचण्डालाप्रतिहतरयो यस्य प्रेमप्रवाहः
लोकातीतोऽप्यहह न जहौ लोककल्याणमार्गम् ।
त्रैलोक्येऽप्यप्रतिममहिमा जानकीप्राणबन्धो
भक्त्या ज्ञानं वृतवरवपुः सीतया यो हि रामः ॥ १

स्तब्धीकृत्य प्रलयकलितं वाहवोत्थं महान्तं
हित्वा रात्रिं प्रकृतिसहजामन्धतामिस्रमिश्राम् ।
गीतं शान्तं मधुरमपि यः सिंहनादं जगर्ज
सोऽयं जातः प्रथितपुरुषो रामकृष्णस्त्विदानीम् ॥ २

नरदेव देव जय जय नरदेव
शक्तिसमुद्रसमुत्थतरङ्गं दर्शितप्रेमविजृम्भितरङ्गम् ॥
संशयराक्षसनाशमहास्त्रं यामि गुरुं शरणं भववैद्यम् ।
नरदेव देव जय जय नरदेव ॥ ३

नरदेव देव जय जय नरदेव ।
अद्वयतत्त्वसमाहितचित्तं प्रोज्ज्वलभक्तिपटावृतवृत्तम् ॥
कर्मकलेवरमद्भुतचेष्टं यामि गुरुं शरणं भववैद्यम्
नरदेव देव जय जय नरदेव ॥ ४

विवेकानन्द.

# शुद्धिपत्रम्

| पृष्ठम् | पङ्क्ति | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| २० | ४ | व्यवहार | व्यहर |
| २३ | ५ | सत्य | साय |
| २९ | १५ | konwledge | Knowledge |
| ३३ | ३ | अत क्षण | तत्क्षण |
| ३४ | ४ | शक्तय | शक्तय |
| ४९ | २ | परिपालयम | प्रतिपालयस् |
| ५८ | २० | ददर्श | ददर्श |
| ६६ | २४ | युवान | युवान |
| ७२ | ६ | प्रवृता | प्रवृत्ता |
| ८८ | १२ | प्रासानोद्याना | प्रासादोद्याना |
| ९२ | उपान्त्या | disceples | disciples |
| ९३ | २५ | प्रमदानन्द | प्रमदादास |
| १२९ | १९ | firey | fiery |
| १३३ | १४ | Rindly | kindly |
| १४९ | १८ | fer | for |
| १५३ | २६ | इम | इम |
| १६४ | ५ | अवभन् | अभवन् |
| १८४ | २४ | Lea ıne | Leaning |
| १८७ | ८ | कोलम्वसोत | कोलम्बो-त |
| १८८ | ११ | धर्म | धर्म |
| १९१ | २७ | cousciousness | consciousness |
| १९६ | अन्तिमा | ideals | idols |

उत्कर्षार्थं समृद्धयर्थं
ऐक्यं सद्भावनास्तथा ।
प्रयत्नानां च सातत्यं
समस्तं कारणत्रयम् ॥

DIRECTOR OF PUBLICITY, GOVERNMENT
OF MAHARASHTRA BOMBAY